IBLIOTHECA INDICA:
A
OLLECTION OF ORIENTAL WORKS
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 339.




# सामवेदसंहिता ॥

# Sáma Veda Sañhitá,

WITH THE

## COMMENTARY OF SÁYAṆA ÁCHÁRYA.

EDITED BY
SATYAVRATA SÁMAŚRAMÍ.

( VOL. III. )

FASCICULUS I.

CALCUTTA.
PRINTED BY N. K. SIRKAR AT THE GANEŚA PRESS.
1876.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENG.

*No. 57, Park Street.*

## 1.—THE SOCIETY'S PUBLICATIONS.

### A. BIBLIOTHECA INDICA.

SANSKRIT WORKS COMPLETE.

*Old Series, Nos. 1 to 230 demi 8vo.*

The first two Lectures of the Sañhitá of the Rig Veda. Edited by Dr. E. Röer, Nos. 1 to 4, ... ... ...

Uttara Naishadha Charita, by S'riharsha, with a Commentary. Edited by Dr. E. Röer. 12 Fasciculi, ... ..

Chaitanya Chandrodaya Náṭaka, by Kavikarṇapura. Edited by Bábu Rájendralála Mitra. 3 Fasciculi, .. ...

Vásavadattá, by Subandhu, with its commentary entitled Darpaṇa. Edited by Professor F. E. Hall, M. A. 3 Fasciculi, ..

The Márkaṇḍeya Puráṇa. Edited by the Rev. K. M. Banerjea. 7 Fasciculi, ... ... ... ... ...

The Elements of Polity, by Kámandaki. Edited by Rájendralála Mitra. 3 Fasciculi, ... ... .. ..

*New Series, Nos. 1 to 268, demi 8vo.*

The S'rauta S'útra of A'svaláyana, with the Commentary of Gárgyá-Náráyaṇa. Edited by Paṇḍita Rámanáráyaṇa Vidyáratna 10 Fasciculi, .. ... ... .. ...

The S'añkara Vijaya of Anantánanda Giri. Edited by Paṇḍita Jayanáráyaṇa Tarkapañchánana. 3 Fasciculi, .. ...

Vaiśeshika Darsana, with the Commentaries of Sañkara Mis'ra &c. Edited by Paṇḍita Jayanáráyaṇa Tarkapañchánana. 5 Fasciculi,

The Nyáya Darsana of Gotama, with the Commentary of Vátsyáyana Edited by Paṇḍita Jayanáráyaṇa Tarkapañchánana. 3 Fasciculi,

Páli Grammar, by Kácchâyana, Edited by Dr. F. Mason. 2 Fasciculi,

The Das'a-Rúpa, with Dhanika's Commentary. Edited by Professor F. E. Hall, D. C. L. 3 Fasciculi, ... ... ...

The Aphorisms of S'áṇḍilya, with the commentary of Svapneśvara. Edited by J. R. Ballantyne, LL. D., .. ...

The Nárada Pancharátra. Edited by the Rev. K. M. Banerjea. 4 Fasciculi, ... ... .. .. ..

The Kaushítaki-Bráhmaṇa-Upanishad with Commentary and a translation by E. B. Cowell, M. A. 2 Fasciculi, ...

The Kávyádars'a of S'rí Dandin. Edited with a Commentary by Paṇḍita Premachandra Tarkavágis'a. 5 Fasciculi, ...

The Brihat Sanhitá of Varáha-Mihira. Edited by Dr. H. Kern, 7 Fasciculi, ... .. .. .. ..

The Maitri Upanishad with a commentary and a translation

[ ख ]

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES,

Nos. 339, 340, 342, 347, 348, 351, and 355 ?

---

# Sáma Veda Sañhitá.

WITH THE COMMENTARY OF

SA'YAṆA A'CHA'RYA.

EDITED BY

SATYAVRATA SA'MAS'RAMI',

EDITOR OF THE HINDU COMMENTATOR.

---

VOL. III.

---

**CALCUTTA.**

PRINTED BY N. K. SIRCAR, AT THE GANES'A PRESS.

1876.

# सामवेदसंहिता,

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहिता।

—∞—

श्रीलश्री

वङ्गदेशीयासियाटीक्-समाजाभ्यर्थनया

———000———

अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन

श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण

वङ्गसामगेन

टीकिता यथावसरं शोधिता च।

———000———

तृतीयो भागः

## उत्तरार्च्चिकः

प्रथमादि-प्रपाठकत्रयात्मकः॥

कलिकाता

गणेशयन्त्रे मुद्रितः।

शाकाः १९२३।

मन्त्रप्रतीकम् पृष्ठम्

मन्त्रप्रतीकम् पृष्ठम्

मन्त्रप्रतीकम् ... पृष्ठम्

मन्त्रप्रतीकम् … पृष्ठम्

[ क ]

मन्त्रप्रतीकम् | पृष्ठम्

मन्त्रप्रतीकम् पृष्ठम्

मन्त्रप्रतीकम् ... पृष्ठम्

मन्त्रप्रतीकम् पृष्ठम्

मन्त्रप्रतीकम् पृष्ठम्

| मन्त्रप्रतीकम् | पृष्ठम् |
|---|---|

॥ ॐ नमः सामवेदाय ॥

# ॥ सामवेदसंहिता ॥

तत्र

## ॥ उत्तरार्चिकः ॥

॥ अथ भाष्यावतरणिका ॥

वागीशाद्याः सुमनसः सर्वार्थाना मुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्—
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।
आदिशत् सायणाचार्य्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तु मुद्यतः ॥ ४ ॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
छन्दोभिधाभूद् व्याख्याता व्याख्यास्यत्युत्तराभिधाम् ॥५॥
छन्दस्येकैकशोऽधीता ऋचः सामोद्भवाय हि ।
स्तोम-निष्पत्तये सूक्तान्युत्तराया मधीयन्ते * ॥ ६ ॥

---

* छन्दसि पूर्वार्चिकग्रन्थे एकैकशः ऋचः अधीताः, सङ्गति मनपेक्ष्येति भावः ; तत्र सामोद्भवमात्रं प्रयोजनम्, सामोद्भवस्तु एकस्या मृचि भवितव्य एव ; परं स्तोम-निष्पत्तिस्तु तथा न भवेत् अत इह उत्तरायां सूक्तानि द्व्यृक्-त्र्यृचरूपाणि अधीयन्ते ।

स्तोमशब्देनोत्पत्तिषु सोमयागेषु प्रयुज्यमानास्त्रिवृत्पञ्च-दशादयोऽभिधीयन्ते। अतएव तैत्तिरीयकाः प्रश्नोत्तराभ्या मिद-मामनन्ति। तदाहुः—"कतमा वाव तानि ज्योतींषि य एतस्य स्तोमा इति? त्रिवृत्पञ्चदशः सप्तदश एकविंश एतानि वाव तानि ज्योतींषि यएतस्य स्तोमाः"—इति। छन्दोगास्त्र त्रिवृ-दादि-स्तोमानां स्वरूपं ब्राह्मण-द्वितीय-तृतीययोरध्याययोः * बहुधा समामनन्ति। ते च बहुभिरवान्तररूपोपेताः समाम्नाताः स्तोमा नवसङ्ख्याकास्तेषु पूर्वोक्तास्त्रिवृदादयश्चत्वारः त्रिणव-त्रयस्त्रिंशौ त्रिनवसङ्ख्योपेतः स्तोमस्त्रिणवइत्युच्यते। छन्दोमना-मका स्तोमास्त्रयस्तेषु चतुर्विंशाख्यस्तोमः प्रथमः। गायत्रीच्छन्द-सा चतुर्विंशत्यक्षरोपेतेन मीयतइति छन्दोमः। चतुश्चत्वा-रिंशाख्यो द्वितीयः। स च त्रिष्टुप्छन्दसा मीयते। अष्टाचत्वारिं-शाख्यस्तृतीयः। सोऽपि जगतीच्छन्दसा मीयते॥ नन्वथ ये द्वयाम्नातलक्षणोपेतेभ्यस्त्रिवृदादिभ्योऽष्टादश-नवदशादि--नामका बहवः स्तोमा विद्यन्ते। तथाच तैत्तिरीयकाः केषुचिदिष्ट-कोपधान-मन्त्रेषु देवतावद्रूपेष्टकात्व-विवक्षया तान् स्तोमा-नामनन्ति—"आशास्त्रिवृद्भान्तः पञ्चदशो व्योम सप्तदशः। प्रतू-र्त्तिरष्टादशस्तपोनवदशोऽभिवर्त्तःसविंशो धरुण एकविंशो वर्चो-द्वाविंशः सम्भरणस्त्रयोविंशो योनिश्चतुर्विंशो गर्भः पञ्चविंश ओजस्त्रिणवः क्रतुरेकविंशो ब्रध्नस्य विष्टपश्चतुस्त्रिंशो नाकष्षट्-त्रिंशोऽभिवर्त्तोऽष्टचत्वारिंशः"—इति। एवन्तर्हि सन्त्येव बहूनि

* ताण्ड्यमहाब्राह्मणस्येति।

स्तोमान्तराणि तेषां लक्षणानि तु ब्राह्मणान्तरानुसारेण सूत्रकारैर्व्युत्पादितानि ॥ ते च स्तोमाः सर्वेऽप्याज्यपृष्ठादि-स्तोत्रेषूपयुक्ताः "पञ्चदशान्याज्यानि, सप्तदशानि पृष्ठानि"—इत्यादि-श्रुतिभ्यः स्तोम-विषयाः स्तोत्रविषयास्तन्निष्पादक-साम-विषयाश्च । सर्वेऽपि विचारा अस्माभिश्छन्दोव्याख्यानावतारवेलायामेव जैमिनीयान्यधिकरणान्युदाहृत्य प्रदर्शिताः * ॥ किं बहुना "एकं साम तृचे क्रियते स्तोत्रियम्"†—इत्यादि-वचनैः स्तोत्रनिष्पादकस्य साम्नस्तृच्प्रगाथादि-रूपाणि सूक्तान्याश्रयत्वेनोत्तराख्ये संहिता-ग्रन्थे समाम्नातानि । स च ग्रन्थ एकविंशति-सङ्ख्यातैरध्यायै रुपेतः ‡ ॥

——

* १ भा० २० पृ०—२८ पृ० द्रष्टव्यम् ।

† द्रष्टव्योऽस्यार्थः १भा० २० पृष्ठे ।

‡ मूलपुस्तकस्य तु अध्यायसङ्ख्या नैव दृश्यते, परं सन्ति तत्र प्रत्यध्यायमर्द्धाध्यायः अध्यायद्वयेऽर्द्धाध्यायद्वयञ्च, पदग्रन्थे च तथा, विवरणादावप्येवमेव । सायणमते तु अर्द्धाध्यायानङ्गीकारस्ततस्यैकविंशतित्वं सुलभमिति । अध्यायेति व्यवहारश्च सायणीय एव, वस्तुतः सामवेदे प्रपाठकव्यवहारएव सर्वमूलपुस्तक-पदपुस्तक-गानपुस्तकादौ विवरणकारमते च प्रसिद्धः ।

तत्र, प्रथमाध्यायस्य प्रथमखण्डे, *

प्रथमसूक्ते तृचे, येयमृक् प्रथमा

सैव साम्नायते—

१ २ ३ १ २ ३ १ २

उपास्मैगायतानरःपवमानायेन्दवे ।

२ ३ ३ १ ३र

अभिदेवाँइयक्षते ॥ १ ॥ †

हे "नरः" नेतारः! यज्ञस्य, "देवान्" इन्द्रादीन् "अभि इयक्षते" आभिमुख्येन यष्टुमिच्छते "पवमानाय" क्षरते "अस्मै" अभिषूयमाणाय "इन्दवे" सोमाय "उप गायत" उपगानं कुरुत ॥ १ ॥

अथ द्वितीया।

३ २ ३ १ २ ३ १ २र

अभितेमधुनापयोथर्वाणोअशिश्रयुः ।

३ २ ३ १ २ ३ २

देवन्देवायदेवयुः ॥ २ ॥

हे सोम! "ते" तव "देवं" देवनशीलं "देवयुः" देव-कामं रसं ‡ "देवाय" देवनशीलायेन्द्राय "मधुना" ¶ "पयः" गव्येन

---

* अत्र ग्रन्थे खण्ड-व्यवहारोऽपि सायणेनाविष्कृतः ।

† इयमेव ऋक् अत्रैव प्रपाठके द्वितीयार्द्धेऽपि दृश्यते (१८, ३)।

‡ 'देवयुः देवान् युनक्ति यः सोमेन स देवयुः'—इति वि०। 'देवयवः'—इति ऋत्विङ्नामसु पञ्चमं नैघण्टुकम् (३, १८)।

¶ 'मधुना स्वादुना'—इति वि०।

पयसा * "अथर्वाणः" ऋषयः † "अभ्यश्रिश्रयुः" अभ्यश्रिश्रपन् समकुर्वन्नित्यर्थः ‡ ॥ २ ॥

अथ तृतीया ।

१ २    ३ २उ ३ १   २र ३ १   २र
सनःपवस्वशङ्गवेशञ्जनायशमर्वते ।

१   २ ३ १   २
शꣳराजन्नोषधीभ्यः ॥ ३ ॥ १ ¶

हे "राजन्" दीप्यमान सोम ! "सः" प्रसिद्धस्त्वं "नः" अस्माकं § "गवे" ‖ "शं" सुखं "पवस्व" क्षर + "जनाय"

---

* 'पयः प्रथमैकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम् । पयसा सोम-मिश्रणं कुर्वन्ति'—इति वि० ।

† 'सोममिश्रणं कुर्वन्ति के ? अथर्वाणः ऋत्विजः । अथवा अथर्वा नाम ऋषिः आत्मीयान् पुत्रपौत्राननुशास्ते—हे अथर्वाणः !'—इति वि० ।

‡ 'अभीत्ययमुपसर्गः अश्रिश्रयुरित्याख्यातेन सह सम्बन्धयितव्यः । अभ्यश्रिश्रयु =आभिमुख्येन ते तव अश्रिश्रयुः=मिश्रणं कृतवन्तः'—इति वि० ।

¶ एतास्तिस्रऋचः—ऋग्वेदे ९, ७, २६, १-२-३ अपि दृश्यन्ते । आसां ऋषि-सन्देशस्तु—"असितः काश्यपो देवलो वा"—इति ऋषि नै० । दैवत-सन्देशोऽपि यथा—"उत्तरासु रहस्याम्नायाश्च देवताः । पूर्वोक्ता ऋचु ता एवोत्तरासूपास्ते चय-स्तृचाः । सौम्याः स सोमः पार्थिवः"—इति दैवत-नै० ॥

§ 'नः अस्माकम्'—इति वि० ।

‖ 'चतुर्थ्येकवचनमिदं बहुवचनस्य स्थाने द्रष्टव्यम् । गोभ्यो बहुभ्यः'—इति वि० ।

+ 'पवस्व शुध्यस्व'—इति वि० ।

प्रजाय च * "शं" पवस्व "अर्वते" अश्वाय † च "शं" पवस्व "ओषधीभ्यः" च ‡ सम्भवस्व ॥ २ ॥ १

॥ यज्ञायज्ञीयम् ॥ उपा॥ऽ५स्मै। गा३या३ताना रा:। पा३वामाइना। या२३आ। ऊम्मायि। दा३वा यि। आभिर्देवा॰इयारक्षताउ ॥ तै (१)॥ आ। भिते मा। धू३नापा३याः। आथा२वी। णोआ२३आ। ऊ म्मायि। आ३यू:। दायिवन्देवायदा२यिवयाउ ॥ यू(२)॥ सा:। नःपवा। स्वा३मा३ङ्गा३वायि। अश्वा२ना। य आ२३मा। ऊम्मायि। वी३तायि। आ॰राजन्नोषधा २यिभ्यआउ ॥ (३) ॥ ११ ¶ ॥ १

* 'शं जनाय सुख व्हलिग्जनाय'—इति वि०।

† 'प्र अर्वते यजमानजनाय'—इति वि०।

‡ 'ओषधीभ्यः व्रीहि-यव-तिल-माषादिभ्यः'—इति वि०।

¶ सामवेदमूलगानस्यैकविंशप्रपाठक-प्रथमार्द्ध स्यैकादशम्।

अथ द्वितीयखण्डे—प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ २
द्यविद्युतत्यारुचापरिष्टोभन्त्याकृपा ।
१ २ ३ १ २र
सोमाःशुक्रागवाशिरः ॥ १ ॥

"द्यविद्युतत्या रुचा" अतिशयदीप्त्या "परिष्टोभन्त्या" पवित्रः शब्दायमानया "कृपा" धारया च युक्ताः "सोमाः" "गवाशिरः" गवाशिराः भवन्ति गव्येन पयसा मिश्रिता भवन्ति इत्यर्थः* ॥१॥

अथ द्वितीया ।

३ १ ३ १ २ ३ १ २र ३क २र
हिन्वानोहेतृभिर्हितआवाजंवाज्यक्रमीत् ।
१ २ ३ १ २
सीदन्तोवनुषोयथा ॥ २ ॥

"वाजी" बलवान् सोमः "हेतृभिः" प्रेरकैः स्तोतृभिः† "हिन्वानः" स्तोत्रैः स्तूयमानः "हितः" अभीष्टकारी सन् "वाजं" यागाख्यं युद्धम् "आ अक्रमीत्" आक्रामति । तत्र दृष्टान्तः—

* "द्यविद्युतत्या देदीप्यमानया रुचा । परिष्टोभन्त्या परि समन्तात् स्तोभन्त्या पुनः पुनः स्तोभः अभ्यासः अभ्यस्यमानया । कृपा कान्त्या । सोमाः शुक्राः शुक्लवर्णाः । कथं शुक्लवर्णा भवन्ति ? गवाशिरः कारणे कार्यवदुपचारः गोक्षीराशिरः । आशिरं मिश्रम् ॥"—इति वि० ।

† "प्रहेतारं प्रभूणां प्रेरकम्"—इति ऋ० भा० ६, २, ५, १ सा० द्रष्टव्यम् (१भा० ५८१प० ) ।

यथा "वनुषः" हन्तारो भटाः * "सीदन्तः" युद्धं प्रविशन्तः आक्रामन्ति तद्वदित्यर्थः † ॥ २ ॥

अथ तृतीया।

३ १ २ ३ १ २ ३ २ ३ १ २
ऋधक्सोमस्वस्तयेसञ्जग्मानोदिवाकवे।
१ २ ३ १ २ ३ २
पवस्वसूर्योदृशे ॥ ३ ॥ २ ‡

हे "सोम"! "कवे" क्रान्तदर्शिन्! "सूर्यः" सुवीर्यः ¶ त्वं "ऋधक्" ऋध्नुवत्। तथाच यास्कः—"ऋधगिति पृथग्भावस्यानुप्रवचनं भवत्यथाप्यृध्नोत्यर्थे दृश्यते (निरु० नै० ४, २५)"—

* "वनुष्यति"—इति क्रुध्यतिकर्मसु अष्टमं नैघण्टुकम् २, १२। "वनुष्यतिर्हन्तिकर्मानवगतसंस्कारोभवति 'वनुयामवनुष्यत' इत्यपि निगमो भवति"—इत्यादि निरु० नै० ५, २।

† 'हिन्वानः नीयमानः प्रीयमाणो वा। कैः हेतुभिः? चरणस्वभावैर्ऋत्विग्भिः आ वाजम्। आ शब्दः उपसर्गः। अक्रमीदित्याख्यातेन सम्बन्धयितव्यः आभिमुख्येन अक्रमीत् वाजं वाजी वाजमन्नं, पशुपुरोडाशादि-लक्षणस्यान्नस्य स्वामी अथवा वाजं द्रोणकलशम् आक्रमीत् सोमः। कथमाक्रमीत्? सीदन्तोवनुषोयथा। सीदन्तः उपविशन्तः वनुषः मनुष्यः एकवचनमिदं बहुवचनस्य स्थाने द्रष्टव्यम्। वनुषाः मनुष्याः उच्यन्ते। यथा उपविशन्तो मनुष्याः आसन माक्रमन्ति तद्वत् द्रोणकलशं सोमः'—इति वि०।

‡ ऋ० वे० ७, १, ४१, ३-४ ५। ऋ० "कश्यपो मारीचः" इति ऋषि-नै०। छन्दोदेवते पूर्ववत्।

¶ 'सूर्यः दृशे, सूर्यः ( इव शब्द माहयते। दृशे दर्शनाय। यथा सूर्य उदेति विश्वस्य जगतो दर्शनाय तद्वत् त्वमपि पवस्वेत्यभिप्रायः'—इति वि०।

इति । "सञ्जग्मानः" सङ्गच्छमानः "स्वस्तये" "दृशे" दर्शनाय "दिवा" दिवः विभक्तिव्यत्ययः* ॥ "पवस्व"-"चर"—"दिवाकवे"-"दिवाकविः"—इति पाठौ ॥ ३ ॥ २

४ २ ४ २ ४र ५
॥ यज्ञायज्ञीयम् ॥ इवाऽ५यिद्यु । ता३ती२याह्वा ।
२ १ २ २ १ २ १ २ १
पा३रायिष्टो३भा । ता२३त्वा । ऊ३मायि । का३र्षा ।
१ र र ३ २ १ १ १र र २
सोमाःशुक्रागवाशिराउ ॥ दा(१)वायि । त्वानोहोतू
१ २ २ १र १ र २ १
३भायिर्वी३यिताः । स्वावा२जम् । वाजा२३या । ऊ
२ २ १ र २ ३ २ १
मायि । का३मीत् । सायिदन्तोवसुषो२यथाउ ॥ या(२)
२ १ र २ १ २ २ १ १र
च्छ । धक्सोमा । इ३वात्ता३यायि । सञ्जा२ग्मा ।
र २ १ २ १ १ऽ र
नोदा२३यिवा । ऊ३मायि । का३वायि । पावस्वहरियोर
२ १
हुम्माउ (३) ॥ १२ † ॥ [१]२

---

* 'दिवा कवे अहन्यहनि हे मेधाविन् !'—इति वि० ।

† क० गा० २१ प्र० १ अ० १२ सा० ।

तृतीय-खण्डे—प्रथमा ।

१ २ ३ २ ३ १ २

पवमानस्यतेकवेवाजिन्त्सर्गाअसृक्षत ।

१ २ ३ १ २३ १ २

अर्वन्तोनश्रवस्यवः ॥ १ ॥

मार्जनप्रसङ्गादाह—हे "कवे" क्रान्तप्रज्ञ ! हे "वाजिन्" अन्नवन् सोम ! "पवमानस्य" दशापवित्रेण पूयमानस्य "ते" तव "सर्गाः" सृज्यन्ते इति सर्गा धाराः * । कीदृश्यः ? "श्रवस्यवः" ["छन्दसि परेच्छायां क्यच् (३,१,८वा०] यष्टृणा अन्नं कामयमानास्त्वदीया धारा "असृक्षत" विसृजन्ति निर्गच्छन्तीत्यर्थः । तत्र दृष्टान्तः—"अर्वन्तो न" यथा अश्वा मन्दुरातो निर्गच्छन्ति तद्वत् पवित्राद्भिः सरन्तीत्यर्थः † । प्रयोगापेक्षं चात्र धारा-बाहुल्यम् ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ ३ २ ३१ २ ३१ २ ३ १ २

अच्छाकोशम्मधुश्चुतमसृग्रं वारे अव्यये ।

१ २ ३ १ २

अवावशन्तधीतयः ॥ २ ॥

धारानिर्गमनप्रसङ्गादभिधीयते—"मधुश्चुतं" मधुररसस्य च्यावयितारं क्षारयितारं "कोशं" द्रोणकलशम् "अच्छ" अभि-

* 'सर्गाः उदकस्य अन्योन्यजन्मघः सङ्घाताः'—इति वि० ।

† 'अर्वन्तः यजमानाः'—इति वि० ।

लक्ष्य* "अव्यये" अवि-सम्भूते "वारे" वाले दशापवित्रे "असृग्रं" सोमाः ऋत्विग्भिरभिसृज्यन्ते [सृजेः कर्म्मणि लिङ्गातिङो भवन्तीति टेरमादेशः]। किञ्च। "धीतयः" [अङ्गुलि नामैतत् †] भवन्ति पिबन्त्याभिरिति] अस्मदीया अङ्गुलयः "अवावशन्त" तान् सोमान् न पुनः पुनर्मार्जनार्थं कामयन्ते‡ ॥ २ ॥

अथ तृतीया ।

१ २ २२उ १ २ ३ १ ३२३१२
अच्छासमुद्रमिन्दवोस्तङ्गावोनधेनवः ।

१ २ ३ २ ३ १ ३ २
अग्मन्नृतस्ययोनिमा ॥ २ ॥ ३ ¶

"इन्दवः" क्षरन्तः सोमाः "समुद्रं" सोमाना मेकत्रैव सङ्गमनस्थानं द्रोणकलशम् "अच्छ" अभि गच्छन्ति। तत्र दृष्टान्तः—"धेनवः" पयः-प्रदानेन जनानां प्रीणयित्र्यो नवप्रसूतिका गावः "अस्तं" गृहं यथा अभि गच्छन्तीति तद्वत् §। किञ्च ते

* 'अच्छ आतृम'—इति वि० ।

† "धीतयः"—इति अङ्गुलिनामसु सप्तमं नघण्टुकम् २, ५ ।

‡ 'धीतयः धीतिः बुद्धिः बुद्धिमन्तः सोमाः। अथवा अवावशन्त कामयन्त के धीतयः ऋत्विजः, किं कामयन्त ? सोमस्य पावनं द्रोणकलशगमनञ्च'—इति वि० ।

¶ ऋ० वे० ७, २, ८, ५—९, ६, २ । ऋ० "वैखानसा आङ्गिरसः"—इति ऋषि नैं० ।

§ 'कथमातृम ? अस्तं गावो न धेनवः। अस्तमनकाले गावो न गच्छ यथा इष्टा-

सोमा: "ऋतस्य योनिं" सत्यभूतस्य यज्ञस्य* योनिं स्थानम् "आ" अग्मन्" आभिमुख्येन गच्छन्ति। [गमेर्लुङि सिचो लुकि उपधालोप: ॥ २ ॥ ३

॥ यज्ञायज्ञीयम् ॥ पवाऽपूमा। मा३स्याइतेकावायि। वा३जायिन्त्वा३गी:। आ२३सा। ऊम्मायि। स्वा३ता। आर्विकोनश्रवा२स्यवाउ॥ वा(१)ऽआ। स्वाकोग्राम्। सा३धूम्रूरताम्। असा२र्य्यम्। वा२२३आ। ऊम्मायि व्या३यायि। आवावग्मन्तधा२यितयाउ॥ या(२)ऽआ। स्वासन्। द्रा३मायिन्दा३वा:। अस्ता२ङ्गा। वीना२ २धे। ऊम्मायि। ना३वा:। आग्मन्नृतस्ययो२निमाउ। वा३४पु(३)॥ १३ † ॥ [१]३

---

इयमार्थीय: गाव: इव धेनव: यथा अतमनकाले वत्सानतियन्ति स्वं हा-इद्दा:"—इति वि०।

* 'ऋतस्य यज्ञस्य प्रजापते र्वा'—इति वि०।

† ऊ० गा० २१ प्र० १ अ० १२ सा०।

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य
प्रथमः खण्डः * ॥ १ ॥

* 'ज्योतिष्टोमिकं बहिष्पवमानं समाप्तम्'—इति वि०। "तदिदं सूक्तत्रय-गानसाध्यं स्तोत्रं बहिष्पवमानमित्युच्यते। तत्रावस्थितानां ऋचां पवमानार्थत्वाद् बहिःसम्बन्धाच्च"—इति मी० द० जै० अ० ९ अध्या० ४ पा० ३ अधि०। न खल्विदं स्तोत्रम् इतरस्तोत्रवत् सदोनामकस्य मण्डपस्य मध्ये औदुम्बर्याः स्तम्भशाखायाः सन्निधौ प्रयुज्यते किन्तु सदसो बहिः प्रसर्पद्भिः प्रयुज्यते। 'बहिष्पवमान'-नाम वेदी, यत्र स्थिते तद्बहिष्पवमाननामनवर्क्-साध्य-त्रिवृन्नामस्तोमपाठपूर्वकं मार्जनं भवति; 'सा तु उदग्वंशशालामशालान्तर्गत-सदोमण्डपात् पश्चिमस्याः प्राचीनवंशनामशालान्तर्गतै-ष्टिकवेदेरुत्तरतो विद्यते, अस्य च बहिष्पवमानस्य प्रकृतियागेऽग्निष्टोमादौ त्रिवृन्ना-मकः स्तोमो भवति, एतद्विधायकं ब्राह्मणवाक्यं ताण्ड्यद्वितीयप्रपाठकारम्भ एव खण्डत्रयात्मकं द्रष्टव्यम्—'तिसृभ्यो हिङ्करोतीत्यादि'। अत्र च विष्टुतित्रयमस्ति उद्यती, परिवर्त्तिनी, कुलायिनीति; ताश्च तत्रैव स्फुटाः। विकृतियागेऽति-रात्रादावत्रैव एकविंशादि-स्तोमा विहिताः। बहिष्पवमाने चात्र आदृतगाना-भावात् त्रिषु तृचेष्ववस्थिताभिर्नवभिर्ऋग्भिरेकविंशस्तोमपूरणाभावात् तत्पूरणाय चत्वारस्तृचा आगमयितव्याः, त्रिणवस्तोमपूरणाय षट् तृचाः, त्रयस्त्रिंशत्स्तोमपूरणाय चाष्टौ तृचाः। तृचागमने च मानम्—"त्रीणि ह वै यज्ञस्योदराणि गायत्री"—इत्यादि ताण्ड्य-सप्तम-तृतीये द्रष्टव्यम्। आगन्तूनाञ्च तासां मध्ये निवेशः। द्वादशाहे तु मध्ये एव निवेशः। तद्विचारश्च मीमांसाधिकरणमालायाः पञ्चम-तृतीयस्य चतुर्थे द्रष्टव्यः। प्राकृतानां बहिष्पवमानगतानां त्रयाणां तृचानां स्तोत्रियोऽनुरूपः पर्यासश्चेति यथा क्रमं त्रीणि नामानि। अत्र मानम् ताण्ड्यैकादशषष्ठे "स्तोत्रि-यानुरूपौ तृचौ भवतः"—इत्यादि। गवामयनादिषु सत्रेषु पर्वं चतुर्भिरामिप्लविकैः चतुर्विंशत्यहानि भवन्ति तत एकेन पृष्ठ्य-षडहेन मासः पूर्यते, तत्र प्रथमाहः त्रिवृत्स्तोमसाध्यः अतोऽयं स्तोमः पृष्ठ्य इत्यप्युच्यते। किञ्चैदमेकषष्ठ्यधिकत्रिशत-दिनसाध्येषु सत्रेषु—पञ्चविंशद्दिने, पञ्चपञ्चाशद्दिने, पञ्चाशीतिदिने, पञ्चदशाधिक-शततमे दिने, पञ्चचत्वारिंशदधिकशतदिने, ऊनसप्तत्यधिकशतदिने, नवत्यधिक-शतदिने, एकादशाधिकद्विशतदिने, एकचत्वारिंशदधिकद्विशतदिने, एकसप्तत्य-

द्वितीयखण्डे,

प्रथमतृचे—प्रथमा।

२ ३ १ २ ३ १ २ ३ २ ३ १ २
अग्नआयाहिवीतयेगृणानोहव्यदातये।
१ २र २ १ २
निहोतासत्सिबर्हिषि॥ १ *॥

हे "अग्ने" अङ्गनादिगुणविशिष्ट! त्वम् "आयाहि" अस्मद् यज्ञं प्रत्यागच्छ। किमर्थम्? "वीतये" हविषां चरुपुरोडाशादीनां भक्षणाय। कीदृशः सन्? "गृणानः" अस्माभिः स्तूयमानः [व्यत्ययेन: कर्मणि कर्तृ-प्रत्ययः]। पुनश्च किमर्थम्? "हव्यदातये" देवेभ्यो हविःप्रदानाय। आगत्य च "होता" देवाना माह्वाता सन् "बर्हिषि" आस्तीर्णे दर्भे "निषत्सि" निषीद [सदेः छान्दसः शपो लुक्]॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २
तन्त्वासमिद्भिरङ्गिरोघृतेनवर्द्धयामसि।
३ १ २
बृहच्छोचायविष्ठ्य॥ २ †॥

---

धिकद्विशततदिने, एकाधिकत्रिशततमे च दिने विनियुज्यते—इति दिक् विस्तरस्तु ताण्ड्ये चतुर्थप्रपाठकादिके।

* छ० आ० १, १, १, १ (१भा० ९३ पृ०) = ऋ० वे० ६, ५, २९, ४।

† उ० ग्रं० ३, २ = ऋ० वे० ४, ५, २३, १।

हे "अङ्गिरः" अङ्गनादिगुणयुक्त! अङ्गिरसः पुत्र वा अग्ने! "तं" पूर्वोक्तगुणं "त्वा" त्वां "समिद्भिः" समिन्धन-हेतुभिः दारुभिः "घृतेन" आज्येन च "वर्द्धयामसि" वर्द्धयामः। अतो हे "यविष्ठ्य" युवतमाग्ने! * "बृहत्" महत् अत्यन्तं "शोच" दीप्यस्व॥ २॥

अथ तृतीया।

१ २ ३ २ ३ २ ३ १ २
स नः पृथुश्रवाय्यमच्छादेवविवासमि।

३ १ २ ३ १ २
बृहदग्ने सुवीर्यम्॥ ३ † ॥ ४ ‡

हे "देव" द्योतमानाग्ने! स पूर्वोक्तगुणस्त्वं "पृथु" विस्तीर्णं "श्रवाय्यं" श्रवणीयं प्रशस्यं "बृहत्" महत् "सुवीर्य्यं" शोभन-वीर्य्योपेतं धनं "नः" अस्मान्¶ "अच्छ" § "विवाससि" अभि-गमय+। अत्र वाजसनेयकम्—"अच्छादेवविवाससीति तन्नो ऽभिमयेत्येवैतदाहेति॥ ३॥ ४

* 'यविष्ठ्य. अतिशयेन बलवान्'—इति वि०।

† ऋ० वे० ४, ५, २३, २।

‡ इदमाग्नेय साम्नम्।

¶ 'नः अस्मभ्यम्'—इति वि०।

§ 'अच्छ आभिमुख्यम्'—इति वि०।

+ 'विवाससि . . . दीप्तिं करोषि'—इति वि०।

द्वितीयतृचे—प्रथमा ।

१ २ २ १ २र

आनोमित्रावरुणाघृतैर्गव्यूतिमुक्षतम् ।

२ ३ १ २

मध्वारजाᳬसिसुक्रतू ॥ १ * ॥

"सुक्रतू" शोभनकर्माणौ, हे "मित्रावरुणौ" ! "नः" अस्माकम् "गव्यूतिं" गवां मार्गं गोनिवासस्थानं "घृतैः" क्षरणसाधनैः पयोभिरुदकैः "आ उक्षतं" समन्तात् सिञ्चतम् । अस्मभ्यं दोग्ध्रीः गाः प्रयच्छत मित्यर्थः । किञ्च "मध्वा" मधुरेण सुरसेन "रजांसि" पारलौकिकानि अस्मदावासस्थानानि "सिञ्चतम्" ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ १ ३ ११ २र

उरुशᳬसानमोवृधामह्नादक्षस्यराजथः ।

३ १

द्राघिष्ठाभिःशुचिव्रता ॥ २ † ॥

"शुचिव्रता" परिशुद्धकर्माणौ‡ हे मित्रावरुणौ ! "उरुशंसा" उरुभिः बहुभिः¶ शंसनीयौ । यद्वात्र उरुः शंसः शस्त्रं ययोस्तौ ।

* ऋ० सा० ३, २, २, ७ ( १भा० ४५९ पृ० ) = ऋ० वे० ३, ४, ११, ५ ।

† ऋ० वे० ३, ४, ११, ६ ।

‡ 'हे शुचिव्रतौ शुचिर्यस्या मर्थं क्रियमाणं कर्म भवति तौ शुचिव्रतौ सत्यव्रतौ —इति वि० ।

¶ "उरु"—इति बहुनामसुपाठं नैघण्टुकम् ३, १ ।

"नमोवृधा" नमसा हविर्लक्षणेनान्नेन स्तोत्रेण वा वर्द्धमानौ* । "द्राघिष्ठाभिः" अत्यन्तदीर्घस्तुतिलक्षणाभिर्युक्तौ युवां "दक्षस्य" दक्षते समर्थो भवत्यनेनेति दक्षं धनं बलं वा तस्य† "मह्ना" महत्वेन "राजथः" ईशाथे ‡ ॥ २ ॥

अथ तृतीया ।

३   २ ३ १ २   ३ १ २ ३ १ २
गृणानाजमदग्निनायोनावृतस्यसीदतम् ।

३ १   २र
पातꣳसोमवृतावृधा ॥ ३ ¶ ॥ ५ §

हे मित्रावरुणौ ! "जमदग्निना" एतन्नामकेन महर्षिणा यद्वा जमदग्निना प्रज्वलिताग्निना विश्वामित्रेण "गृणाना" स्तूयमानौ युवां "ऋतस्य" यज्ञस्य "योनौ" देवयजनाख्ये देशे "सीदतं" उपविशतं "ऋतावृधा" ऋतस्य कर्म्मफलस्य वर्द्धयितारौ युवां + "सोमं" "पातम्" अस्माभिरभिषुतम् सोमं पिबतम् ॥ ३ ॥ ५

---

* 'नमस्कारैर्वृद्धौ'—इति वि० ।

† 'दक्षस्य ऋषेः अथवा दक्षो यजमान उच्यते तस्य यजमानस्य बलेन दीप्यमानेन'—इति वि० । दक्ष इति बलनामसु लघोदशं नैघण्टुकम् २, ९ ।

‡ 'राजथः दीप्यथः'—इति वि० ।

¶ ऋ० वे ३, ४, ११, ७ ।   § इदं मैत्रावरुण साम्नम् ।

+ 'ऋतावृधौ यज्ञेन वर्द्धितौ'—इति वि० ।

तृतीये तृचे—प्रथमा।

१ २ ३१उ ३१२ २ ३ १२३२

आयाहिसुषुमाहितइन्द्रसोमम्पिबाइमम्।

२उ ३ १ २ ३ २ २

एदम्बर्हिःसदोमम॥ १ *॥

हे "इन्द्र"! त्वम् "आ याहि" अस्मद्यज्ञं प्रत्यागच्छ, वयं "ते" त्वदर्थं "सुषुमा हि" सोम मभिषुतवन्तः खलु तम् "इमम्" अभिषुतं सोमं त्वं "पिब" त्वदर्थं "मम" यमिदं "बर्हिः" वेद्या मास्तीर्णं दर्भम् "आ सदः" आसीद अभि निषीद॥ १॥

अथ द्वितीया।

१ २ ३ १२ ३ २ ३ १ २ ३ १ २

आत्वाब्रह्मयुजाहरीवहतामिन्द्रकेशिना।

२ ३ १ २

उपब्रह्माणिनःशृणु॥ २ †॥

हे "इन्द्र"! "ब्रह्मयुजा" ब्रह्मणा मन्त्रेण युज्यमानौ "केशिना" केशिनौ केशवन्तौ "हरी" हरणशीलौ वा अश्वौ "त्वा" त्वाम् "अवहताम्" अभि प्रापयताम्। त्वं चास्मद्यज्ञ मुपेत्य "नः" अस्माकं "ब्रह्माणि" स्तोत्राणि "शृणु" सम्यक् चित्ते धारय॥ २॥

---

* ऋ० ब्रा० ७, २, ५, ७ (१ भा० ४१७ पृ०) = ऋ० वे० ६, १, ११, १।

† ऋ० वे० ६, १, ११, २।

अथ तृतीया ।

३ १ २   ३ २ ३ १   २ ३ २ २   ३ १ २
ब्रह्माणस्त्वायुजावयꣳसोमपामिन्द्रसोमिनः ।

२ १ २
सुतावन्तोहवामहे ॥ २ * ॥ ६ †

हे "इन्द्र" "ब्रह्माणः" ब्राह्मणा वयं त्वां "त्वायुजा" योग्येन स्तोत्रेण "हवामहे" आह्वयामहे । कथम्भूतम्? "सोमपां" सोमस्य पातारम् । ईदृशा वयं "सोमिनः" सोमयुक्ताः "सुतावन्तः" अभिषुतैः सोमैरुपेताः ॥ "ब्रह्माणस्त्वायुजावयं"–"ब्रह्माणस्त्वा-वयं युजा"—इति पाठौ ॥ २ ॥ ६

चतुर्थे तृचे—प्रथमा ।

१ २   ३ १ २   २ ३ २ ३ उ   १ २
इन्द्राग्नीआगतꣳसुतङ्गीर्भिर्नभोवरेण्यम् ।

३ १ २   २ ३ २ २
अस्यपातन्धियेषिता ॥ १ ‡ ॥

इन्द्रश्चाग्निश्च "इन्द्राग्नी" ¶ देवौ § "सुतम्" अभिषवा-

---

* ऋ० वे० ६, १, ३२, २ ।   † इद मैन्द्र माज्यम् ।

‡ य० वे० ७, ३१ = ऋ० व० ३, १, ११, १ । ऋ० "विश्वामित्रो गाथिनः"—इति ऋषि-नै० । दे० 'इन्द्राग्नी ऐन्द्राग्नम्'—इति देव-न० । छ० गायत्री । एव-मेवाप्तोत्तरयद्वयोः ।

¶ छ० आ० ३, २, ४, ९, = अत्र तु १, १, ७, १ = १, १, ७, २ = २, २, ८, १ = १, २, ८, २ = ३, १, ९, १ = ३, २, १०, १—इति सप्तसु ऋक्षु श्रूयते 'इन्द्राग्नी' ।

§ "अथास्य संस्तविका देवाः—अग्निः सोमो वरुणः पूषा बृहस्पति र्ब्रह्मणस्पतिः पर्वतः कुत्सो विष्णु र्वायुः"—इति निरु० दै० १, १० ।

दिभिः संस्कारैः संस्कृतम् अतएव "वरेण्य" वरणीयं सम्भजनीय मिमं सोमं प्रति "गीर्भिः" अस्मदीयाभिर्वाग्भिराहूतौ सन्तौ "नभः" नभसः स्वर्गाख्यात् स्थानात् "आगतम्" आगच्छतम्। आगत्य च "धिया" अस्माभिः क्रियमाणेन कर्मणा "इषिता" इषितौ प्रेरितौ युवाम् "अस्य" इमं सोमं "पातं" पिबतं। यद्वा "धिया" अस्मदीयया बुद्ध्या इषितौ प्राप्तौ * अस्मद्भक्त्या प्रेरितौ युवा मिमं सोमं पिबतम् ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २र ३ १ २ १ ३ १ २
इन्द्राग्नीजरितुःसचायज्ञोजिगातिचेतनः।
३ १ २ ३ २ ३ २
अयापातमिमꣳसुतम् ॥ २† ॥

हे "इन्द्राग्नी" "जरितु" स्तोतुः‡ "सचा" स्वर्गादिलक्षणप्राप्तौ सहायभूतौ "यज्ञः" ज्योतिष्टोमादि-यज्ञ-साधनभूतश्चेतनः इन्द्रियाणां चेतयिता आप्यायनकारी सन्नसौ सोमः "जिगाति" युवा मभिगच्छति¶। "अया" अस्मदीयया स्तुतिलक्षणया अनया वाचा आहूतौ सन्तौ युवां "सुतम्" अभिषवादि-संस्कारोपेतम् "इमं" "पातं" पिबतम् ॥ २ ॥

---

* "इषता इषु इच्छायाम् इच्छन्त्या"—इति वि०।

† ऋ० वे० ३, १, १२, २। ‡ 'जरितुः स्तोतुः उद्गातुः'—इति वि०।

¶ 'जिगाति गायति चेतनः लुप्तोपमान मिदं चेतन इव'—इति वि०।

अथ तृतीया ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे ।
१ २र ३ १ २
ता सोमस्येह तृम्पताम् ॥ ३* ॥ ६†

"यज्ञस्य" यज्ञसाधनभूतस्य सोमस्य "जूत्या" जूतिः प्रेरणं सोमस्तावद्यजमानं प्रेरयति । साधन मुपलभ्य तत् साध्ये क्रतौ यजमानः प्रवर्त्ततइति हि तस्य प्रेरकत्वम् । तया प्रेरणरूपतया जूत्या‡ प्रेरितोऽहं स्तोता "कविच्छदा" कवीनां स्तोतृणा मुचितफल-प्रदानेनोपच्छन्दकौ इन्द्र मग्निं च युवां "वृणे" सम्भजेत आगतौ च ताविन्द्राग्नी "इह" अस्मदीये अस्मिन् कर्मणि "सोमस्य" सोमेन सोमयागेन "तृम्पतां" तृप्यताम् ॥ ३ ॥ ७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य द्वितीयः खण्डः¶ ॥ २ ॥

---

* ऋ० वे० ३, १, ११, १ ।

† इद मैन्द्राग्न साम्नम् । 'प्रातः सवनं समाप्तम्'—इति वि० ।

‡ 'जूत्या अभिवृद्ध्या निमित्तभूतया'—इति वि० ।

¶ "तान्येतानि प्रातःसवने गायत्रसाम्ना गीयमानानि चत्वार्याज्यस्तोत्राणीत्युच्यन्ते"—इति मी० द० जै० अ० ९ अध्या० ४ पा० ३ अधि० । 'यदाजिमीयुस्तदाज्याना माज्यत्वम्'—इति चैतन्निर्वचनम् ता० ब्रा० ७, २ । एष्वाज्यस्तोत्रेषु पञ्चदशनामकः स्तोमो भवति ; तद्विधायकं ब्राह्मणं ताण्ड्यम, 'पञ्चभ्यो हिङ्करोति'—इत्यादि ( २, ४-

तृतीयखण्डस्य,

प्रथमतृचे—प्रथमा।

२ १ २ ३ ११ २र ३ ११ २र
उच्चातेजातमन्धसोदिविसद्भूम्याददे।
२ १र २ ३ ३ १ २
उग्रꣳशर्ममहिश्रवः॥ १ *॥

हे सोम! "ते" तव सम्बन्धिनः "अन्धसः" रसस्य "उच्चा" उपरि "जातं" जन्म अपिच "दिवि" द्युलोके "सत्" तव सम्बन्धि "उग्रम्" उद्गूर्णं "शर्म" सुखं "महि" महत्। "श्रवः" अन्नं "भूमि" भूमिष्ठैः यजमानैः "आ ददे" आदीयते॥ दिविसद्"-दिविषद्"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ १ २ ३ १ २ ३ १ २ ३ १ २
सनइन्द्राययज्यवेवरुणायमरुद्भ्यः।

---

५-६) तच्चैवैतद् विष्टुतिचयस्य परिस्फुटम्। सोमोऽयं द्वितीय पृष्ठ इत्यप्युच्यते किञ्च सत्रेषु षड् विंशतितमे दिने, षट्पञ्चाशत्तमे दिने, षडशीतिदिने, षोडशाधिकशतदिने, षट्चत्वारिंशदधिकशतदिने, सप्तत्यधिकशतदिने, जनन्वत्यधिकशतदिने, दशाधिक-द्विशतदिने, चत्वारिंशदधिकशतदिने, सप्तत्यधिकद्विशतदिने, त्रिंशततमे च दिने विनियुज्यते। विस्तरस्तु ताण्ड्य-चतुर्थप्रपाठकादिके।

* छ० आ० ५, २, ४, १ (२ भा० २ पृ०) = ऋ० वे० ७, १, १९, ५। ऋ० 'अमहीयुः आङ्गिरसः'—इति ऋषिनै०। दे० 'पवमानः सोमः'—इति देव-नै०। छ० गायत्री। एवमेवाचोत्तरत्र द्वयोः॥ इदानीं माध्यन्दिनः पवमानः। गायत्री बृहती त्रिष्टुबिति छन्दांसि। पुष्कलोऽग्निर्वामदेव्यवोऽग्निरुत्तरिन्द्रीयुषाजीवउशनाःकाव्यः इति आर्षाणि। सोमः स्तोत्रदेवता साम-देवता विस्तरमथाग्नोचम्'—इति वि०।

२ ११ २र
वरिवोवित्परिस्रव ॥ २ * ॥

हे सोम "वरिवोवित्" धनस्य लम्भकः पवमानः † "नः" अस्माकं ‡ "यज्यवे" यष्टव्याय ¶ "इन्द्राय" "वरुणाय" च "मरुद्भ्यः" च "परि स्रव" धारया क्षर § ॥ २ ॥

अथ तृतीया।

३१ १२ ३२उ ३ १ ३१ २
एनाविश्वान्यर्य आद्युम्नानिमानुषाणाम्।

१ २
सिषासन्तोवनामहे ॥ ३ ** ॥ ८ ††

"मानुषाणां" मनुष्याणां लब्धव्यानि "एना" एनानि "विश्वा" विश्वानि सर्वाणि "द्युम्नानि" यज्ञसाधनानि धनानि ‡‡ हे सोम! त्वत्प्रसादात् "आ" आभिमुख्येन "अर्य्यः" ¶¶ अभि-

* छ० आ० आर० १, ७ (२ भा० २५४ पृ०) = ऋ० वे० ७, १, २०, २।

† 'वरिवः वरिष्ठः। वित् भजनीयः'—इति वि०।

‡ 'नः अस्मभ्यम्'—इति वि०।

¶ 'यज्यवे यजमानार्थे—इति वि०।

§ 'परिस्रव परि समन्तात् दशापवित्रात् स्रव'—इति वि०।

** छ० आ० आर० १, ८ (२ भा० २५६ पृ०) = ऋ० वे० ७, १, २०, १।

†† इदं माध्यन्दिनपवमान साम्नन्।

‡‡ 'द्युम्नानि धनानि'—इति वि०।

¶¶ 'अर्य्यः यजमानः'—इति वि०।

गच्छन्तः वयं "सिषासन्तः" सम्भुक्त मिच्छन्तश्च * "वनामहे" त्वां सम्भजामहे † ॥ ३ ॥ ८

५ र २ ४र ५ २ १
॥ आमहीयवम् ॥ उच्चाताइइजातमन्धसाः। दिवा
२ १ २ १ २ १
इसाऽ१ह्नू२। मियार३ददाइ। उग्रंशर्मा। महार३
२ ५ २ ४र ५ १ २ २
इश्रवाउ। वा३ ॥(१) सनश्चार३इन्द्राययज्यवाइ। वरुणा
१ २ २ २र १
ऽ१यार। मरु२३द्भियाः। वरिवोवाइत्। परार३इश्र
२ ५रर २ ४र ५ २ १ २
वाउ। वा३ ॥(२) एनावार३इश्वानिअर्यआ। द्युम्नानाऽ१इ
२ १ २र २ १ २
मा२। नृषार३णाम्। सिषासन्ताः। वना२३महाउ।
२र १ १ १ १
वा३। स्तौषे२३४५(३) ॥ १ ‡ ॥ [१]

४ २ र ४ २ ३ ५
॥ क्षुल्लकवैष्टम्भम् ॥ उच्चाऽ५ते। जाइतमन्धसाः।
१ २ र १ २ १ २ २ १
दायिवीसद्भू। मियादा१दे२३। होवा३हायि। उग्राँ

---

* 'सिषासन्तः साधयन्तः'—इति वि०।

† 'वनामहे याचयामः'—इति वि०।

‡ ज० गा० १प्र० १ख० १सा०।

२ १ २ १ १ ३ ५र
आ१म्मौ२३। होवा२हायि। महि। आ२वा२३४औ

१ २ ४ ३ ४ २ ३ ५ १ २र
होवा॥(१) सनाऽ५द्द। द्रा३ययज्यवायि। वारुणाय। म

१ २ १ २ २ १ २
रुद्भ्या१या२३ः। होवा३हायि। वरायिवो१वी२३त्।

१ २ २ १ २ ५र र ४र ५
होवा३हायि। परि। स्मा२वा२३४औहोवा॥(२) एनाऽ५

४ २ ३ ५ १ र २ र १ २
वि। स्वा३निश्चर्य्यश्रा। द्युम्नानिमा। नृषा१णा२३म्।

१ २ १ १ २ १ २ २ १र
होवा३हायि। सिषासा१न्ता२३ः। होवा३हायि। वना।

३ ५र र ३ ५
मा२त्वा२३४औहोवा। दी२३४आः(३)॥१२*॥ [२]

१ २ १ २ १
॥ आजिगम्॥ उच्चातेजा। तमान्धासाः। दि

२र १ २ २ १ २ १
विसद्भ्। माया१दा२३दायि। उग्रा७शार्म्मा। महिश्रा

२ १ २ १ २ १ २र
२३वा३४३ः॥(१) सनाश्रायिन्द्रा। ययाज्यावायि। वरुणा

१ ० २ १ २ १ २
य। मारुद्भ्या२३याः। वरायिवोवीत्। परिस्मा२३वा३४

१र २ १ २ १ र २ र १
३॥(२) एनावायिस्वा। निश्राय्यार्श्चा। द्युम्नानिमा। नृ

* ऊ० गा० २प्र० १ख० १३सा०।

२ १ २ १२ २
षार२३णाम्। सिषासान्ताः। वनामार२३हा२३४३यि।
१
औ२३४५ई। डा (३)॥ ९ *॥ [३]

१ २ २ २ २
॥ आभीकम्॥ ऊ२३४त्वातेजा५। तमौहोन्धा
१ २ १ २ २ २ २ ५ १
साः। दिविसङ्भियार्दा३दे। उग्र९ग्भार२३४म्भी। मा
६ २ २ ५ १
हा२उवा२३४३। आ३४५वो६हायि॥(१) सार२३४नइन्द्रा५।
२ ४ ५ १ २ २ २ २ ३
ययौहोज्यावायि। वरुणायमरुद्भ्य१ङ्गा३याः। वरिवोर२३४
५ १ ६ २ २ ५ १
वीत्। पारा४उवा२३४३। सा३४५वो६हायि॥(२) आर२३४
२ २ ४ ५ १ २ २ १२ २
यिनाविश्वा५। नियौहोर्व्याश्रा। द्युम्नानिमानू१षा२णा
२ ३ ५ १ ६ २ २
म्। सिषासार२३४न्ताः। वाना२उवा२३४२। मा३४५हो
५
६हायि(३)॥ १० †॥ [४]

२ १२ ५ २ १ २ २
॥ गायत्रीवैरूपम्॥ उत्वाते२३४जा। तमान्धा२सा३ः।
१ ३ ५ १ २ १
दिवार्यिसा२३४ङ्। माया१दादा२यि। उग्रा२३म्।

* ऊ० गा० ६प्र० १अ० ९सा०।

† ऊ० गा० ६प्र० १अ० १०सा०।

२ ५र र २ १ २ ३१ १ १ १ २ १
शर्म्मा३४औहोवा। महिश्रवार३४५ः ॥(१) सनाआ२३४यि

५ २१ २ २ १ १ ७
न्द्रा। ययाज्या३वा३यि। वरुरणा२३४या। मारुद्भा

१ र २ ५र र २ १ २ ३ १ १
या २ः। वरा२३यि। वोवा३४औहोवा। परिस्रवा२३

१ १ २र १र ५ २ १ २ २ १
४५ ॥(२) एनावा२३४यिश्वा। निआर्या३आ३। द्युम्ना२

३ ५ १ २ १ ३ २
ना२३४यिमा। नृषा१णा२म्। सिषा२३। सन्ता३४

५र र २ १र २ ३ १ १ १ १
औहोवा। वनामहो२३४५यि(३) ॥ १२ * ॥ [५]

३ २ र र
॥ सत्रासाहीयम् ॥ उत्था३४। तेजातमन्धसः।

५ ५ १ र र १ १ १
ओ६वा। दिविसद्भूमियादा२दायि। उ२ग्राम्। शा

२ १ ६ र २ ३र २ १ ५ ५
२३र्म्मा। महौ३हो। वाहा३४३यि। आ२३४वो६हा

३ २ र र ५ ५ १ र
यि ॥(१) सना३४ः। इन्द्राययज्यवे। ओ६वा। वरुणाय

१ १ २ १ ६ २र
मरुद्भा२याः। वा२रायि। वो२३वीत्। परौ३हो।

३र २ १ ५ ५ ३र२ र
वाहा३४३यि। वा२३४वो६हायि ॥(२) एना३४। विश्वान्य

---

* ऊ० गा० ७प्र० १ख० १२सा०।

र ५ ५ १ र र १ १
र्य्यश्वा । ओ६वा । द्यु म्नानिमानुषा २णाम् । सा २यिषा ।
२ १ ऽ २र २२२ १ ५
सा२३न्ताः । वनो२वो । वाहा२३४५यि । मा२३४वो६
५
हायि(३) ॥ १२ * ॥ [६]

र र र र २ ४ ३
॥ स्वारसौपर्णम् ॥ उच्चाते जातमन्धा२सा: । दिवि
४र ५र १ ३ ५ १२ २ १
सद्भूमिया । हुम् । दा२३४दायि । उग्रा३उवा । शर्म ।
२१ ५ ४ ५ २ २ २
महो२३४वा । आ५वो६हायि ॥(१) सनद्रन्द्रायवज्या३वा
३ ४ ५र र १ ३ ५ १ र
यि । वरुणायमरु । ऊम् । द्भा२३४या: । वारा३उ
र र १ २१ ५ ४ ५ २२र
वा । वोवित् । परो२३४वा । आपुवो६हायि ॥(२) एना
र २ ४ ३र ४ ५र र १ ३ ५
विश्वान्यर्य्या३श्वा । द्युम्नानिमानू । ऊम् । षा२३४णाम् ।
१ २ २ १र २१ ५ ४ ५
सायिषा३उवा । सन्ता: । वनो२३४वा । मा५वो६हा
यि(३) ॥ १० † ॥ [७]

१ २ र १र २१ २ १
॥ आकूरवर्णम् ॥ उच्चा । तेजातमन्धसा: । दिवि

---

* ऋ० मा० ८प्र० २अ० ११सा० ।

† ऋ० मा० १०प्र० १अ० १०सा० ।

र  १२  २ ५  २१
सत्। भूमिया२। ददा३१उवा२३। ऊ३४पा। उग्र

२  १  २  १ २  १र
ऽम्भा२३मा। महिश्रवा३१उवा२३॥(१) सानाः। इन्द्राय

२१  २१२र  १  १ २
यज्यवायि। वरुणा। यमरु२। द्भिया३१उवा२३।

२ ५  २१  २  १ २  १
ऊ३४पा। वरिवो२३वीत्। परिस्रवा३१उवा२३॥(२) आ

२  १र  २१  २ १र २  १र  १र २
यिना। विश्वान्यर्या। द्युम्नानि। मानू२। षाणा३

१  २ ५  २१र  २  १र  २
माउवा२३। ऊ३४पा। सिषासा२३न्ताः। वनामहा३१

२  ५
उवा२३। ऊ२३४पा(३)॥ ११ *॥ [८]

२ रर १ २  १  २ १
॥ जराबोधीयम्॥ उच्चातेजोवा। तामन्धसाः।

२ १  २  र १  २
दिवायिसा२३द्भू। मियाददायि। उग्राऽम्भा१मा२३

४  ५  २ २  २  १ २  १
मा। हि। श्रवो३४५ई। डा॥(१) सनइन्द्रोवा। याय

२ १  २१  २  १  २
ज्यवायि। वरुणा२३या। मरुद्भ्यायाः। वरायिवो१वी

४  ५  ३ २  १र र  १ २  १
२३त्या। रि। स्रवो३४५ई। डा॥(२) एनाविश्वोवा। ना

* ऊ० गा० १०प्र० १ख० ११मा०।

२ १ २ १ २ १ २
अर्य्या। द्युम्नाना२३यिमा। नृषाणाम्। सिषासा

४ ५र ३ २
१न्तार२३वा। ना। मह्यो३४५ई। डा(३)॥ १४*॥ [९]

२र र र र
॥ ऋषभः पावमानम्॥ हाहाउआतेजा। हा३।

२ १ २ ५ २ १ र २ २
हा३यि। तामार्न्या२३४सा:। दिविसद्भूमियार्दा३

२ २ ५ १ २ ४ ५ ४
हे। उग्रँष्मार२३४म्मी। ओमो३। मह्योवा। आ५

५ २र र २ १
वो६हायि॥(१) हाहाउसनइन्द्रा। हा३। हा३यि। या

३ ५ १ र २ २ २ ३
या२ज्या२३४वायि। वरुणायमरु१द्भा३या:। वरिवो

५ १ २ ४ ५ ४ ५ २र
२३४वीत्। ओमो३। परोवा। आ५वो६हायि॥(२) हा

र र र २ १ ३ ५
हावेनाविश्वा। हा३। हा३यि। नाआर्य्या२३४आ।

१ र र २ २ २ २ ३ ५ १ २
द्युम्नानिमानृ१षा३णाम्। सिषासा२३४न्ता:। ओमो३।

४ ५ ४ ५
वनोवा। मा५ह्योई हायि(३)॥ १५†॥ [१०]

---

* ऊ० गा० ११प्र० १अ० १४सा०।

† ऊ० गा० ११प्र० १अ० १सा०।

२ १र २ २र १ र र २
॥ गौषूक्तम् ॥ उच्चातेजातमौ। हौहोवाहायि।
१ र २ १
धसाः। दिविसद्भूम्यौ२। ऊवायि। ऊवा२यि।
१ १ २ १
हादा२यि। उग्रꣳशर्ममहौ२। ऊवायि। ऊवा२
१ १ ३ ५र र १ २ १ २र १
यि। आवा२३ः। हो२वा२३४औहोवा ॥(१) सनइन्द्राय
र र २ १ र २
यौ। हौहोवाहायि। ज्यवायि। वरुणायमरौ२।
१ १ १ र २
ऊवायि। ऊवा२यि। द्भाया२ः। वरिवोवित्परौ२।
१ १ १ ५र र
ऊवायि। ऊवा२यि। आवा२३। हो२वा२३४औहो
२र १र २र १ र र २ १ र
वा ॥(२) एनाविश्वान्यौ। हौहोवाहा। यआ। द्युम्ना
र २ १ १
निमानुषौ२। ऊवायि। हुवा२यि। षाणा२म्।
१ र र २ १ १
सिषासन्तोवनौ२। हुवायि। हुवा२यि। माहा२३यि।
१ ३ ५र र २ १ र २ ३ १ १ १ १
हो२वा२३४औहोवा। अग्निराहुता२३४५ः(३) ॥ २*॥ [११]
१ र र र १ २ १
॥ सारसैन्धुक्षितम् ॥ उच्चातेजातमन्धासाः। दा

* ऊ० गा० १२प्र० १अ० २सा०।

२ १ २र र २ १
यिविसद्भू। मियादादौ। होवा३हायि। ऊमा२७
१ २ १ ५ ४ ५ २ र
शार्म्मा२३। मद्दो२३४वा। आपूवो६हायि॥(१) सनइन्द्रा
१ २ १ २र १ २र र २
ययज्यावायि। वारुणाय। मरुद्भायौ। होवा३हा
१ १ २१ ५ ४ ५
यि। वारा२यिवोवी२३त्। परो२३४वा। आपूवो६हा
२र र र १ २ १ र २ र १ २र
यि॥(२) एनाविश्वानिअर्य्याआ। द्यूम्नानिमा। नूषाणौ।
र २ १ १ २१ ५ ४
होवा३हायि। सायिषा२सान्ता२३ः। वनो२३४वा। मा
५
पूर्चो६हायि(३)॥ ७ *॥ [१२]

२ र र १ २ १ २ ३
॥ ऐडसौपर्णम्॥ उच्चातेजोवा। तामन्धा२३४
५ १२ १ ० ३ ३
साः। दिवायिसद्भू। मिया२दा२३४दायि। ऊ२
१ २ १ २ १ २ ४ ५ २
ग्राम्। शा२३र्म्मा। माहिश्रवा। औ३होवा॥(१)सन
१ ५ १ २ ३ ५ २ १ २र १ ० ३
इन्द्रोवा। यायज्या२३४वायि। वरुणाया। मरु२द्भा
५ १ २ १ २ १ २
२३४याः। वा२रायि। वो२३वौत्। पारिस्रवा। औ

* ऊ० गा० १२प्र० २ख० ७सा०।

३होवा ॥(२) एनाविश्वोवा । नाअर्या२३४आ । द्युम्ना
नि्मा । नृ२पा२३४णाम् । सा२यिषा । सा२३न्ता: ।
वानामहा । औ३होवा । होऽ५ई । डा(३) ॥ १७* ॥ [१३]

॥ मुहूपोत्तरम् ॥ उच्चातेजौहो२ । इया । तम
न्धासा२: । दिविसद्भौहो२ । इया । मियादादा२
यि । उग्रꣳशर्म्मौहो२ । इया । महिश्रा२३वा२४३: ॥(१)
सनइन्द्रौहो२ । इया । ययज्यावा२यि । वरुणायौहो
२ । इया । मरुद्भाया२: । वरिवोवौहो२ । इया ।
परिस्रा२३वा२४३ ॥(२) एनाविश्वौहो२ । इया । निअर्या
आ२ । द्युम्नानिमौहो२ । इया । नृषाणा२म् । सि
षासन्तौहो२ । इया । वनामा२३हा२४३यि । औ२३
४५ई । डा (३) ॥ २ † ॥ [१४]

* ऊ० गा० १३प्र० १ख० १७गा० ।

† ऊ० गा० १५प्र० १ख० २गा० ।

२र र र १
॥ अद्रारहत् ॥ हाऊहातेजा। तमा२न्धासा२:।

१ र २ १ १ १
दिविसद्भूमिया२दादा२यि। उग्रा२ꣳशार्म्मा२। महि।

३ ५र र २र १
आ२वा२३४औहोवा ॥(१) हाउसनइन्द्रा। यया२ज्यावा।

१ र २ २
२यि। वरुणायमरु२द्भाया२:। वरा२यिवोवी२त्।

१ २ ५र र २र र र
परि। आ२वा२३४औहोवा ॥(२) हावेनाविश्वा। निश्वा

१ १ र र १ १
२र्य्याआ२। द्युम्नानिमानू२षाणा२म्। सिषा२सा

१ २ ५र र २ १ २ र
न्ता२:। वना। मा२हा२३४औहोवा। अस्मभ्यञ्जातु

१ २ २ १ १ १ १
वित्तमा२३४५म्(३) ॥ ४ * ॥ [१५]

२र र १ २
॥ इडानाꣳसंहारः ॥ औहोयिहुवा२होयि। उ

र र ४ २ २ ५ २ ४ २ २ ५
ग्रातेजा३ता३मन्धसः। दिविसद्भूमी३यादादायि।

३ २ २ ५ २ १ १ १ २
उग्राꣳशा२३४र्म्मा। महिश्रवः। इडा२३ ॥(१) सनइन्द्रा३

४ २ २ ५ २ र ४ २२ ५ ३२ २
या३यज्यवायि। वरुणाया३मा३रुद्भियः। वरायिवो२३

* ऋ० गा० १५प्र० १ख० ४सा०।

४वीत्। परिस्रव। इडा२३॥(२) एनाविश्वा२नी३अर्य्यआ।
द्युम्नानिमा२नू३षाणाम्। औहोयिहुवा३होयि। सिषा
सा२३४न्ता:। वनामहे। इडा२३भा३। एहीडा।
होऽ५इ। डा(३)॥ ५*॥ [१६]

॥ आष्ठुभार्गवम्॥ उच्चाते। जातमन्धा३सा:।
दायिविसद्भू३। मायाँ२दा२३४दायि। उग्रा१ऽश्मा१
म्मौं२। महा३यि। आ२३४औहोवा॥(१) सनद्रु। द्रा
ययज्या३वायि। वारुणाया२। मारुह्व२द्भा२३४या:।
वरायिवो१वौरन्त्। परा३यि। स्रा२३४वोहाइ॥(२) ए
नाविश्वानि। अर्य्या३आ। द्युम्नानी३। मानूर्षा२३
४णाम्। सिषासा१न्ता२:। वना३। मा२३४वोहा
यि(३)॥ ११ †॥ [१७]

---

* ऊ० गा० १५प्र० १ख० ५सा०।

† ऊ० गा० १९प्र० १ख० ११सा०।

॥ सौमित्रम् ॥ उच्चातेजातमन्धसाइए। दिविस

द्भूमि। आ२१२३। ददा३४३यि। ऊर३ग्राम्। म

र्मा२औ२३। महोवा। आपुवो६हायि॥(१) सनइन्द्राय

यज्य्वाइए। वरुणायम। रु२१२३। द्भियाउ४३ः।

वा२इरायि। वोवा२औ२३। परोवा। आपुवो६हा

यि॥(२) एनाविश्वान्यर्य्याआइए। द्युम्नानिमा। नू२१२३।

षाणा३४३म्। सा२३यिषा। सन्ता२औ२३। वनो

वा। मापुवो६हायि(३)॥६*॥[१८]

॥ ऐटतम् ॥ उच्चा। एउच्चा। तेजातम्। आ

३। जा२मा२३४औहोवा। धा२३४साः। दिवायिसा

२३४द्भू। मियार। मा२या२३४औहोवा। दा२३४दे।

उग्रा२श्शा२३४र्म्मा। महा३यि। मा२हा२४४औहोवा।

---

* ऊ० गा० २०प्र० १अ० ६सा०।

आ२३४वाः ॥(१) सनः। एसानाः। इन्द्राय। या। ३।
या२व्या२३४औहोवा। ज्या२३४वे। वरुणा२३४या।
मरु३। मा२रु२३४औहोवा। द्भ्योर२३४याः। वरायिवो
२३४वोत्। परा३यि। पा२रा२३४औहोवा॥ वा२३४वा॥(२)
एना। एन्नायिना। विश्वानि। आ३। ना२आ२३४औहो
वा। र्यी२३४आ। द्युम्ना२३४नी। मानू३। मा२नू२३४
औहोवा। षा२३४णाम्। सिषासा२३४न्ताः। वना३।
वा२ना२३४औहोवा। मा२३४हे(३) ॥ ७ *॥ [१९]

॥ पुरासाकमश्वम् ॥ उच्चातेजा३। हौ३हो३१।
तमन्धसा३ः। हौ३हो३१यि। दिविसद्भू३। हौ३हो
३१यि। मियाददा३यि। हौ३हो३१यि। उग्रꣳशर्म्मा
३। हौ३हो३१यि। महिश्रवा३ः। हौ३हो३१२३४५ई।

* ऊ० गा० २०प्र० १ख० ७गा०।

डा ॥(१) सनइन्द्राइ। हौ३हो३१। ययज्यवा३यि। हौ
३वो३१यि। वरुणाया३। हौ३वो३१यि। मरुद्भिया
३ः। हौ३वो३१यि। वरिवोवी३त्। हौ३वो३१यि। प
रिस्रवा३। हौ३वो३१२३४५ई। डा ॥(२) एनाविश्वा३।
हौ३वो३१। निअर्य्यआ३। हौ३हो३१यि। द्युम्नानि
मा३। हौ३वो३१यि। नृषाणा३म्। हौ३वो३१यि।
सिषासन्ता३ः। हौ३वो३१यि। वनामहा३। हौ३हो
३१२३४५ई। डा(३) ॥ ८ * ॥ [२०]

॥ विलम्बसौपर्णम् ॥ उच्चातेजातमन्धसः। इ्य
द्याहायि। दिविसद्भूमिया। हा३हा३यि। दा२३४
दायि। ऊग्रा३उवा३। शार्म्मा२३४औहोवा। महि
श्रवा२३४५ः ॥(१) सनइन्द्रायजज्यवे। इ्यद्याहायि। व

* ऊ० गा० १०प्र० १अ० ८सा०।

ह्रुणायमह्रु। हा३हा३यि। द्भार३४या:। वारा३उ
वा३। वो३वा३४औहोवा। परिस्रवा२३४५॥(२)एन।
विश्वान्यर्य्यआ। ईयह्याहाहि। द्युम्नानिमानू। हा३
हा३यि। षा२३४णाम्। सायिषा३उवा३। सा३न्ता
२३४औहोवा। वनाम्सहा२३४५यि(३)॥ ८ *॥ [२१]

॥ मार्गीयवाद्यम्॥ उत्तौहोवा। तेजार। नमो
न्धा२३४सा:। दिविसद्भू। मियादा१दा२यि। उग्र
म्। हा। औ३होयि। ष्मा२३४म्मा। मा२हा२३४
औहोवा। ए३। अवा२३४५ः॥(१)स्नौहोवा। आयि
न्द्रा३। ययाज्या२३४वायि। वरुणाय। मह्रुद्भ्या१
या२ः। वरा। हा। औ३होयि। वो२३४वीत्। पा

* ऊ० गा० २०म्प० १ख० ८सा०।

रेरा२३४औहोवा। ए३। स्वा२३४५॥(२) एनौहोवा।
वायिश्वार। निश्चाय्यो२३४आ। द्युम्नानिमा। नृषा१
णा२म्। तिषा। हा। औ३होयि। सा२३४न्ताः।
वा२ना२३४औहोवा। ए३। महा२३४५यि(३)॥ १४*॥[२२]

॥ ऐडकौत्सम॥ सनाद्धीन्द्रा२३। ययज्ज्यवद्दीया।
वरुणायमरुद्भ्रियः। वारुणाय। मरुद्भा२३याः। वा
रा३यिहायि। वोवी३हायि। परिवा२३वा३४३। ओ
२३४५ई। डा(२)॥ ४ †॥ [२३]

॥ सौमित्रम्॥ एनाविश्वान्यर्य्याआ३ए। द्युम्नानि
मा। नृ२१२३। षाणा३४३म्। सा२३यिषा। सन्ता
२ओ२३। वनोवा। मापूहो३ईहायि(३)॥ १९‡॥[२४] ८

* ऊ० गा० २०प्र० २अ० १४सा०।

† ऊ० गा० २२प्र० १अ० ४सा०। द्वितीयस्या ऋचोगानमेतत्।

‡ ऊ० गा० १६प्र० १अ० १९सा०। तृतीयस्या ऋचोगानमेतत्।

द्वितीय-सूक्तरूपे प्रगाथे* प्रथमा—

२ १ २ ३ १ २ ३ १ २र
पुनानः सोम धारयापो वसानो अर्षसि ।

१ २ ३ १ १ २र ३ १ २ ३ १ २ ३१ २ ३ १ २
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ १† ॥

हे सोम ! "पुनानः" पूयमानस्त्वम् "अपः" उदकानि वसतीवर्य्याख्यानि "वसानः" आच्छादयन् "धारया" "अर्षसि" पवित्रं गच्छसि, ततो "रत्नधा" रत्नानां रमणीयानान्धनानां दाता च "ऋतस्य" सत्यभूतस्य यज्ञस्य "योनिं" स्थानम् "आसीदसि"। कीदृशस्त्वम् ? "उत्सः" प्रस्यन्दनशीलः "देवः" द्योतमानः "हिरण्ययः" हिरण्मयः सुवर्णोत्पत्तिस्थान मित्यर्थः ॥

"उत्सोदेवः"—"उत्सोदेव"—इति पाठौ ॥ १ ॥

---

* "प्रकर्षेण ग्रथनं यत्र स प्रगाथः। प्रकर्षो नाम आम्नाता दृक्पाठा द्विवित्वम्" —इति सी० ह० अ० ६, २, ६ अधि० १वर्णके माधवव्याख्यायाम्। एष च प्रगाथः—पादाभ्यास-पुरःसर मृगन्तरसम्पादनेनोपजायते। अत्र च "पुनःपदा"—इति श्रौतोक्तिर्लिङ्गम्। तथा च श्रूयते ताण्ड्ये तृतीये —"एषा वै प्रतिष्ठिता बृहती या पुनः पदा तद् यत् पदं पुनरारभते तस्माद् वत्सो मातर मभिहिङ्करोति"—इति। अस्यार्थः—या बृहती पुनः पदा भवति, सैषा प्रतिष्ठिता स्थिरा भवति ; पदं चतुर्थः पादः सोऽप्यृगन्तर-सम्पादनाय पुनः पठ्यते, ततः सा बृहती पुनः पदा ; सेय मृङ्माता, तस्याः पादो वत्सः ; तथा सति यस्मादन चतुर्थं पाद मुद्गाता पुनरारभते तस्माद् वत्सो मातर मभि वीक्ष्य हि मिति शब्दं करोतीति।

† छ० आ० ६,१,२,१ (२भा० ७० पृ०)=ऋ० वे० ७, ४, १२, ४। छ० बृहती। दे० ऋ० पूर्ववत्।

अथ द्वितीया।

२ १र २र३ १र २र३२३ २ ३२३१ २
दुहानऊधर्दिव्यम्मधुप्रियम्प्रत्नꣳसधस्थमासदत्।

२ १ २ ३१२३२र ३१२३ १ २ ३ २
आपृच्छन्न्यन्धरुणंवाज्यर्षसिनृभिर्धौतोविचक्षणः॥ २*॥९†

"मधु" मदकरं ‡ "प्रियं" प्रीणनकारि ¶ "दिव्यं" दिवि-भवम् "ऊधः" सोमवल्ली-लक्षणं "दुहानः" पवमानः § सोमो-देवः "प्रत्नं" पुरातनं "सधस्थं" सह तिष्ठन्त्यत्रेति सधस्थं स्थानमन्तरिक्षम् ॥ "आसदत्" आसीदति [सदेर्लुङि रूपं] तदनन्तरम् "आपृच्छ्यं" कर्मणा प्रष्टव्यं "धरुणं" कर्मणो धारयितारं यजमानं "वाजी" अन्नवान्** सन् हे सोम! त्वम् "अर्षसि" तस्मै अन्नं दातुं गच्छसि। कीदृशः? नृभिः कर्मनेतृभिर्ऋत्विग्भिः "धौतः" अद्राभ्यग्रहे परिशोधितः

---

* ऋ० वे० ७, ५, १२, ५। † इदं माध्यन्दिनपवमानं द्वितीयम्।

‡ 'मधु स्वादु सोमाख्यम्'—इति वि०।

¶ 'प्रियं देवमनुष्याणाम्'—इति वि०।

§ 'दुहानः दुह्यमानः। ऊधः ऊधसः एकाम्शात् द्रव्यापगिनरूपात्। अथवा ऊधउदकं यत्र क्रियते सोमस्य एकाम्शात् तद् दुह्यते'—इति वि०।

|| 'सधस्थं स्थानं द्रोणकलशाख्यम्'—इति वि०।

** अन्नानि—सोमः, चरुः, पशुः, धानाः, करम्भः, पुरोडाशः, सतीवापः, पय-स्येति।

[ "तैरेनं* चतुराप्नोति पञ्च कृत्वः सप्त कृत्वो वा (१२, ५, १७)"—इत्यापस्तम्बेन सूचितम् ] "विचक्षणः" सर्वस्य विद्रष्टा॥

"नृभिर्हीता"—"नृभिर्धूतः"—इति पाठौ॥ २॥ ९

२ र   २   १   ५   १ २
॥ रौरवम्॥ पुनानःसोमाइधारा२३४या। आपो
२ र   २   २ र   ३ २   १ २
वसानोअर्षस्यारत्नधायोनिम्नतस्यसा२इदसाइ। ओहा
२   १ र २र   २   १ २   २   १
इउवा। उत्सोदेवोहिरा२३ण्याइ। ओहाइउवा। ययाः।
२ ४ ५   २ र र र   १   ५   १ र र
वौ३होवा॥(१) उत्सोदेवोहाइरण्या२३४यः। उत्सोदे
र   र   र   र   ३ २   १ २
वोहिरण्ययोदुहानऊधर्हिव्यम्मधू३प्रियाम्। ओहाइउ
२ १   २   १ २   २   १
वा। प्रत्नꣳसधस्थमा२३साइ। ओहाइउवा। सदात्।

---

* तैः निग्राभ्य-सञ्ज्ञकाद्भिः, एनं सोममित्यर्थः; अदाभ्यग्रहे इति सङ्गति-सञ्ज्ञः। अदाभ्यमिति ग्रहविशेषस्य नाम; तथाहि—'अदाभ्यं व्याख्यास्यामः निग्राभ्याः पात्रे तस्मिंस्त्रीन् सोमांशूनवधायाग्नये त्वा गायत्रच्छन्दसमिति प्रतिमन्त्रमुपयामः सर्वत्राविशेषात्'—इति का० श्रौ० सू० १२, ५, १३—१५। तदर्थः—अग्निष्टोमौदुम्बरे पात्रे अंशून् गृहीत्वा तस्मिन् सोमांशूनसस्था निग्राभ्य-सञ्ज्ञा अप आनीय तस्मिंस्त्रिः सोमलताः अग्नये त्वेत्यादिभिर्मन्त्रैः क्रमेणादाभ्यं ग्रहं गृह्णाति। अन्यैः सोमलता ग्रहेषो नेति केचित्। उपयामगृहीतोऽसीत्येतत् त्रिष्वपि मन्त्रेष्वादावनुषञ्जनीयं सर्वत्राविशेषादाम्नातत्वेति॥ किञ्च अभिषोतव्यस्य सोमस्य सेचनीया आपो निग्राभ्या उच्यन्ते।

४ ५ २ १ ५ १
औरे३होवा ॥(२) प्रत्नꣳसधस्था३मासा२३४दात्। प्रात्नꣳस

२ २ २ ३ २ १ २ २
धस्थमासदद्दापृक्क्नन्धरुणंवाजियार्षसाइ। ओहा३उवा।

१ २ १ २ १ २ २ १ २
नृभिर्द्धौतोविचा२३हाइ। ओहा२उवा। ज्णा। औ

४ ५ ४
३होवा। हो५इ। डा(३)॥ २ *॥ [१]

३ २ २ ४ ५ २
॥ यौधाजयम्॥ पुना३१। ना३ःसो। म। धा

२ ५ १ २ १ ३ २ २ ५
रा२३४या। आपो३। वसा२। नश्रा३४५। षा२३४सी।

२२ १ २ १ २२ १ ३ २ २
आरात्नधाः। यो। निम्हता२। स्यसा३४५इ। दा२३

५ २ १ ३ २ २
४सी। उत्सा२ः। दाइवो२। हिरा३४५। ण्या२३४

२ ३ २ २ ४ ५ २ २ ५ २
याः ॥(१) उत्सो३१। दे३वो। हि। रण्या२३४याः। उ

२ १ ३ २ २ ५ २ १ २
त्सो३। दाइवो२। हिरा३४५। ण्या२३४याः। दुहान

१ २ १ ३ २ २ ५ २
ऊ। धः। दिवियारम्। मधू३४५। प्री२३४याम्। प्र

१ ३ २ २ ५ २
त्ना२म्। साधा२। स्थमा३४५। सा२३४दात्॥(२)प्र

---

* ऊ० गा० १प्र० १अ० २सा०।

२ २ ४ ५ २ ३ ५ १२
त्वा२१म्। सा३ध। स्थम्। आसा२३४दात्। प्रात्वा

१ ३ २ ३ ५ २र १
३म्। सधा२। स्थमा२४५। सा२३४दात्। आपा

२ १ २ १ ३ २ ३ ५
क्रियाम्। ध। रुणांवा२। जिया३४५। पा२३४सी।

२ १ ३ २ २ ५
नृभा२ह्नः। धीतो२। विचा ३४५। त्वा २ ३ ४ णाः(३)

॥ ३ * ॥ [ २ ]

१ २ १ २ १र
॥ ऐडमायास्यम् ॥ आयिपुना। ना:सो। मधार

र २ २र १ २
या। आपोवसा३१। नोअर्षसी। आरत्नधा३१ः।

र २१र २ २ १
योनिमृता। स्यसीदसी। उत्सोदेवा३१ः। हिरण्यार

२ १ २ १ २ १
३या३४३ः॥(१) आउत्साः। दायिवो। हिरण्ययाः। उ

२ २ १ र २
त्सोदेवा३१ः। हिरण्ययाः। दूहानऊ३१। धर्दिवियाम्।

२ १ २ २ १र २
मधुप्रियाम्। प्रात्नꣳसधा३१। स्थमासा२३दा३४३त्॥(२)

१ २ १ २ १र २
आयिप्रत्नाम्। साधा। स्थमासदात्। प्रात्नꣳसधा

२ १र २ २
३१। स्थमासदात्। आपृच्छिया३१म्। धरुणांवा। जि

---

* ऊ० गा० १प्र० १अ० ३खा०।

१ १ १ १ २ १
यर्वसायि। नृभिर्द्धौताइ१ः। विचक्षाइ२णा३४३ः। औ
२३४५ई। डा (३)॥ २० * ॥ [३]

१र २ २ र १ २
॥ त्रिणिधनमायास्यम्॥ पुनानःसोमधाराहाउम्वोवा।
१ २ ३ ५ १ २ १ २ ५
रायाञ्चा२३४पो। वसा२। नञ्चा३४५। पा२३४सी।
१र २ ३र ४र ५ १ र र २ १
त्रारा३४। औहोवा। त्वधायोनिन्तृता२। स्वसा३४५
२ ५ १ २ ३र ४र ५ १
यि। हा२३४सी। उत्सा३४। औहोवा। हायिवो२
२ १ २ ५ १र र र र र १ २
हिरा३४५। ण्या२३४याः॥(१) उत्सोदेवोहिराहाउम्वोवा।
१ २ २ ५ १ २ १ २
ण्यायोञ्ज२३त्साः। हायिवो२। हिरा३४५। ण्या२३४
५ १ २ ३र ४र ५ १ र २ १
याः। दुहा३४। औहोवा। नक्षधर्हिं वियार२म्। मधू
२ ५ १ २ ३र ४र ५ १
३४५। औ२३४याम्। प्रत्ना३४। औहोवा। साधा
२ १ २ ५ १ र र
२। स्थमा३४५। सा२३४दात्॥(२) प्रत्नꣳसधस्थमाहाउ
१ २ १ २ २ ५ १ २ १
वोवा। सादन्तप्रा२३४न्नाम्। सधा२। स्थमा३४५।

* ऋ० गा० १प्र० २अ० १०मा०।

२ ५ १र २ ३र ४र २ १ ४
सा२३४हात् । आया३४ । औहोवा । इन्द्रस्तंनार२ ।

७ २ ३ ५ १ २ ३र ४र ५ १
जिया३४५ । पा२३४सी । नृभा३४ । औहोवा । धौ

४ २ १ २ ५
तौ२ । विचा३४५ । स्ता२३४ता:(३) ॥ १ * ॥ [४]

२र र १ २र १र १ १ २ १र
॥ कण्वरथन्तरम् ॥ पुनानःसोमधारया । अपोवसा ।

२ १ २ २ र र र र २ ५र
नो३आर्षा३सी । आरत्नधायोनिमृतस्यसीदसा२३४ऐही ।

२ १र ५ २ २ २ ३
उत्सोदा२३४यिवाः । हिरा३१उवा२३ । ए३ । ण्यय

२ र र १र २र १ २ १ २ १र र र २ १
आ ॥(१) उत्सोदेवोहिरण्ययाः । उत्सोदेवो । हा३यिरा

२ २ र र २ ५र २ १
ण्या३याः । दुहानऊधर्दिव्यम्मधुप्रिया२३४मैही । प्रत्नꣳ

५ २ २ २ ३ २ र
सा२३४धा । स्थमा३१उवा२३ । ए३ । सदद्‌ा ॥ (२)प्रत्नꣳ

१ २ १र २ १ २ १ २ १ २ २ र
सधस्थमासदात् । प्रत्नꣳसधा । स्था३मासा३दात् । आ

र २ ५र २ १ ५ २
पृच्छ्यन्धरुणंवाजियर्षसा२३४ऐही । नृभिर्यौ२३४ताः । वि

२ २ ३ २
चा३१उवा२३ । ए३ । क्षणा (३) ॥ ४ † ॥ [५]

---

* ऊ० गा० २प्र० १अ० १खा० ।

† ऊ० गा० ४प्र० १अ० ४खा० ७।

५ र २ ४र५४र ५ १
॥ गौङ्गवम् ॥ पुनाना३:सोमधारया। आपोर।

१र ३र २ ४ ५ २र १ र र १
वसानोआ३। षासायि। आरत्नधायोनिमार२३त्तोर।

३ २ ४ ५ २र १ र र ३ २ ४
स्यसा३यिदासायि। आरत्नधायोनिम्हत। स्यसा३यिदा

५ १ र र १ २ २ १ ५
सायि। ऊत्सोर्द। वा। औ३हो। ह्विरोर३४वा।

४ ५ ५ र २ ४र ५र ५ १
ण्यापूयो६हायि॥(१) उत्सोदा३यिवोह्विरण्ययाः। ऊत्सो

१र र ३ २ ४ ५ २र १र १
र। देवोह्विरा३। ण्यायाः। दुहानऊधर्हिं वार३यार्म्।

३२ र ५ २र १र ३२ ४ ५
मधू३प्रायाम्। दुहानऊधर्हिंवियम्। मधू३प्रायाम्।

१ २ १ २ २ १ ५ ४
प्रात्न९ंस। धा। औ३हौ। स्थमोर३४वा। सा५दो

५ ५ २ ४५४र ५ १
६हायि॥(२) प्रत्न९ंसा३धस्थमासदात्। प्रात्नार्म्।

१ ३ २ ४ ५ २र १ १ ३ २
सधस्थमा३। सादात्। आपृच्छ्यन्धरूणा२३वा२। जिया

४ ५ १ २र १ २ २ १ ५
३र्षासायि। नृभिर्द्धौं। ता। औ३द्धो। विचोर३४वा।

४ ५
सा५णो६हायि(३) ॥ ५ * ॥ [ ६ ]

---

* ऊ० गा० ४प्र० १ख० ५सा०।

४ र २ ४र १२४५र १
॥ द्विनिधनमायास्यम्* ॥ पुनानःसोमधारया। ए३।

४ १ २ १ २२ २
औ३होऽ५वाऽऽ। आपो३। वसा२। नआ३४५। धा

१ ११११ १ २१ २१ २ १
३सो२३४५। आरत्नधाः। योनिमृता। स्यासा३आ।

२ ४ ५ २१ २ २ १
औ३हो३। दा२३४सो। उत्साऔ३हो। दायिवो२।

२२ २ १११११ २४र २३र ४ ५
हिरा३४५। ण्या३या२३४५ः ॥(१) उत्सोदेवोहिरण्ययः।

२ २ ४ १२ १ २१
ए३। औ३होऽ५वाऽऽ। ऊत्सो३। दायिवो२। हिरा

२ ११११ ५र २१ २१
३४५। ण्या३या२३४५ः। दुहानऊ। धार्दिवियाम्।

२ १ २ ४ ५ ११ २ २
माधू३आ। औ३हो३। प्रो२३४याम्। प्रत्नाऔ३हो।

१ २२ २ ११११ ४३ ४२४
साधा२। स्थमा३४५। सा३दा२३४५त् ॥(२)प्रत्नꣳसधस्थ

३र ४५ २ ४ ४ १२ १
मासदत्। ए३। औ३होऽ५वाऽऽ। प्रात्ना३म्। सधा२।

२२ २ ११११ १ २१
स्थमा३४५। सा३दा२३४५त्। आपृच्छियाम्। धारु

* "त्रिरचीम मायास्यम्"—इति ख० पु०।

यंवा। आयाऽ२स्रा। औ२हो३। पा२३४सौ। नूभाऔ
३हो। धीतोर२। विचा ३ ४ ५। श्राइणा २ ३ ४ ५:(३)
॥ ६ * ॥ [७]

॥ उत्सेधम् ॥ पुनानःसोमधारया। पः। वसा३४
औहोवा। नोअर्षसाऽ२यि। हा२१उवा२३। ऊ२३४पा।
आराइत्नधा। औहोवाहायि। योनिमृता। ऋसीदा
सि। हा३१उवार२३। ऊ२३४पा। उत्सो२देवः। औ
होवाहायि। हिरा३ण्यार्५याई५ई: ॥(१) उत्सोदेवोहिर
ण्ययः। उत्सः। देवा३४औहोवा। हिरण्ययाऽ२ः।
हा३१उवा२३। ऊ२३४पा। दुहा३नऊ। औहोवाहायि।
धार्हियाम्। मधुमायम्। हा३१उवा२३। ऊ२३४पा।
प्रत्ना३ऽसध। औहोवाहायि। स्थमा३सा५दाई५त्॥(२)

* ऊ० गा० ४प्र० १ख० ६गा०।

४ २ ४ ३ ४ ३र ४ ५ २ १ ३र ४र ५ १
प्रत्नꣳसधस्थमासदत्। प्रत्नम्। सधा३४औहोवा। स्थ
१र २ ५ ३र २ ५
मासदा॒ऽ२त्। हां३१उवा२३। ऊ३४पा। आपा३र्च्छि
५र ४ ५ १ २ १ २ १ २
याम्। औहोवाहायि। धारुणंवा। जियर्षासि। हा
२ ५ २ २ ४र ५र ४ ५
३१उवा२३। ऊ३४पा। नृभा३यिद्यौतः। औहोवाहा
३ २ ४ २ १ १ १ १
यि। विचा३क्षापूणा६५६ः। ऊ२३४५(३) ॥११*॥ [८]

४ २ ४ २ ४र ५
॥ यज्ञायज्ञीयम् ॥ पुनाऽ५नः। सो३मा३धारायो।
१ र २ १ २ २ १र १ र र
आपोवसा। नो३आर्षा३सी। आरा२त्नधायोनिम्र्।
२ १ २ २ १ र र र
तस्या२३सा। ऊम्मायि। दा३सायि। ऊत्सोदेवोहिरा
२ २ १ २ १ २ १ २ २
२ण्ययाउ ॥(१)ऊत्साः। दायिवो। हा३यिराण्या३याः।
१ १र २ १ २ २
दुहा२नऊधर्हिवि। यम्मा२३धू। ऊम्मायि। प्रा३याम्।
१ २ २ १ २ १ २
प्रत्नꣳसधस्थमा२सदाउ ॥(२)प्रात्नाम्। साधा। स्था३
१ २ २ १ १ र २
मासा३दात्। आपा२र्च्छ्यम्बरुणम्। वाजा२३या।

* ऊ० गा० ६प्र० १अ० ११सा०।

१ २ १ १ २र ३ २
ऊर्म्मायि । षा२सायि । नृभिर्ह्मौतोविचा२र्षणाउ । वा
१ १ १
३४५ (इ) ॥ १२* ॥ [८]

२र र २र १ २ १
॥ निषेधम् ॥ पुनानःसोमा३धारया । अपोवसा ।
२र १ १ २ १ २ ४ ५ २ ३
नोअर्षसा२यि । इहा३ । आरा३त्नाधाः । हाहो२३
५ १ २ १ २ र १ २ १ २ १
४हा । योनिमृता । स्यसीदा२३सायि । इहा३ । ऊ
२ ४ ५ २ ३ ५ ३ २ ४
त्सो२दायिवाः । हाहो२३४हा । हिरा३ण्याप्पूया६५६ः ॥(१)
२ र र र २ १ २ र १ १ १
उत्सोदेवोहा३यिरण्ययाः । उत्सोदेवो । हिरण्यया२ः ।
१ २ १ २ ४ ५ २ ३ ५ १ २ १
इहा३ । इहा३नाऊ । हाहो२३४हा । धाहिँवियाम् ।
२ १ २ १ २ १ २ ४ ५ २ ३
मधुमा२३याम् । इहा३ । प्रत्ना३ꣳसाधा । हाहो२३
५ ३ २ ४ २ २र
४हा । स्थमा३सा५दा६५६त् ॥(२) प्रत्नꣳसधस्था३मासदा
१ ११ २ र १ १ २ १
त् । प्रत्नाꣳसधा । स्थमासदा२त् । इहा३ । आ
२ ४ ५ २ ३ ५ १ २ १ २ १
पा३र्च्चीयाम् । हाहो२३४हा । धारुणंवा । जियर्षी

* ऊ० गा० ६प्र० १अ० १२सा० ।

२ १ २ १ २ ४ ५ २ १ ५
२३सायि। इहाइ। नृमाइयिद्यौताः। हाहोर२३४हा।
३ २ ४ ३११११
विचाइत्वा५णा६५६ः। चे२३४५ (३) ॥ १२ *॥ [१०]

२ र१ १र १र२१ २१र २र१
॥ समन्तम् ॥ पुनानःसोमधारया। अपोवसानोअ
र २ १ २ १ २
र्षसायि। आरत्ना२३धाः। योनिमृत। स्सायिदासा।
३र २ ३र२ १ २ १ २
औहो३४वाहायि। उत्। सोदार२३यिवाइः। होवाइ
२ १ १र २र र २ १
हायि। हिरण्या२३या२४३ः॥ (१) उत्सोदेवोहिरण्ययाः।
र र २१ र २ १ २
उत्सोदेवोऽहिरण्ययाः। दुहाना२३ऊ। धार्हिवियम्।
१ १ ३र २ ३र २ १ २
मधूप्रायाम्। औहो३४वाहायि। प्र। त्नाऽसार२३धा
१ २ २ १र २ २१ २१२
३। होवार३हा। स्थमासा२३दा२४३त् ॥(२)प्रत्नऽसधस्थ
१र२ १ २१ २ १र र २
मासदात्। प्रत्नऽसधास्थमासदात्। आपृच्छा२३याम्।
१ २र १ २ ३र २ १र २ १
धारुणंवाजियार्षासा। औहो३४वाहायि। नृ। भायि

* ऊ० गा० ६प्र० १ख० १२सा०।

द्यौ२३ता३ः। च्छोवा२च्छायि। विचक्षा२३णा३४२ः। औ२३४५ई। डा (३) ॥ २ * ॥ [११]

॥ अभीवर्त्तम् ॥ पुना२ना३ःसोमधारयोवा। आपोव सा। नोआर्षा१सा२यि। आरत्नधा३१२३४ः। योनि म्तत। स्यसायिदा१सा२यि। उत्सोदा१यिवा२ः। हिरा ३ण्या२३४५। या२३४५ः ॥(१) उत्सोदे२वोऽहिरण्ययोवा। ऊत्सोदेवः। हिराण्या१या२ः। दूहानऊ३१२३४। ध हिं वियम्। मधुप्रा१या२म्। प्रत्ना३सा१धा२। स्थ मा३। सा२३४५। दा२३४५त् ॥(२) प्रत्ना३सा३धस्थमा सदोवा। प्रात्नसध। स्थमासा१दात्। आपृच्छिया ३१२३४म्। धरुणंवा। जियार्षा१सा२यि। नृभायि द्यौ१ता२ः। विचा३। क्षा२३४५। णा२३४५ः(३)॥१२†॥[१२]

* ऊ० गा० ६प्र० १ख० ९गा०।

† ऊ० गा० ८प्र० १खा० १२गा०।

५ ४ २ ४ ५ १ र
॥ अभीवर्त्तम् ॥ उत्सो३दे३वोऽ२ हिरण्ययोवा। उत्सो
२र १ २ १र र २ ४
देवः। हिराण्या१या२ः। दूहानऊ३१२३४। धर्दिवि
५ २२ १ २ २ १
यम्। मधूप्रा१या२म्।(२) प्रत्ना१ सा१धा२। स्थमा३।
१ ३ १ १ १ १
सा२३४५। दा२३४५न्(३)॥ १४ * ॥ [१३]

५ २ ४ ५ ४र ५ २ १
॥ महाकालेयम् ॥ प्रत्न१ सा३धस्थमासदात्। प्रत्ना
२ १ २ ३र २ १ २र ३ १ १
१ सधा। स्थमासदा२३त्। आपृच्छियाम्। धा२३४।
३ ४ र ५ १ २ १ ३र १ २
रुणंवाजिय। पा३सायि। नृभायिद्धौंतौ। वा३४३औ
५ ४ ४
३४वा। विचा५ चणाः। दो५इ। डा(३)॥ १५ † ॥ [१४]

१ ४र र ३र ४ ५ २ २ ३ ५
॥ वासिष्ठम् ॥ उत्सोदेवोहिर। ण्ययाओ२३४वा।
४ ५ २ १ १ र र र १
इयाहायि। ऊवेहो२यि। उत्सोदेवोहिराण्या१या२ः।
१ र र १ २ ६ २ १
दुहानऊधर्हिवियम्। मधूप्रा१या२म्। ई३या॥(२) प्रत्न

* ऊ० गा० प्र० १ख० १४सा०।

† ऊ० गा० प्र० १ख० १५सा०।

५ २ १५ २ १११
ᳲसार३४धा। स्थमासार३४५दा६५६त्। अवा३सार३
११
४५यि (३) ॥ १६* ॥ [१५]

१ २ २ १ २२ १२
॥ महावैष्टम्भम् ॥ पुनानःसोहायि। मधारयोवा।
१२ २ २ २ १ २ १ २ २ २
आपोवसा। नोआर्षा१सार३यि। होवा३हायि। आ
१ १ २ १ २
रत्नधायोनिमृत। स्यसायिदा१सार३यि। होवा३हा
२ १ २ १ २ २ १
यि। उत्सोदा१यिवार३ः। होवा३हायि। हिर। एया
२ ५२ २ १ २२२ १ २ १ २
२या२३४औहोवा ॥ (१) उत्सोदेवोहायि। हिरण्ययोवा।
१ २ २२ १ २ १ २ २ २
उत्सोदेवः। हिराण्या१या२३ः। होवा३हायि। दुहा
१२२ १२ १ २ १ २ २ १
नऊधर्हिवियम्। मधूप्रा१या२३म्। होवा३हायि। प्र
२ १ २ २ १२ २
त्नाᳲसा१धार३। होवा३हा। स्थमा। सार्दार३४
५२ २ २ १ २ २ १ २ १
औहोवा ॥(२) प्रत्नᳲसधोहायि। स्थमासदोवा। प्रा
२ १ २ १ २ २ २ १
त्नᳲसध। स्थमासा१दार३त्। होवा३हायि। आपृ

* ऊ० गा० ८प्र० २अ० १६खा०।

२ १ २ र १ २ १ २ २ १
क्रन्धरूणांवा। जियार्षा१सा२३यि। ह्वोवा३ह्वायि। नृ

२ १ २ २ १ २
भायिद्ध्रौ१ता२३ः। ह्वोवा३ह्वायि। विच। ह्वा२णा२३

५र र ३ ५
४औह्वोवा। दी२३४या: (३) ॥ १२ * ॥ [१६]

५ र २ ४र ५ ४र ५ २ १ २ १
॥ कालेयम् † ॥ पुनाना३:सोमधारया। अपोवसा।

२र ३ २ १ २र २ २ १ २ ४
नोअर्षसा२३यि। आरत्नधा३ः। यो२३४। निमृतस्य

५र २ २ १ २ र २ २ ५ ४
सी। दा३सायि। उत्सोदेवौ। वा३४३ओ२३४वा। हि

५ र २ ४र ५ ४ ५ २ १ २र १
रापुण्ययाः ॥(१) उत्सोदा३यिवोह्विरण्ययाः। उत्सोदेवो।

२ ३ २ १ २ ३र २ १ ३ ४ ५
ह्विरण्यया२३ः। दुहानऊ३। धा२३४ः। दिवियन्मधु।

२ २ १ ३ २ २ ५ ४
प्रा३याम्। प्रत्नाऽसधौ। वा३४३ओ२३४वा। स्थमा५

५ २ ४ ५ ४र २ १ २ १
सदात् ॥(२) प्रत्नऽसा३धस्थमासदात्। प्रत्नाऽसधा।

२ ३र २ १ २र २ २ १ ३र र
स्थामासदा२३त्। आपृच्छिया३म्। धा२३४। रुणांवा

* ज० गा० १२प्र० १ख० ११सा०।

† "महाकालेयम्"—इति ख० पु०।

अथ चतुर्थतृचे—प्रथमा ।

२ ३क २र ३१२३ १ २३१२ ३१ २
अधाहीन्द्रगिर्वणउपत्वाकामइमहेससृग्महे ।

३२ ३१२३२ २
उदेवग्मन्तउदभिः ॥ १ * ॥

"अधाहि" सम्प्रति हि "त्वा" त्वां "कामे" काम मभिलषित-मर्थम् "ईमहे" । यद्वा, "कामे" कामान् कमनीयान् स्तोमान् "उपससृग्महे" उपसृजामः त्वां प्रापयाम इत्यर्थः । तत्र दृष्टान्त माह—"उदेव" यथा उदकेन "ग्मन्तः" गच्छन्तः पुरुषाः "उदभिः" अञ्जलिनोत्क्षिप्योदकैः समीपस्थान् पुरुषान् क्रीडार्थं संसृजति तद्वदित्यर्थः ॥

"कामईमहेससृग्महे"-"कामाम्महससृज्महे"—इति च पाठः । "उदेवग्मन्तः"-"उदेवयन्तः"—इति च पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २र३२ ३१२ ३१२
वार्णत्वायव्याभिर्वर्द्धन्तिशूरब्रह्माणि ।

३ १ २ ३१२
वावृध्वाꣳसञ्चिदद्रिवोदिवेदिवे ॥ २ † ॥

* ब० आ० ५, १, २, ८ (१ भा० ८२६ पृ०) = ऋ० वे० ६, ७, २, १ ।

† ऋ० वे० ६, ७, २, २ ।

हे "अद्रिवः" वज्रिन्! "शूर" इन्द्र! "वार्ण" यथोदकमुदकस्थानं "यव्याभिः" नदीभिः ['अवनयः', 'यव्या'—इति (निघ० १,१३, १-२) नदीनामसु पाठात्] "वर्द्धन्ति" वर्द्धयन्ति, तथा "ब्रह्माणि" स्तोत्रैः* "वावृध्वांसं" "चित्" यथा निरुदकं देशं नदीभिः तथा न किन्तु प्रहृष्टमेव "त्वा" त्वां "दिवेदिवे" अन्वहं वर्द्धयन्ति स्तोतारः ॥ २ ॥

अथ तृतीया ।

२ १ २ १ २ ३ १ ३ १ २ ३ १ २र ३ १ २ ३ १ २
युञ्जन्तिहरीइषिरस्यगाथयोरौरथउरुयुगेवचोयुजा ।

२ १ २ ३ १ २
इन्द्रवाहास्वर्विदा ॥ ३ † ॥ २३ ‡

"इषिरस्य" गमनशीलस्येन्द्रस्य "उरुयुगे" महायुगे "उरौ" महति "रथे" "इन्द्रवाहा" इन्द्रस्य वाहनभूतौ "वचोयुजा" वचनमात्रेणैव युज्यमानौ "स्वर्विदा" स्वर्गाख्य मिन्द्रस्य स्थानं जानन्तौ "हरी" एतन्नामकावश्वौ "गाथया" ¶ स्तोत्रेण स्तोतारः "युञ्जन्ति" योजयन्ति ॥

---

* 'ब्रह्माणि अन्नानि, वेदविद्यलक्षणानि वा, स्तोत्र-शस्त्राणि कर्म्माणि वा'—इति वि० ।

† ऋ० वे० ६, ७, २, ३ ।      ‡ "अत नामैधम्"—इति वि० ।

¶ 'गाथया, एकवचनं बहुवचनस्य स्थाने द्रष्टव्यम्, गाथाभिः'—इति वि० ।

"उरुयुगेवचोयुजाइन्द्रस्यवाहास्वर्विदा"-"इन्द्रवाहावचोयुजा"
—इति पाठौ ॥ ३ ॥ २३

१ ८ ८ २ १ १ २
॥ नार्म्मेधम् ॥ अधाहीन्द्रगिर्वणा३ए। उपात्वा३का।

१ ३ ५ २ १ २ ३८ ८ ५
मईंमार२३४हाई। सह्मम्माहा। औहौहोर२३४वा।

१ ८ ५ २ १ २ ३८ ८ ५ १
ऊ२३४देहाइ। वम्मान्ताऊ। औहौहोर२३४वा। दार

५८ ५ २८ ८ ८ २ १
३४भीः। एहियाऽहा ॥(१) वार्णत्वायव्याभी३रे। वर्द्धा

२ २ १ ३ ५ २८ १ २ ३८ ८
न्तोरशूः। रब्रार्ह्मा२३४णी। वावृध्वा७सो। औहौहो

५ ३ ५ २ १ २ ३८ ८
२३४वा। चा२३४इदहाइ। द्रिवोदाइवा। औहौहो

५८ ५ २ ८ २
२३४वाइ। एहियाऽहा ॥(२) युञ्जन्तिहरीइषिरा३स्य।

१ २ १ २ १ २ २ १ २
स्य। गा। थ। या। उरौरा३थाइ। उरुइयू२३४

५ २ १ २ ३८ ८ ५ १ ५
गाइ। वचोयूजा। औहौहोर२३४वा। आ२३४इन्द्रहा

२८ १ २ ३८ ८ ५ १
इ। वाहास्वा। औहौहोर२३४वा। वा २ ३ ४ इदा।

५८ ५ ४
एहियाऽहा। हो५ई। डा(३) ॥ १७ * ॥ [१]

---

* ऊ० गा० १प्र० १ख० १७साम ।

॥ द्यौतानम् ॥ हा३ । ओ३हा३ । ओ३हा३ । हा यि । अधाह्यिार्यि । द्रगिर्वा२३४णाः । उपत्वाका२ । मह्रीमा२३४हायि । सा३ । हम्मा२३४हायि । उदेवग्मा २ । तऊदा२३४मायिः ॥(१) वार्णत्वा२ । यवीया२३४ भीः । वर्द्धन्तिष्टू२ । वस्रो ह्ला२३४णो । वा३ । वृद्धा २३४५साम् । चिद्दद्भिवो२ । हिवेदा२३४यिवायि ॥(२) युञ्जन्ति हा२ । रीस्रायिषा२३४यिरा । स्यगाथया२ । उरौरा२३४थायि । उक्युगे२ । वचोयू२३४जा । इन्द्र वाहा२ । सुवर्वा२३४यिदा । हा३ । ओ३हा२ । ओ ३ हा २ । हा ३ ४ । औहोवा । आओ ३ हो २ ३ ४ ५ ॥ ८ * ॥ [२] २३

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य

षष्ठः खण्डः † ।

---

* ऋ० गा० १०प्र० २अ० ८सा० ।

† 'अग्निष्टोम उक्थ्यौक्तः । षोडशी च ब्राह्मण-समाम्नायेन छन्द-समाम्नायेन चान्तरितः । इदानीं मतिरात्रो वक्तव्यः'—इति वि० ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १ ॥

॥ इत्युत्तरार्चिके प्रथमस्यार्द्ध-प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-
प्रकाशे उत्तराग्रन्थे प्रथमोऽध्यायः* ॥



* मूले लतार्थप्रपाठकः समाप्तः, नतु प्रपाठकः ; विवरणग्रन्थेऽपि तथैव ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १ ॥

॥ अथ द्वितीयाध्याय आरभ्यते ॥

तत्र,

पान्तमाव इति प्रथम-खण्डे—

तृचात्मके प्रथमे सूक्ते,

प्रथमा ।

२ ३ २ ३ १ २ ३ १ २ ३ १र २र
पान्तमावोऽन्धसइन्द्रमभिप्रगायत ।
२ १ २ ३ १ २ ३ १ २ ३ २
विश्वासाहꣳशतक्रतुम्मꣳहिष्ठञ्चर्षणीनाम् ॥ १* ॥

हे ऋत्विजः ! "वः" युष्मदीयं "अन्धसः" सोमलक्षणमन्नं "आ पान्तम्" आभिमुख्येन पिबन्तं [ पा पाने ( भ्वा० प० ); छान्दसः शपोलुक् ( २, ४, ७२ ); 'सर्वे विधयश्छन्दसि विकल्पन्ते'—इति "न लोकाव्यय ( २, ३, ६९ )"—इति षष्ठी प्रतिषेधाभावः ; ततोऽन्धस इत्यस्य "कर्तृकर्मणोः ( २, ३,

* ऋ० आ० ९, १, २, १ ( ३ भा० २५५ पृ० ) = ऋ० वे० ६, ६, १५, १ ।

६५)"—इति षष्ठी। षष्ठी] सोम माभिमुख्येन पिबन्त मेतादृशम् "इन्द्रम्" "अभि प्रगायत" प्रकर्षेण अभिष्टुत। कीदृशम्? "विश्वासाहं" सर्वेषां शत्रूणामभिभवितारं सर्वेषां भूतजातानां वा, अतएव "शतक्रतुं" बहुविधप्रज्ञानं बहुविध-कर्माणं वा "चर्षणीनां" मनुष्याणां "मंहिष्ठं" धनस्य दातृतमम्। यद्वा, यजमानानां यष्टव्यत्वेन पूजनीय मिन्द्रं प्रगायतेत्यर्थः॥ १॥

अथ द्वितीया।

२ १२ २१२ ३ २ १२
पुरुहूतम्पुरुष्टुतङ्गाथान्या३ऽ३ऽ९ सनश्रुतम्।
२ ३ १ २
इन्द्रइतिब्रवीतन॥ २*॥

हे ऋत्विग्यजमानाः! "पुरुहूतं" यज्ञेषु बहुभि राहूतं "पुरुष्टुतं" बहुभिः स्तोत्रशस्त्रादिभिः स्तुत मतएव "गाथान्यं" गानयोग्यं गातव्यं† "सनश्रुत" सनातनया प्रसिद्धम्,‡ एवंविधं देवम् "इन्द्रइति" यूयं "ब्रवीतन" ब्रुवीध्वम् ['ब्रूञ् व्यक्तायां वाचि (अदा० उ०)'—इत्यस्य लुङि व्यत्ययेन (३, ४, ९८) ध्वमस्तनबादेशः, अतएव गुणः॥ २॥

* ऋ० वे० ६, ६, १५, २।

† 'गाथानि स्तोत्र-शस्त्र-मन्त्राणि, तानिः नीयते यः स गाथान्यः तं गाथान्यम्'—इति वि०।

‡ 'सनशब्दः सदानाची, सदैव विश्रुतम्'—इति वि०।

अथ तृतीया।

२ ३ १ २ ३१ २ ३ १र २र ३ २

इन्द्रइन्नोमहोनान्दातावाजानान्नृतुः।

२ १ २ ३ १ २

महाᳬँअभिज्ञ्वायमत्॥ ३* ॥ १

"इन्द्रइत्" पूर्वोक्तलक्षण इन्द्रएव "नः" अस्मभ्यं "महोनां" मघोनां धनवतां पश्वादि-लक्षण-धन-युक्तानां "वाजानाम्" अन्नानां "दाता" भवतु। कीदृशम्? "नृतुः" ["नृतिशृध्योःकूः"—इति कूप्रत्ययः, कत्वम्छान्दसः] सर्वस्य नर्त्तयिता†; यद्वा [नृ नये, (क्र्या० प्र० प०) औणादिक-तु-प्रत्ययः, धातोः कत्वम्छान्दसः] स्तोतृभ्यो गवादिनेता; अतएव "महान्" स इन्द्रः "अभिज्ञु" अभिगत-जानुकम्‡ अस्मभ्यम् "आ यम त्" आयच्छतु ददातु¶। यद्वा स इन्द्रः अभिज्ञु अस्मदभिमुख मागच्छत धनं स्वहस्तयोः परिगृह्य अस्मान् नयतु,—धनं गृहीत्वा अस्मभ्यं ददात्वित्यर्थः॥

"मघोनाम्"-"महोनाम्"—इति पाठौ॥ ३॥ १

२ ४ २

॥ वैतहव्यमोकोनिधनम्॥ पा२पुन्तम्। आ३वो

४ ५ १र ७ ३ ५ १

इअन्धसा:। आइन्द्रामभाइ। प्रगार्ययार३४ता। विश्वा

---

* ऋ० वे० ६, ६, १५, २।

† 'नृतुः नृभ्योहितः'—इति वि०।

‡ 'अभिज्ञु सर्वस्य ज्ञाता'—इति वि०।

¶ 'आयमत्—यमु बन्धने, सर्वं जगत् कर्ममयैः पाशैर्बध्नाति'—इति वि०।

२ ५ २ १ २ २ १ २ १ २
२साऽ२३४हाम्। भ्राइताक्षाइटम्। मंऽहिष्ठञ्चर्ष
१ ३ ५२ २ ३ २ ४ २
णाइ। ना२मा२३४औहोवा॥(१) पूऽपुरुहू। ताइम्पू३
४ ५ १ २ ७ ३ ५ १२
रुष्टुताम्। पूरुहूताम्। पुरु२ष्टू२३४ताम्। गाथा
२ ५ २ १ २ २ १ २ १ २ १
२न्या२३४याम्। साइनाश्रू३ताम्। आइन्द्रइतिब्र। वा
३ ५२ २ ३ ४
इ। ता२ना२३४औहोवा॥(२) आऽपुइन्द्रइत्। नोइ
२ ४ ५ १ ३ ५ १२
माइहोनाम्। आइन्द्रइनो। मा२हो२३४नाम्। दा
३ ५ २ २ २ १ २२ १ २ १२
ता२वा२३४जा। ना३१न्ना२र्नृं:। माहाऽअभिज्ञु। आ।
३ ५२ २ २ २१११
या२मा२३४औहोवा। ओ३कार२३४५:॥ १८*॥ [१] १

अथ द्वितीयर्च्चे, प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २
प्रवइन्द्रायमादनꣳहर्यश्वायगायत।

१ २ ३ १ २
सखायःसोमपाव्ने॥ १†॥

---

* ऊ० गा० १प्र० १ख० १८साभ।

† छ० आ० २, २, २, २ (१भा० ३५८पृ०)=ऋ० वे० ५, ६, १५, १।

हे "सखायः" स्तोतारः! "वः" यूयं "हर्यश्वाय" हरिनामकाश्वोपेताय "सोमपाव्ने" सोमानां पात्रे "मादनं" मदकरं हर्षकरं स्तोत्रं प्रगायत ॥ १ ॥

अथ द्वितीया ।

२उ ३ २ ३ १ २ ३ २ ३ २उ ३ १ २
शꣳसेदुक्थꣳसुदानव उत द्युक्षं यथा नरः ।
३ २ ३ १ २
चकृमा सत्यराधसे ॥ २* ॥

"उत" अपिच हे स्तोतः! "सुदानवे" शोभन-दानाय "सत्यराधसे" सत्यधनायेन्द्राय† "उक्थं" स्तोमं‡ "यथा नरः" अन्ये स्तोतारः¶ "द्युक्षं" दीप्तेः साधनभूतं स्तोत्रं शंसति, तद्वत् त्वमपि "शंस" उच्चारय । उदिति पूरणः§ । वयमपि "चकृम" स्तोत्रं करवाम ॥ २ ॥

---

* ऋ० वे० ५, ३, १५, २ ।

† 'सत्यराधसे—राधः अन्नं धनं वा, सत्यं वा । सत्यान्नाय, सत्यधनाय, सत्यसत्याय वा'—इति वि० ।

‡ 'उक्थं—उक्थानि सामानि, हे उद्गातः! गायस्व सामानि । अथवा उक्थं शस्त्रमुच्यते तच्छंस होतः! एकवचनं जात्यपेक्षम्, उक्थजातिं शंस ।'—इति वि० ।

¶ 'यथा नरः—यथा मनुष्याः । प्रथमैषा षष्ठीस्थाने द्रष्टव्या यथा मनुष्यस्य स्तुतिः क्रियते'—इति वि० ।

§ "अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्य-पूरणा आगच्छन्ति पद-पूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति"—इति निरु० नै० १, ९ ।

अथ तृतीया।

१ २ १२उ २ १ २
त्वन्नइन्द्र वाजयुस्त्वङ्गव्युः शतक्रतो।
१ २ ३ १ २
त्वꣳहिरण्ययुर्वसो॥ ३ *॥ २ †

हे "इन्द्र!" "त्वं" "नः" अस्माकं "वाजयुः" अन्नकामी भव। हे "शतक्रतो" बहुविध-कर्म्मवन्निन्द्र! ‡ "त्वं" "नः" अस्माकं "गव्युः" गोकामो भव। हे "वसो" वासयितरिन्द्र! त्वं हिरण्ययुः" हिरण्यकामोऽपि भव। [ "छन्दसि परेच्छायामपि दृश्यते (वा० ३, ३, ८)"—इति क्यच्॥ ३॥ २

॥ शात्यम्॥ प्रवइन्द्रा२। यमादा२३४नाम्। प्रवा २इन्द्रा। औ३हो। या२३४मा। दा३नाम्। हरा २अश्वा। औ३हो। या२३४गा। या३ता। सखा२ यास्तो। औ३हो३। मायो२३४वा। आ५प्नौ६हा इ॥(१) शꣳसीदुक्थार२म्। सुदाना२३४वाइ। शꣳसा

* ऋ० वे० ५, ३, १५, ३।

† 'गौरीवितेः तदेवार्षम्'—इति वि०।

‡ 'शतक्रतो—बहुभिः क्रतुभिरिष्टवान् यः स शतक्रतुः। अथवा क्रतुरिति कर्म्मनाम प्रज्ञानाम वा, बहुकर्म्मा बहुप्रज्ञो वा'—इति वि०।

र२इदुक्था। औ२होइ। हु२३४वा। ना२वाइ। उ
ता२युत्था। औ२होइ। या२३४था। ना२राः। च
क्रम। सा। औ२होइ। त्यारो२३४वा। धाऽ५सोइहा
इ ॥(२) तुवन्नआ२इ। इवाजा२३४यूः। तुवा२न्नआ।
औ२होइ। द्रा२३४वा। जा२यूः। तुवा२ङ्क्यूः। औ
२होइ। श्चा२३४न। क्रा२ताउ। तुवा२ऽहिरा। औ
२होइ। त्यायो२३४वा। वाऽ५सोइहाइ(२) ॥१८*॥[१]२

अथ तृतीयत्वचे, प्रथमा।

वयमुत्वातदिदर्थाइन्द्रत्वायन्तःसखायः।
कण्वाउक्थेभिर्जरन्ते ॥ १ † ॥

हे "इन्द्र!" "त्वायन्तः" त्वामात्मन इच्छन्तः "सखायः" समानख्याना वयं "तदिदर्थाः" यद्विषयं स्तोत्रं तत्तदित्, तदेवार्थः

* ऊ० गा० १प्र० १ख० १९सा०।

† ऋ० भा० २, २, २, २ (१भा० ८२० पृ०)—ऋ० वे० ५, ७, २०, १।

प्रयोजनं येषां ; तादृशाः सन्तः "त्वा" त्वां "जरामहे" स्तुमहे। "उ"—इति पूरणः। "कण्वाः" कण्वगोत्रोत्पन्नाः अस्मदीयाः पुत्रादयश्च "उक्थेभिः" उक्थैः शस्त्रैः "जरन्ते" त्वां स्तुवन्ति॥ १॥

अथ द्वितीया।

१ २ ३ १र २र ३ १ २ ३ २ ३ १ २
नघेमन्यदापपनवज्रिन्नपसोनविष्टौ।
२उ ३र १ २
तवेदुस्तोमैश्चिकेत॥ २ *॥

हे "वज्रिन्" वज्रवन्निन्द्र! "अपसः" अपस्विनः कर्म्मवतः† "तव" सम्बन्धिनि‡ "नविष्टौ" अभिनवे यागे वर्त्तमानोऽहं "अन्यत्" त्वद्विषयादन्यत् स्तोत्रं "नघेम्"¶ नैव "आपपन" अभिष्टौमि [पनतेः स्तुतिकर्म्मणः (भ्वा० आ०) उत्तमे णलि रूपम्] ; "तवेदु" तवैव "स्तोमैः"§ स्तोमं स्तोत्रं "चिकेत"‖ अभि जानामि‖ त्वामेव सर्वदा स्तौमीत्यर्थः॥ २॥

---

* ऋ० वे० ५, ७, २०, २।

† "अपस्"—इति कर्मनामसु प्रथमं नैघण्टुकम् (२, १, १)।

‡ 'तव—षष्ठ्येषा द्वितीयार्थे द्रष्टव्या त्वां ० ० ० चिकेत'—इति वि०।

¶ 'न, घ, ईम्'—इति त्रयोऽप्येते उपसर्गाः'—इति वि०।

§ 'स्तोमैः—क्रतुभिः'—इति वि०।

‖ 'चिकेत—चेतयामि कुर्म्मः'—इति वि०।

अथ तृतीया ।

३ १ २ ३ २ ३ २ ३ १२ ३२
इच्छन्तिदेवाःसुन्वन्तन्नस्वप्नायस्पृहयन्ति ।

१ २ ३ २ ३ १ १
यन्तिप्रमादमतन्द्राः ॥ २ * ॥ ३ †

"सुन्वन्तं" सोमाभिषवं कुर्वन्तं यजमानं "देवाः" इन्द्रादयः सर्वे "इच्छन्ति" रक्षितुम्, "स्वप्नाय न स्पृहयन्ति" स्वप्नावस्थान्तस्य सुन्वतो नेच्छन्ति सर्वदा प्रबुद्धमेव कुर्वन्तीत्यर्थः ["स्पृहेरीप्सितः (१, ४, ३६ )"—इति कर्म्मणि चतुर्थी; स्पृहईप्सायां चुरादि रदन्तः]। यतएव मतः कारणात् "अतन्द्राः" अनलसा देवाः "प्रमादं" प्रकर्षेण मदकरं‡ तदीयं सोमं "यन्ति" शीघ्रं प्राप्नुवन्ति ॥ २ ॥ ३

५ २ ४र ५ १र
॥ काण्वम् ॥ वयमूइत्वातदिदर्थाः । ऐहिहा२

१ र र र २१ २ २
इ । वयमुत्वातदिदर्थाइन्द्रत्वायन्तःसखार३याः । का२

५ १ २ १ ५ १
३४ण्वाः । ऊ । क्थाइ । भिज्जों२३४वा । रन्ता३या

१११ ५ र २ ४ र ५ १र १र
२३४५ ॥(१) नघेमाइन्यदापपना । ऐहिहा२इ । नघे

* ऋ० वे० ५, ७, २०, ३ ।

† 'अत्र काण्वं साम । कण्वस्यार्षम्'—इति वि० ।

‡ 'प्रमादं—मदमोदतृप्ताविव्यस्येदं रूपम् । प्रकर्षेण तप्तम्'—इति वि० ।

र र २१ २ ३ ५
मन्यद्रापपमवज्रिन्नपसोनवार३ड्ष्टाउ । तार३४वेत् ।
१ र २र१ ५ २र १११ १
ऊ । स्तो । मैस्रोर३४वा । बोता३या२३४५ ॥(२)
५ २ ४र र ५ १र १ र र
इच्छन्ता३इदेवाःसुन्वन्ताम् । ऐहिद्दा२इ । इच्छन्तिदेवाः
र २१ २ ३ ५ १ र
सुन्वन्तन्नस्वप्नायस्पृहया२३न्तौ । या२३४न्तौ । प्रा । मा ।
२१ ५ २ १ १११
दमो२३४वा । तन्द्रा३या२३४५(३) ॥ २० * ॥ [१] ३

अथ चतुर्थदृचे, प्रथमा ।

१२ ३१२ ३१र २र ३ १र
इन्द्रायमद्वने सुतम्परिष्टोभन्तुनोगिरः ।
३१२ ३ १२
अर्कमर्चन्तुकारवः ॥ १ † ॥

"मद्वने" [माद्यतेः ( दि०, प० ) क्वनिप् ] मदनशीलाय "इन्द्राय" तदर्थं "सुतं" सोमं "नः" अस्मदीयाः "गिरः" स्तुतिलक्षणा वाचः परिष्टोभन्तु [ स्तोभतिः स्तुतिकर्म्मा ( निघ० ३, १४, ४ ) ] सोमं स्तुवन्तु । ततः "कारवः" स्तुतिकारिणः स्तोतारश्च "अर्कं" सवैरर्च्चनीयं सोमम् "अर्च्चन्तु" पूजयन्तु ॥ १ ॥

---

* ऊ० गा० १प्र० १अ० २० सा० ।

† छ० आ० २, १, २, ४ (१भा० ३६२ पृ०) — ऋ० वे० ६, ६, १८, ४ ।

अथ द्वितीया ।

२ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
यस्मिन्विश्वा अधिश्रियोरणन्तिसप्तसꣳसदः ।

१ २ ३ २ २
इन्द्रꣳसुतेहवामहे ॥ २ * ॥

"यस्मिन्" इन्द्रे "विश्वाः" सर्वाः "श्रियः" कान्तयः "अधि" अधिकं भवन्ति अतिशयेन तेजस्वीत्यर्थः† । किञ्च "सप्त" सप्तसङ्ख्याकाः "संसदः" सम्यग् यज्ञेषु कर्मकरणार्थं सीदन्तीति संसदो होत्रकाः‡ यस्मिन् "रणन्ति" सोमप्रदानार्थं रमन्ते ; यद्वा यं शब्दयन्ति स्तुवन्ति तं पूर्वोक्तलक्षणम् "इन्द्रं" "सुते" सोमेऽभिषुते सति "हवामहे" वयं सोमपानायाह्वयामः ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ १ २ ३ १ २
त्रिकद्रुकेषुचेतनन्देवासोयज्ञमत्नत ।

१ २र ३ १ २
तमिद्वर्द्धन्तुनोगिरः ॥ ३ ¶ ॥ ४ §

---

* ऋ० वे० ६, ६, १८, ५ ।

† 'अधिश्रियः—ये अधिश्रिताः मनुजाः'—इति वि० ।

‡ 'सप्तसंसदः—सप्तर्त्विजः ; तद्यथा प्रशास्तारः, होता, मैत्रावरुणः, ब्राह्मणाच्छंसि, अच्छावाकः—एते ऋत्विजः'—इति वि० ।

¶ ऋ० वे० ६, ६, १९, १ ।

§ 'अत्र मौनकञ्च साम'—इति वि० ।

“देवासः” देवाः इन्द्रादयः “त्रिकद्रुकेषु” आभिप्लविकेष्वहःसु ज्योतिर्गौरायुरिति त्रिकद्रुकाः, * तेषु “चेतनं” [ चिती सञ्ज्ञाने ( भ्वा०, प० ) ] चेतन्ति जानन्ति अनेन स्वर्गादिकमिति चेतनो ज्ञानसाधनो यज्ञः तम् “अत्नत” अतन्वत स्वैः स्वैः कर्म्मभिः पालनैश्च विस्तारितवन्तः [ तनु विस्तारे ( तना०, उ० ) लङि “बहुलं छन्दसि ( २, ४, ७३ )”—इति विकरणस्य लुक्, “तनिपत्योश्छन्दसि ( ६, ४, ९९ )”—इति उपधालोपः “तमित्” तमेव यज्ञं “नः” अस्माकं “गिरः” स्तुतिलक्षणा वाचः “वर्द्धन्तु” वर्द्धयन्तु ॥ ३ ॥ ४

१ र २ १ २र १ २ र १ २
॥ श्रौतकक्षम् ॥ इन्द्रायमद्वनेसुतम्। इन्द्रायमोवा।
१ २ २ १ २र १ २ २
हा३नायिह्व३ताम्। परिष्टो। भा२३। हा३हा३।
१ ३ ५ १ २ २ २ १र
हनोरगा२३४इरा:। आमञ्चर्का३। हा३हा। तुका
२ १ २ १ र २ १ २ १
रा२३वा३४३: ॥(१) यस्मिन्विश्वाअधिश्रियः। यस्मिन्विश्वो

* ज्योतिर्गौरायुरितीति चतुर्थ-पञ्चम-षष्ठाना माभिप्लविकाना मह्नां नाम्नां प्रतीकमात्रम्। अस्ति गवामयनादिकं सत्रम्; तच्च, एकषष्ट्युत्तरत्रिशतदिननिर्वर्त्त्यं भवति। तत्र, प्रायणीयोऽतिरात्रनाम प्रथममहः, चतुर्विंशनाम द्वितीयमहः, उक्थ्यनाम तृतीयम्, ज्योतिर्गौ चतुर्थमहः, आयुर्गौ पञ्चममहः, आयुर्ज्योतिरितिनामकं षष्ठमहः, एतान्येव षडहानि आभिप्लविकान्युच्यन्ते; तेष्वेषु शेषाण्यहानि चतुर्थादीनि त्रीणि त्रिकद्रुकाणीति।

२ १ २ २ १ २ १ २ १
वा। आ२धायिआ२याः। रण्न्ति। सार३। हा३हा

१ ३ ५ १ २ १ २
३। प्रासा२ॐसा२३४दाः। आइन्द्र्ॐसुने३। हा३हा

१२ २ १ २२ १२२
यि। इवामा२३हा३४३यि ॥(२) टकद्रुकेषु चेतनम् *।

२ १ २ १ २ २ १२२ २ १
ट†कद्रुकोवा। पू३चायिता३नाम्। देवासः। या२३।

२ २ १ ३ ५ १ २ २
हा३हा३। ज्ञामा२त्ना२३४ता। तामिद्वर्द्धा३। हा३

१ १२ २ १
हा। तुनोगा२३यिरा३४३ः। ओ२३४५इ। डा(३)॥१‡॥[१]४

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य

प्रथमः ¶ खण्डः॥ १ ॥

---

*, † "त्रि"—इति ख० पु० पाठः।

‡ ऊ० गा० २प्र० १ख० १सा०।

¶ 'उक्तः प्रथमपर्य्यायः'—इति वि०।

अथ द्वितीयखण्डस्य*—

प्रथम-तृचे, प्रथमा ।

२ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अयन्तइन्द्रसोमोनिपूतोअधिबर्हिषि ।
१ २ ३ २उ ३ १ २
एहीमस्यद्रवापिब ॥ १ † ॥

हे "इन्द्र !" "ते" तुभ्यं त्वदर्थम् "अयं सोमः" "बर्हिषि अधि" वेद्यामास्तीर्णे दर्भे "निपूतः" नितरां दशापवित्रेण शोधितः अभिषवादिसंस्कारैः संस्कृत इत्यर्थः । "ईम्" इदानीम् "अस्य" इमं सोमं प्रति "एहि" आगच्छ । आगत्य च यत्र रसात्मकः सोमो ह्रयते तं देशं "परिद्रव" शीघ्रं गच्छ, तदनन्तरं सोमं "पिब" ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १र २र ५ २
शाचिगोशाचिपूजनायꣳरणायतेसुतः ।
१ २ ३ १ २
आखण्डलप्रहूयसे ॥ २‡ ॥

"शाचिगो" [ शाचयः शक्ता गावो यस्यासो शाचिगुः ; यद्वा, शच् व्यक्तायां वाचि (भ्वा०,आ०), अस्मादौणादिक इञ् प्रत्ययः]

* 'इद नीं मध्यमोऽभिधीयते'—इति वि० ।

† छ० आ० २, १; २, ५ (१आ० ३६५पृ०)=ऋ० वे० ६, १, २५, १ ।

‡ ऋ० वे० ६, १, २४, २ ।

शाचयः व्यक्ताः प्रख्याता गावो रश्मयो वा यस्य तादृश ! *
हे "शाचिपूजन" [ पूज्यतेऽनेनेति पूजनम् ] स्तोत्रादि-प्रख्यात-
पूजन ! † "ते" तव "रणाय" रमणाय सुखजननाय "अयं"
सोमः "सुतः" अभिषुतः ; अतः कारणात् हे "आखण्डल"
शत्रूणामाखण्डयितः इन्द्र ! ‡ "प्रहूयसे" प्रकृष्टाभिः स्तुतिभि-
राहूयसे । इत आगत्य इमं सोमं पिबेत्यर्थः ॥ २ ॥

अथ तृतीया ।

१ २　　　३ १ २　　३ १ २
यस्ते शृङ्गवृषोणपात्प्रणपात्कुण्डपाय्यः ।
२र　३ १र　२र
न्यस्मिन्दध्र आमनः ॥ ३ ¶ ॥ पू §

हे "शृङ्गवृषोणपात्" [ शृङ्गवृषनामा कश्चित् ऋषिः तस्य
चेन्द्रः स्वयमेव पुत्रतया जज्ञे—इत्याख्यायिका । नपादित्य-
पत्यनाम ] हे शृङ्गवृष-पुत्र ! [शृणन्ति हिंसन्तीति शृङ्गाणि-
रश्मयः, तैर्वर्षतीति शृङ्गवृड़ादित्यः, तस्य न पातयितः स्वकीये
ऽवस्थानेऽवस्थापयितः ! । "सुबामन्त्रिते (२, १, २)"—इति
षष्ठ्यन्तस्य पराङ्गवद्भावेनामन्त्रितानुप्रवेशात् समुदायस्याष्टमिकं

* 'शचीति कर्मनाम, कर्मणि प्रयुक्ता गावः प्रदीयन्ते यस्य असौ शाचिगुः'—इति वि० ।

† 'शाचिपूजनः—कर्मणि पूज्यते शाचिपूजनः'—इति वि० ।

‡ 'आखण्डलः—इन्द्रस्य नामैतत्'—इति वि० ।

¶ ऋ० वे० ६, १, २४, ३ ।

§ 'अत्र दैवोदासौद्वे सामनी । दैवोदासमहोने, औद्व सद्मनं सत्रे एकाहे ।—इति वि० ।

सर्वानुदात्तत्वम्। इन्द्र!] हे इन्द्र! "ते" तव सम्बन्धि "प्रणपात्" प्रकर्षेण नपातयिता रक्षिता, "कुण्डपाय्यः" [कुण्डैः पीयते अस्मिन् सोम इति कुण्डपाय्यः क्रतुविशेषः। "क्रतौ कुण्डपाय्य-सञ्चाय्यौ (३, १, १२०)"—इति पिबतेरधिकरणे यत्-प्रत्ययो युगागमश्च निपात्यते—एतत्सञ्ज्ञो यः] क्रतुरस्ति; "अस्मिन्" कुण्डपाय्य-क्रतौ "मनः" स्वान्तं "आ नि दध्रे" अभितो वर्द्धमानाः कुण्डपायिनामान ऋषयः पुरा निदधिरे सम्यक् त्वद्देवत्यं क्रतुमनुष्ठितवन्त इत्यर्थः। [दधातेर्लिटि "इरयोरे (६, ४, ७६)"—इति रे-भावः*॥ ३॥ ५

४ २ ४ २ ५ १
॥ राचिद्दैवोदासम्† ॥ अयन्तइन्द्रसोऽ४मः। नार३
र५र ४ ५ ४ ५ १ र र २ १ २
४यि। पूतोअधिबर्हिषी। निपूतोअधिबर्हा ३ यिषी।
र १ २ १र ३र ४
ऐहोयिमार३स्या। इवापार३४५यिबा६५६ ॥(१) शाचि
र ३र ४ ५र ३ २ १ ५र र ४ ५
गोशाचिपू। जना३। आ२३४। य०ऽरणायतेसुताः।

---

* अत्रैवं व्याचष्टे विवरणकार-माधवः—"यः" "ते" तव हे सोम! "नपात्" न पिबति तस्य वृथा जन्म; "प्रणपात्" प्रणिपत्य श्रद्धया पातव्यः। "कुण्डपाय्यः" अत्र कुण्डाश्चमसाः कुण्डप्रतिरूपाः तैः पीयते कुण्डपाय्यः। अथवैतानीन्द्र-विशेषणानि। शृङ्गवान् वृषः प्रधानभूतो गौः, तादृश इन्द्रः; तस्य यः प्रकर्षेण सोमपानं कल्पयति कुण्डाकारैश्चमसैरितरैश्च। नि अस्मिन् दध्रे, नि-शब्दो न-शब्दस्यार्थे द्रष्टव्यः; न अस्मिन् यजमाने दध्रे धारयति इन्द्रः आत्मीयं मनः अनुग्रहाय?"—इति।

† 'राचीश्चवद्दैवोदासम्'—इति क० पु० पाठः।

२१ २ २१२ २ २ १ २ १२
अयꣳरणायतेह२३ता: । आखण्डा२३ला । प्रहूया२३४५

३४२ ५ ३२ १
सा६५६यि ॥(२) यस्तेश्टङ्गवृषः । नपा३त् । प्रा२३४ ।

५२ २ ४५ १ २ २१२ २ १
णपात्कुण्डपायियाः । प्रणपात्कुण्डपाया२३याः । निय

२ १२ १
स्मा२ ३ यिन्दा । धुम्रामा २ ३ ४ ५ ना ६ ५ ६: । ई २

५
३ ४ डा(३) ॥ २ * ॥ [१]

२१ २ १२ २ १ २
॥ और्ध्वसद्मनम् ॥ अयन्तइन्द्रसोमः । उवाहायि ।

१२२ १ २२
निपूतोअधिबर्हिष्युवा२३होयि । निपूतोअधिबर्हिष्यूवा२३

१ २२ १ २ ३
होयि । आयिहीमस्या । द्रावापा२३४५यिबा६५६ ॥(१)

१२ २२ १२ २२ १ १ १ २ २
आचिगोआचिपूजन । उवाहायि । अयꣳरणायतेसुत

१ २ १ २ ३
उवा२३होयि । (वा२२) । आखण्डला । प्राहूया२३४५

१२ २ २ २ १ २ १
सा६५६यि ॥(२) यस्तेश्टङ्गवृषोणपात् । उवाहायि । प्रण

२ २ १ २ १
पात्कुण्डपाय्यउवा२३होयि । (वा२२) । नायस्मिन्दा ।

* ज० गा० १प्र० १ख० २सा०

२ ३ २ १ २ १र २ २ २
ध्राआमार३४५ना६५६: । तुवृत्तिभिर्न मादनम्मरेरुवा
१ऽ(३) ॥ ३ * ॥ [२] ५

अथ द्वितीयतृचे, प्रथमा ।

१र २र ३ १ २ ३ १ २ १र १र
आतूनइन्द्रक्षुमन्तञ्चित्रङ्ग्राभंसङ्गृभाय ।
३ २र २र
महाहस्तीदक्षिणेन ॥ १ † ॥

हे "इन्द्र!" त्वं "महाहस्ती" महाहस्तवान्, तदानीमेव "नः" अस्मदर्थं "क्षुमन्तं" शब्दवन्तं स्तुत्यमित्यर्थः। "चित्रं" चायनीयं "ग्राभं" ग्राहकं ग्रहणार्हं वा धनं "दक्षिणेन" हस्तेन "तु" क्षिप्रं "आ सङ्गृभाय" आभिमुख्येन सङ्गृहाण ॥ १ ॥

अथ द्वितीया ।

३ १र २र ३ २ ३ १ २ ३ १ २
विद्माहित्वातुविकूर्मिन्तुविदेष्णन्तुवीमघम् ।
३ १र २र
तुविमात्रमवोभिः ॥ २‡ ॥

---

* ऊ० गा० १प्र० २अ० ३सा०।

† छ० आ० २, २, ३, ३ ( १भा० ३०९ पृ० )=ऋ० वे० ६, ५, ३७, १।

‡ ऋ० वे० ६, ५, ३७, २।

हे इन्द्र! "त्वा" त्वां "विद्म हि" जानीमः खलु। कीदृशम्?—इति, "तुविकूर्म्मिं" बहुकर्म्माणं, * "तुविदेष्णं" बहुप्रदेयं, † "तुविमघं" बहुधनं "तुविमात्रं" बहुप्रमाणम् "अवोभिः" रक्षकैर्युक्तम्॥ २॥

अथ तृतीया।

१ २र ३ १र २र ३ १ २
नहित्वाशूरदेवामर्त्तासोदित्सन्तम्।
३ २उ ३ १ २
भीमन्नगांवारयन्ते॥ ३ ‡॥ ६¶

हे "शूर!" "दित्सन्तं" दातुमिच्छन्तं "त्वा" त्वां "देवाः" "न हि वारयन्ते" न निवारयन्ति खलु; तथा "मर्त्तासः" मनुष्या अपि न वारयन्ते "भीमं न गां" भयजनकं इमं वृषभं यद्वत् प्रवृत्तमिव, तं यथा वारयितुं न शक्नुवन्ति तद्वत्॥ ३॥ ६

१र २ २ १ २ २
॥ आकूपारम्§॥ आदृनइ। इन्द्रुमाऽन्ताम्। चि

---

* 'तुविकूर्म्मिं' तुविशब्दो बहुवाची, कूर्म्मिशब्दो मनुष्यवाची कर्म्मवाची वा इति वि०। "तुवि"—इति निघण्टौ बहुनामसु द्वितीयं पदम् (३, १)। कूर्म्मि-शब्दस्तु मनुष्यनामसु कर्म्मनामसु वा पठितो न दृश्यते।

† 'तुविदेष्णं'—देष्णं दानं बहुदानम्—इति वि०।

‡ ऋ० वे० ६, ५, ३७, ३।

¶ 'अवाकूपारं साम। आकूपाराङ्गिरसी गोधा च आर्षम्'—इति वि०।

§ 'रात्र्याकूपारम्'—इति ख० पु० पाठः।

१ ८ १ २ १ ८ १
त्रङ्ग्राभꣳसङ्गृभा २या। चित्रङ्ग्राभꣳसम्। गृ। औ३
२ ३ ५ २८ १ ८ ८ १
होयि। भा२३४या। ऐहोयि। मघाहस्तीदचा२३हो
२८ १ ३८ ५ ४ ५
यि। औहो। वाहो२३४वा। णा५यिनो६हायि ॥(१)
२ १८ ८ २ २ १८ ८ १
विद्माहित्वातुवि। कू३र्मीम्। तुविदेष्णन्तुवीमा २घाम्।
२ १ ८ २ २ ३ ५
तुविदेष्णन्तु। वा। औ३होयि। मा २ ३ ४घाम्। ऐ
१ ८ १ २८ १ १८
होयि। तुविमात्रमा२३होयि। औहो। वाहो २ ३
५ ४ ५ १ ८ ८ २
४वा। वो५भो६हायि ॥(२) नहित्वाशूर। दा३यि
२ १ ८ ८ १ ८ १
वाः। नमर्त्तासोदित्सा २न्ताम्। नमर्त्तासः। दा। औ
२ ३ ५ २८ १ ८ ८ २
३होयि। त्सा२३४न्ताम्। ऐहोयि। भीमन्नगांवारार
१ १८ १ २८ ५ ४
३ होयि। औहो। वाहो २ ३ ४ वा। या५ न्तो ६
५
हायि(३) ॥ ४ * ॥ [१] ६

---

* ऊ० गा० १प्र० २अ० ४सा०।

अथ तृतीयतृचे, प्रथमा ।

२ १ २ ३ २ ३ १ २ ३ १ २
अभित्वावृषभासुतेसुतꣳसृजामिपीतये ।
३ १ २ ३ १ २
तृम्पाव्यश्नुहीमदम् ॥ १ * ॥

हे "वृषभ" हे इन्द्र ! "त्वा" त्वां "सुते" सोमेऽभिषुते सति "सुतम्" अभिषुतं सोमं "पीतये" पानाय "अभिसृजामि" । "तृम्प" तृप्य । "मदं" मदकरं सोमं "व्यश्नुहि" च ॥ १ ॥

अथ द्वितीया ।

१ २ ३१ २ ३ २ ३ २ ३ २ २ ३ १ २
मात्वामूराअविष्यवोमोपहस्वानआदभन् ।
१ २ ३ १ २
माकीं ब्रह्मद्विषंवनः ॥ २ † ॥

हे इन्द्र ! "त्वा" त्वां "मूराः" मूर्खा मूढाः, मनुष्याणाम्‡ "अविष्यवः पालनकामाः "मा दभन्" मा हिंसन्तु । "उपहस्वानः" उपहसनपराश्च "मा" भवन्तु । "ब्रह्मद्विषं" ब्राह्मणानां द्वेष्टारं "मा कीं वनः" मा भजेथाः ¶ ॥

"ब्रह्मद्विषं"-"ब्रह्मद्विषः"—इति पाठौ ॥ २ ॥

---

* छ० आ० २, २, २, ७ (१भा० ३३८ पृ०)=ऋ० वे० ६, ३, ४६, १ ।

† ऋ० वे० ६, ३, ४६, २ । ‡ आत्मपरिवारभावाणामिति भावः ।

¶ 'वनः—यद्यपि वनतिः स्तुति-कर्मा तथाप्यत्र सम्भजने द्रष्टव्यः ; मा यज्ञेन सम्भज्यताम्'—इति वि० ।

अथ तृतीया ।

३ २ ३ १ २ ३ १ २ ३ १ २
इहत्वागोपरीणसम्महेमन्दन्तुराधसे ।

१ २ ३ १र २र
सरोगौरोयथापिब ॥ २ * ॥ ७ †

हे इन्द्र ! "त्वा" त्वाम् "इह" अस्मिन् यज्ञे "गोपरीणसं" गव्येन पयसा सम्मिश्रं सोमं ‡ "महे" महते "राधसे" धनाय ¶ "मन्दन्तु" मनुष्या मादयन्तु । त्वञ्च सोमं "यथा" "गौरः" मृगः "सरः" § पिबति, तथा "पिब" ‖ ॥

"परीणसं"-"परीणसा"—इति पाठौ ॥ २ ॥ ७

२ १ २र र १र २ १ २
॥ आर्षभम् ॥ अभित्वावृषभासुते । सुतꣳसृजामि ।

र १ १ २र १र २ १
मिपीतायाऽ२यि । सुतꣳसृजामि । पीताऽ२३यायि । त्वा

* ऋ० वे० ६, ३, ४६, ४ । † 'अथ आर्षभं साम'—इति वि० ।

‡ 'गोपरीणसम्—गावः परि समन्तात् नीयन्ते दक्षिणा यस्य स गोपरीणस इन्द्रः'—इति वि० ।

¶ राधसे—राधः अन्नं सोमलक्षणं तस्मिन् सन्निधानभूते सोमे—इति वि० ।

§ 'सरः सरणं कृत्वा'—इति वि० । "सरः"—इति निघण्टौ उदकनामसु षट्त्रिंशत्तमं पदम् ( १, १२ ) ।

‖ 'गौरः यथापिब—तथाच ब्राह्मणे—"गौरमृगो ह स्म भक्त्वा अरण्याद्राजानं पिबति"—इति'—इति वि० ।

२ १ ३ ५ र १ र १ ३ १ १ १ १
२३म्बा३। वा२या२३४औहोवा। ऋुहीमदा२३४५म् ॥(१)

१र र २र१र २ १ २र १ २ र १
मात्वामूराअविष्यवः। मोपह्स्वोवा। नआदाभा २न्।

१र२१२र १र २ १ २ १
मोपह्स्वानः। आदा२३भान्। मा२३कीर३म्। आ२

३ ५र र २ १३१११११ २ १ २र१र २र
ह्वा२३४औहोवा। द्विषवना२३४५ः॥(२) इहत्वागोपरी

र १ २ र १ १र २
णसम्। महेमन्दोवा। तुराधासा २यि। महेमन्दन्तु।

१र २ १ २ १ ३ ५र र
राधा२३साथि। सा२३रा३ः। गौ२रा२३४औहोवा।

२ र १ २ ११११
यथापिवा२३४५(३) ॥ ५ * ॥ [१] ७

अथ चतुर्थतृचे—प्रथमा।

३ १ २ ३ १२३ २ २ ३ १ २ ३ १ २
इदंवसोसुतमन्धःपिबासुपूर्णमुदरम्।

१ २ ३ १ २
अनाभयिन्ररिमाते ॥ १ † ॥

हे "वसो" वासयितरिन्द्र! "इदं" पुरोवर्तमानं "सुतम्" अभिषुतम् "अन्धः" अन्नं सोमलक्षणं "पिब"। यथा—"उदरं"

---

* ऊ० गा० १प्र० २अ० ५सा०।

† ऋ० आ० २, १, ३, १० (१भा० २०५ पृ०)=ऋ० वे० ५, ७, १०, १।

"त्वदीयं" जठरं "सुपूर्णम्" अतिशयेन सम्पूर्णं भवति तथेत्यर्थः। हे "अनाभयिन्" [आ समन्तात् बिभेति—इत्याभयी; बिभेतेरौणादिक इनिः; न आभयी अनाभयी तादृश!] हे इन्द्र! "ते" तुभ्यं त्वदर्थं "ररिम" उक्तलक्षणं सोमं दद्मः [रादाने (अदा०, प०) छान्दसो (३,२,१०५) लिट्॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ २उ ३ २ ३ २ ३ १ २

नृभिर्धौतःसुतोअश्नैरव्यावारैःपरिपूतः।

२ ३ २ ३ २ ३ १ २

अश्वोननिक्तोनदीषु॥ २ *॥

"नृभिः" अध्वरस्य नेतृभिः ऋत्विग्भिः "धौतः" तृणाद्यपनयनेन शोधितः [ यद्वा; धौतः धूतः आधूतः, अदाभ्यग्रहे† आधूननेन संस्कृतः, तदनन्तरम् "अश्नैः" अश्मभिर्ग्रावभिः करणभूतैः "सुतः" अध्वर्युभिष्षुतः ततः "अव्यावारैः" अविमेषः

---

* ऋ० वे० ५, ७, १७, २।

† ग्रहः=गृहीतसोमं सोमपानपात्रम्। ते च प्रातःसवने उपांशुप्रभृतयः, माध्यन्दिने सवने मरुत्वतीयादयः, तृतीयसवने आदित्यादयः। किञ्चैतदतिरिक्ताः षोड़श्यादि-यागविशेषे नियुक्ताश्च सन्ति बहवः षोडशीत्यादयः। तत्सर्वातिरिक्तश्चैकोऽदाभ्यनामकः; स च यस्मिन्नौदुम्बरे पात्रे संगृह्य गृहीतस्तस्मिन् सोमचमसस्था निग्राभ्यास्वप्स्वाप्य आनीय तस्मिंस्तिस्रः सोमलताः प्रक्षिप्याग्नये त्वेत्यादिभिर्मन्त्रैः क्रमेण गृह्यते विहितञ्चैतत् कात्यायनेन "अदाभ्यं गृहीत्वाऽऽसिच्य निग्राभ्याः पात्रे तस्मिंस्तूष्णीं त्रीनंशूनवधायाग्नये त्वा गायत्रच्छन्दसमिति ( घ० वा० ८, ४७) प्रतिमन्त्रमुपयामः सर्वत्राविशेषात् ( १२, ५, १४-१५ )"—इति।

तत्सम्बन्धिभिः वालैः "परिपूतः" शोधितः, दशापवित्रस्य नाभिपूततया ऊर्णास्तुकया हि सोमः परिपूयते ; तदुक्तम् भगवता आपस्तम्बेन—"शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति तां यजुष्टे दशापवित्रस्य नाभिं कुरुते शुक्लञ्च लक्ष्याः पवित्र मोतं भवति"—इति *। "नदीषु" नदनाखप्सु † "अश्वोन" अश्वइव "निक्तः" निर्णिक्तः शोधितः ‡ ; यथा अप्सु स्नातो अश्वः अपगतमलः सन् दीप्तो भवति, एवं वसतीवर्याख्याभिरद्भिरभिषुतः सोमो दीप्तो भवतीत्यर्थः। ईदृशो यः सोमः "तन्तेयवम्"—इत्युत्तरया सम्बन्धः॥

"धौतः"-"धूतः"—इति पाठौ॥ २॥

अथ तृतीया।

२ ३ १ २ २ १ १ २ २ १२ ३ १ २
तन्तेयवंयथागोभिःस्वादुमकर्मश्रीणन्तः।

१ २ २ १ २ ३ १ १
इन्द्रत्वास्मिन्सधमादे॥ ३ ¶॥ ८ §

"तं" पूर्वोक्तगुणं सोमं हे इन्द्र! "ते" त्वदर्थं "यवं यथा" यवमयं सवनीय-पुरोडाशमिव "गोभिः" गवि भवैः क्षीरादिभिः

* स्पष्टश्चैतत् समस्तं यजुर्वाजसनेयि-संहितायां सप्तमाद्यध्यायचतुष्टये।

† 'नदीषु—अधिकरणभूतासु'—इति वि०।

‡ 'निक्तः—स्नातः'—इति वि०।

¶ ऋ० सं० ५, ७, १७, ३।     § 'वत गारं साम'—इति वि०।

अपणद्रव्यैः "श्रीणन्तः" मिश्रीकुर्वन्तः "स्वादु" रसवत्वेनास्वादनीयम् "अकर्म्म" अकार्ष्म * [करोतेर्लुङि "मन्त्रे घस (२,४,८०)"—इति च्लेर्लुक्]। यस्मादेवं तस्मात् हे "इन्द्र!" "त्वा" त्वां तादृशं सोमं पातुम् "अस्मिन्" वर्त्तमाने "सधमादे" सहमादने यज्ञे आह्वयामीति शेषः॥ ३॥ ८

२ र २ र र५ १
॥ गारम् ॥ इदंवसोसुतमन्धा३ए। पिबासुपू३र्णा
७ २र २ १ र र ७ २र २ १
मुदरौ। हो३वा। पिबासुपूर्णामुदरौ। हो३वा। अ
२ २ १ २र १ २ ४ ५ २ र
नाभा३यीन्। ररिमाता। औ३होवा॥(१) नृभिर्द्धौ
र २ र र र५ १ ७र२र १
तःसुतोअश्ना३यिरे। अव्यावारै३ःपारिपूतौ। हो३वा।
१ र र र ७ र २र २ १ २ २ १र
अव्यावारैःपारिपूतौ। हो३वा। अश्वोना३नी! त्तो
२र १ २ ४ ५ २ र र र २ र
नदीषू। औ३होवा॥(२) तन्तेवयंयथागोभी३रे। स्वा
१ ७र २र २ १र ७र २र
दुमका३र्माश्रीणन्तौ। हो३वा। स्वादुमकर्माश्रीणन्तौ।

---

* 'यवं यथा गोभिः स्वादुम् अकर्म कृतवन्तः। गोभि रिति तृतीया-बहुवचनं चतुर्थी-बहुवचनस्य स्थाने द्रष्टव्यम्। गोभ्यः यवं यथा, गोभ्यः स्वादुमुत्पाद्यानयति तद्वत् तथापि सोमम् अकर्म करवाम। श्रीणन्तः श्रीणयन्तः, अथवा ० ० ०।'—इति वि०।

२ १ २ २ १ २र १ २ ४
होऽ२वा। आइन्द्रात्वाऽ२स्तौन्। सधमादा। औऽ२हो

५ ४
वा। होऽ५ई। डा॥ ६ *॥ [१] ८

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य
द्वितीयः खण्डः॥ २॥

---

अथ तृतीय-खण्डे—

प्रथमतृचे, प्रथमा।

२ १र २र ३ १ २
इदंह्यन्वोजसासुतंराधानाम्पते।
२ ३ २ १ ३
पिबात्वाऽ३स्यगिर्वणः॥ १ †॥

हे "राधानां पते" धनानां स्वामिन्! "गिर्वणः" गीर्भिः स्तुतिभिः वननीय! हे इन्द्र! "ओजसा" बलेनावहितः त्वम् "इदम् अनु" अनेनानुक्रमेण उद्देशानुक्रमेणेत्यर्थः; "सुतम्" अभिषुतम् "अस्य" इमं सोमं "नु" क्षिप्रं "पिबहि" ॥ १॥

---

* ऊ० गा० १प्र० २ख० ६सा०।
† ऋ० आ० २, २, ३, १ (१भा० ३७५पृ०)=ऋ० वे० ३, ३, १६, ५।

अथ द्वितीया।

२ ३ १२ ३ १२ २२ ३ १२ २२ ३क २२
यस्तेअनुस्वधामसत्सुतेनियच्छतन्वम्।
१ २
सत्वाममत्तुसोम्य* ॥ २ † ॥

हे इन्द्र! "ते" त्वदर्थं "यः" सोमः "स्वधाम्" अन्नम् "अनु" लक्ष्य ग्रावभिः अभिषुतः "असत्" भवेत् [ अस्तेर्लेटाडागमः। यद्वृत्तयोगान्न निघातः (८,१,६६), आगमस्यानुदात्तत्वे धातुस्वरः (६,१,१६२) ]। "सुते" तस्मिन् सोमे "तन्व" ‡ स्वकीयं शरीरं "नियच्छ" प्रेरय "सः" सोमः हे "सोम्य" सोमार्ह ¶! "त्वा" त्वां "ममत्तु" मादयतु ॥ २ ॥

अथ तृतीया।

१ १ २ २उ ३ १ २ ३ १ २
प्रतेअश्नोतुकुक्ष्योःप्रेन्द्रब्रह्मणाशिरः।
२ ३ १ २ ३ २
प्रबाहूशूरराधसा ॥ ३ § ॥ ९ ‖

---

* "सोम्यम्"—इति ऋ-पाठः। † ऋ० वे० २, ७, १६, ६।

‡ "छन्दस्युभया (६, ४, ८६)"—इति सूत्रस्थेन "तन्वादीनां छन्दसि बहुलम्" —इति वार्त्तिकवचनेनोवङोवैकल्पिकत्वं बोध्यम्।

¶ "सोम्य—सोमानां स्वामिन् पते!"—इति वि०। "सोममर्हति यः (४, ४, १३७)" छान्दसो योऽत्र सायणमते सङ्गच्छते।

§ ऋ० वे० २, ३. १६, ७।

‖ 'अत्र घृतश्चुन्निधनं साम'—इति वि०।

हे "इन्द्र !" "सः" सोमः "ते" तव "कुक्ष्योः" कुक्षेरुभयोः पार्श्वयोः "प्राप्नोतु" प्रकर्षेण व्याप्नोतु [ अशू व्याप्तौ विलक्ष्य (स्वा०,आ०) लोटि व्यत्ययेन परस्मैपदम् (३,१,८५) निघातः (८,१,७०) ] तथा "ब्रह्मणा" स्तोत्रेण सहितः * स सोमः "शिरः" शरीरम् [ अवयविना अवयवो लक्ष्यते ] त्वच्छरीरं प्राप्नोतु। हे "शूर" विक्रान्तेन्द्र! "राधसा" धनेन निमित्तेन तव "बाहू" अपि प्राप्नोतु॥

"राधसा"-"राधसः"—इति पाठौ॥ ३॥ ९

२ १र १
॥ घृतश्चुन्निधनम्॥ इदꣳह्यन्२ओजसा। सुतꣳ
२ १ १र र २ १ २ १
राधा। नाम्पातौ। होवा३हायि। पिबातुव। स्युगा
२र र २ १ २र र १
यिर्वाणौ। होवा३हायि। पिबातुवौ। होवा३हा।
१ २ ५र र २ र २र
स्युगायिः। वा२ना२३४औहोवा॥(१) यस्ते अनुस्वा३धा
१ २ १ २र र २
मसात्। सुनायिनिय। च्कतानुवमौ। होवा३हायि।

* 'ब्रह्मणा अन्नेन, शिरः; अथवा ब्रह्मणा वैयिद्यलक्षणेन शिरः। ०००। बाहू०००। व्याप्नोतु०००। एतदुक्तं भवति समस्तात् मदीयेन यशसा'—इति वि०।

१ २ १ २र र २ १ २र
सत्वामम। तुवोमायौ। होवा३हायि। सत्वाममौ।
र २ १र ३ ५र र २ र
होवा३हा। तुवो। मा२या२३४औहोवा॥(२) प्रतेअ
र २ १ २ १ २र र
श्नोतु३कुक्षियोः। प्रायिन्द्रब्र। ह्मणाआयिरौ। होवा
२ १ २ १ २र र १
३हायि। प्रवाहृष्ट। रराधासौ। होवा३हायि। प्र
१ २र र २ १र ३ ५र र
वाहृओ। होवा३हा। ररा। धा२सा२३४औहोवा।
२ १ ३१११ १
घृतश्चु२ता२३४५ः(३)॥ ७ *॥ [१] ९

अथ द्वितीय-दृचे, प्रथमा।

२३ ३ १२ ३१२ ३१र २र
आत्वेतानिषीदतेन्द्रमभिप्रगायत।
१ २ ३१ २
सखायस्तोमवाहसः॥ १ †॥

"तु"[-शब्दः क्षिप्रार्थो निपातः, द्वाभ्या माङ्भ्याम् एतमिति शब्दोऽभ्यसनीयः]। हे "सखायः" ऋत्विजः! क्षिप्रम् अस्मिन्

* ऊ० गा० १प्र० २अ० ७गा०।

† छ० आ० २, २, २, १० (१भा० २०२ पृ०)=ऋ० वे० १, १, १९, १।

कर्मणि आगच्छत आगच्छत [ आदरार्थोऽभ्यासः ]। आगत्य च "निषीदत" उपविशत। उपविश्य च "इन्द्रम्" "अभिप्रगायत" सर्वतः प्रकर्षेण स्तुत। कीदृशाः सखायः? "स्तोमवाहसः" त्रिवृत्पञ्चदशादिस्तोमानस्मिन् कर्मणि वहन्ति प्रापयन्तीति ॥ ["अर्त्ति-स्तु-सु-हु-सृ-धृ-क्षि-क्षु-भा-या-वा-पदि-यक्षि-नीभ्यो मन् (उ०,१,१३७)"—इति स्तौतेर्मन्-प्रत्ययान्तः स्तोमशब्दो नित्वादाद्युदात्तः (६,१,१९७)। स्तोमं वहन्तीति स्तोमवाहसः "वहि-हा-धाञ्-भ्यश्छन्दसि"—इत्यसुन् प्रत्ययः, तत्र णिदित्यनुवृत्तेः "अत उपधायाः (७,२,११६)"-इत्युपधाया वृद्धिः; कृदुत्तरपदप्रकृतिस्वरत्वे (६, २, १३९) प्राप्ते "गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वञ्च ( उ०, ४, २२६ )"—इत्यौणादिकसूत्रात् समासस्याद्युदात्तः ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ १र २र ३ १ २
पुरूतमम्पुरूणामीशानं वार्य्याणाम् ।

२ ३ २ ३ १ २ ३ २
इन्द्रꣳसोमेसचासुते ॥ २ * ॥

सखायोऽभिप्रगायतेति पदद्वयमत्रानुवर्त्तते। हे "सखायः" ऋत्विजः! "सचा" यूयं सर्वे सह यद्वा सचा परस्परसमवायेन

* ऋ० वे० १, १, १८, २।

"सुते" अभिषुते सोमे प्रवृत्ते सति "इन्द्रम्" अभिप्रगायत। कीदृशमिन्द्रम्? "पुरूतमं" पुरून् बहून् शत्रून् तामयति ग्लापयतीति पुरूतमः [तमु ग्लानौ (दि०,प०)—इति धातोर्ण्यन्तात् पचाद्यचि चित्वादन्तोदात्तेऽपि (६, १, १६३) कृदुत्तरपदप्रकृतिस्वरं (६, २, १३९) बाधित्वा "परादिश्छन्दसि बहुलम्* (६, २, १९९)"—इत्युत्तरपदाद्युदात्तत्वम् ], "पुरूणां" बहूनां "वार्याणां" वरणीयानां धनानाम्† "ईशानं" स्वामिनम् ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ २ ३ १र २र
सघानोयोगआभुवत्सरायेसपुरन्ध्या।
२ ३ १ २ ३ १र २र
गमद्वाजेभिरासनः ॥ ३ ‡ ॥ १० ¶

घ-शब्दोऽवधारणार्थो निपातः,§ सर्वैस्तच्छब्दैः सम्बध्यते। "स घ" स एवेन्द्रः पूर्वमन्त्रोक्तगुणविशिष्टः "नः" अस्माकं‖ "योगे" पूर्वमप्राप्तपुरुषार्थस्य सम्बन्धे** "आ भुवत्" आभिमुख्येन

* अनेन सूत्रेण तु सक्थ-शब्दस्यैवाद्युदात्तो विकल्प्यते, परमत्र पठितवार्त्तिकश्लोकेनैवान्यत्रापि सर्वत्र दृष्टानुविधयः कल्प्यन्ते। तथाच—"परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते। पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलन्ततः"—इति।

† 'वार्याणाम् उदकानाम्'—इति वि०।

‡ ऋ० वे० १, १, १९, ३।

¶ 'अत्र दैवातिथं साम'—इति वि०।

§ 'घ—इति पदपूरणः'—इति वि०।

‖ 'नः—अस्मभ्यम्'—इति वि०।

** 'योगे—यत्र देवता युज्यन्ते असौ योगः यज्ञे'—इति वि०।

भवतु पुरुषार्थं साधयत्वित्यर्थः [ भवते राशीर्लिङि परतो "लिङ्याशिष्यङ् ( ३, १, ८६ )"—इत्यङ् प्रत्ययः, तस्य ङित्विन गुणाभावात् उवङादेशः ], स एव "राये" धनार्थम् "आभुवत्" आभवतु ; स एव "पुरन्ध्या" योषिता * भुवत् [ यद्वा, बहुविधायां बुद्धावाभुवत् "पुरन्धिर्बहुधीः"—इति यास्कः ( ६, १३ ) ] स एव "वाजेभिः" देवैः अन्नैः सह "नः" अस्मान् † "आगमत्" आगच्छतु [ गमेर्लेट् तिप्, "इतश्चलोपः परस्मैपदेषु ( ३, ४, ८७ )"—इति इकार-लोपः, "बहुलं छन्दसि ( २, ४, ७३ )"—इति शपोलुक्, "लेटोऽडाटौ ( ३, ४, ९४ )" —इत्यडागमः, आगमाअनुदात्ताः इति तस्यानुदात्तत्वे धातुस्वरएव ( ६, १, १६२ ) शिष्यते ॥ ३ ॥ १०

३र २ र र ५र ५
॥ दैवातिथम् ॥ आहु३४। एतानि। षीदाई्ता।

२ १ २ र १ २र १र २
इन्द्रमभायि। प्रगायता। साखायस्तोम। वा। औ

२ १ २ ५ २ १ २र १र
३हो। वआरहार३४साः। ह्याायि। साखायःस्तोम।

२ २ १ २ ५
वा। औ३हो। ऊम्मार३। हा३४५सो६हायि ॥(१)

* 'पुरन्ध्या—रथ्या'—इति वि०। "पुरन्धिर्बहुधीस्तत्कः पुरन्धिर्भगः पुरस्तात्तस्यान्वादेश इत्येक मिन्द्र इत्यपरं स बहुकर्मतमः पुराञ्च दारयितृतमो वरुण इत्यपरंस"—इति निरु० नै० ६, १३।

† 'नः—चस्माकम्'—इति वि०।

३ २ ५ ५ २र र १ २ १र
पुह्व३४। तम्पु। ह्वईणाम्। ईशानंवा। रियाणा

२ १र २र १ २ २ १ ३
म्। इन्द्रꣳसोमेस। चा। औ३ह्वो। ववा२ह्व२

५ २ १ २ १र २र १ २ १
३ ४तायि। ह्वयायि। इन्द्रꣳसोमेस। चा। औ३ह्वो।

१ २ ५ ३ २ र र र
ऊम्मा२३। ह्व३४५तोई ह्वायि॥(२) सघा३४। नोयोगे।

५र ५ २ र १र २ १ २ १र ५र १
आभूइवात्। सरायेसाः। पुरन्धिया। गमद्वाजेभिः।

२ २ १ ३ ५ २ १ २
आ। औ३ह्वो। ववा२सा२३४नाः। ह्वयायि। गम

१र२र १ २ १ २
द्वाजेभिः। आ। औ३ह्वो। ऊम्मा२३। सा३४५

५
नोईह्वायि(३)॥ ८ *॥ [१] १०

अथ तृतीयर्चे, प्रथमा।

१ २ ३ १ २ ३ १ २
योगेयोगेतवस्तरंꣳवाजेवाजेहवामहे।

१ २ ३ १ २ ३ १ २
सखायइन्द्रमूतये॥ १ †॥

---

* ऊ० गा० १प्र० २अ० ८सा०।

† छ० आ० २, २, १, ९ (१भा० ३७१ पृ०)=य० वे० ११, १४ = ऋ० वे० १, ३, २९, २।

"योगेयोगे" प्रवेशे प्रवेशे तत्तत्कर्मोपक्रमे [ युजिर् योगे ( रु०, उ० ) "हलश्च ( ३, ४, १२१ )"--इति घञ्, "चजोः कुघिण्यतोः (७, ३, ५२)"—इति कुत्वम्, घञोञित्वादाद्युदात्तत्वम् ( ६, २, १९७ ), "नित्यवीप्सयोः ( ८, १, ४ )"—इति वीप्सायां द्विर्भावे सति, आम्रेडितानुदात्तम् (८, १,३) ] "वाजे वाजे" कर्मविघातिनि तस्मिन् सङ्ग्रामे "तवस्तरं" अतिशयेन बलिनम् "इन्द्रम्" "ऊतये" रक्षार्थं "सखायः" सखिवत् प्रियाः वयं "हवामहे" आह्वयामः* ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १र  २र  ३ १ २  ३ १र २र
**अनुप्रत्नस्यौकसोऊवेतुविप्रतिन्नरम् ।**

२ ३ १ २ ३ २ ३ २
**यन्तेपूर्वम्पिताऊवे ॥ २ † ॥**

---

* कात्यायनेन त्वयं मन्त्रोऽग्निचयनेऽजाभिमन्त्रणे नियुक्तः (१६, २,१०) महीधरस्त्वेवं व्याचख्यौ—"अजदेवत्या गायत्री शुनःशेपदृष्टा, अजं मन्त्रयते । "सखायः" परस्परसख्यं प्राप्ता ऋत्विग्यजमाना वयम् "इन्द्रम्" इन्द्रियवन्तं वीर्यवन्त मिन्द्रियप्रदं वा अजम् "ऊतये" अवनाय रक्षणाय "हवामहे" आह्वयामः ह्वः अपि सम्प्रसारणम् ( ६, १, ३४ )। क्व सति ? "वाजे-वाजे" तत्तदन्ने मनुष्याणां देवानाञ्च दातव्ये सति तत्तदन्न-प्राप्ति-निमित्तं वा । किम्भूतमजम् ? "योगे-योगे तवस्तरं" युज्यत अनुष्ठीयत इति योगः कर्म, तस्मिन् तत्तत्कर्मणि तवस्तरं बलवत्तरमुत्साहवन्तम् । तव इति बलनाम ( निघ० २, ९, ४, )। तवोबलमस्यास्तीति तवस्वी । अस्मायेत्यादिना विन् ( ५, २, १२१ )। अत्यन्तं तवस्वी तवस्तरस्तम् अतिशये तरप् विन्मतोर्लुगिति ( ५, ३, ६५ ) तरपि विनो लुक् ॥"—इति ॥

† ऋ० सं० १, १, २९, २ ।

"प्रत्नस्य" पुरातनस्य "ओकसः" स्थानस्य स्वर्गरूपस्य* सकाशात् "तुवि प्रतिं" बहून् यजमानान् प्रतिगन्तारम्† [अत्र प्रतिशब्दो भीमसेनो भीमइतिवत् प्रतिगन्तृ-शब्दं लक्षयित्वा तद्द्वारा तदर्थं लक्षयति, अतः प्रति प्रतिनिधि-प्रतिदानयोरिति-वत् सत्ववचनत्वेनानिपातत्वादनव्ययत्वे "पूरणगुणेत्यादिना (२, २, ११) न षष्ठी-समास-निषेधः]। "नरं" पुरुष-मिन्द्रम् "अनुहुवे" अनुक्रमेण कर्मस्वाह्वयामि [ह्वेञो लिटि "बहुलं छन्दसि (६, १, ३४)"—इति पूर्ववत्। सम्प्रसारण-पर-पूर्वत्वे द्विर्वचन-प्रकरणे "छन्दसि वा (६, १, १ वा०)"—इति वक्तव्यमिति द्विर्वचनाभावः। "यद्वृत्तयोगादनिघातः (८, १, ६६)]। "यं" "ते" त्वामिन्द्रं "पिता" अस्मदीयो जनकः "पूर्वं" पुरा स्वकीयानुष्ठानकाले "हुवे" आहूतवान्, तमाह्वया-मीति पूर्वेणान्वयः‡ ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः।
१ २ ३ १ २ ३ १ २
वाजेभिरुपनो हवम् ॥ ३ ¶ ॥ ११ §

---

* 'ओकसः—गृहस्य, उदकस्य, बलस्थानस्य वा'—इति वि०।

† 'तुविप्रतिं—तुविपुर्विति बहुनाम, बहुप्रतिम्, प्रतिशब्देनात्र शत्रवो लक्ष्यन्ते, बहुशत्रुमिन्द्रम्'—इति वि०।

‡ 'यं ते पूर्वं पिता हुवे—अन्तरात्मनस्तावत् हे मदीयान्तरात्मन्! तमिन्द्रं हुवे, यं ते तव पूर्वतने काले त्वदीयः पिता आह्वयते।'—इति वि०।

¶ ऋ० वे० १, २, २९, ४।  § 'अत्र सौमेधं साम'—इति वि०।

"यदि अवत्" यद्ययमिन्द्रो "नः" अस्मदीयं "हवम्" आह्वानं शृणुयात्, तदानीं स्वयमेव "सहस्रिणीभिः ऊतिभिः" बहुभिः पालनैः "वाजेभिः" अन्नैश्च "उप" समीपे "आ व" अवश्यम्* "आगमत्" आगच्छेत् ॥ ३ ॥ ११

॥ सौमेधम् ॥ योगेयोगेतवाहाउस्तारम्। वाजे वाजे। हवा २माहायि। हवायि। औ३हो२३४वा। साखायइ। इन्द्र २तायायि। हवायि। औ३हो२३४ वा। सखायआ। हवा २यि। औ३हो२३४५वा६५६। इन्द्र३तये२३४५ ॥(१) अनुप्रत्नस्यौहोउकासाः। हुवेतु वि। प्रता २यिन्नाराम्। हवायि। औ३हो२३४वा। यान्तेपूर्वम्। पिता २हवायि। हवायि। औ३हो२३४ वा। यन्ते पूर्वाम्। हवा २यि। औ३हो२३४५वा६५६। पिताइहुवे २ ३ ४ ५ ॥(२) आघागमद्यदीहाउआवात्।

* 'आ व—इति पदपूरणौ'—इति वि०। मन्त्रे "वा"—इति दीर्घपाठः। तत्र "निपातस्य च (६, ३, १३६)"—इति दीर्घः।

१ २ २ १ २
साद्द्विणी। भिद्ध२नायिभायिः। हुवायि। औ३हो

५ १ २१ १ १ २
२३४वा। वाजेभिह्। पनो२द्दावाम्। हुवायि। औ

५ ३२ २ २ १ ६
३द्दो२३४वा। वाजेभिद्ध। हुवा२यि। औ३हो२३४५

२ १ १ १ १ १
वा६५६। पनो३हवा२३४५म् (३)॥ ८ *॥ [१] ११

अथ चतुर्थदृचे, प्रथमा।

१ २ ३ २ ३ २ २ ३ १ २ ३क २र
इन्द्रसुतेषुसोमेषुक्रतुम्पुनीषउक्थ्यम्।

३ २ ३ २ ३ १ २ २ २
विदेवृधस्यदक्षस्यमहाꣳहिषः॥ १†॥

"सोमेषु" "सुतेषु" अभिषुतेषु सत्सु हे "इन्द्र!" त्वं तान् पीत्वा "क्रतुं" कर्मणां कर्त्तारम् "उक्थ्यम्" स्तोतारञ्च "पुनीषे" शोधयसि। यद्वा सोमेष्वभिषुतेषु उक्थ्याख्यं "क्रतुं" यागं तैः सोमैः पुनीषे यजमानैः पूतं कारयसि। किमर्थम्? "वृधस्य" वर्द्धकस्य "दक्षस्य" बलस्य "विदे" लाभाय "सः" तादृशस्त्वं "महान्" "हि" खलु; अतएवं कर्त्तुं शक्नोषीत्यर्थः॥

"इन्द्रसुतेषु"-"इन्द्रः सुतेषु"—इति, "पुनीषे"-"पुनीते"—इति, "दक्षस्यमहाꣳहिषः"—"दक्षसोमहान्हिषः"—इति च पाठौ॥ १॥

---

* ऊ० गा० १प्र० २अ० ९सा०।

† ऋ० आ० ४, २, ५, १ (१ भा० ७८२ पृ०) = ऋ० वे० ६, १, ७, १।

अथ द्वितीया ।

१ २ ३ १ २ 　 ३ २ ३ 　 १ २ ३ २
सप्रथमेव्योमनिदेवानाꣳसदनेवृधः ।
३ २ ३ १ २ 　 ३ १ २ ३ २
सुपारःसुश्रवस्तमःसमप्सुजित् ॥ २* ॥

"सः" इन्द्रः "प्रथमे" प्रथिते विस्तीर्णे मुख्ये वा† "व्योमनि" विशेषेण रक्षके च "देवानां" "सदने" सीदन्त्यस्मिन्निति सदनं स्थानं स्वर्गाख्यं तत्र‡ स्थितः सन् "वृधः" यजमानानां वर्द्धयिता च भवति । तथा "सुपारः" सुष्ठु पारयिता प्रारब्धस्य सम्यक् परिसमापयिता¶ "सुश्रवस्तमः" अतिशयेन शोभनं श्रवोऽन्नं यशो वा यस्य स तथोक्तः, "समप्सुजित्" सम्यक् अप्सूदकेषु प्राप्येषु सत्सु यत् तद्विघातनो वृत्रादेर्जेता ; यद्वा, आप इत्यन्तरिक्षनाम (निघ० १, ३, ८) अन्तरिक्षे वर्त्तमानानामसुराणां जेता § तमु हुवे इत्युत्तरत्र सम्बन्धः ॥ २ ॥

---

* ऋ० वे० ६, १, ७, २ ।

† 'प्रथमे अग्रे'—इति वि० ।

‡ 'देवानां सदने स्थाने यज्ञे'—इति वि० ।

¶ 'सुखेन पार्यते यष्टुं यः सः सुपारः'—इति वि० ।

§ 'समप्सुजित्—सङ्ग्रामेषु जेता'—इति वि० । "समत्सु"—इति सङ्ग्रामनामसु निघण्टौ दृश्यते (२, १७, २२) तदेव पाठभेदात् समप्सु—इत्येवात्र विवरणकृदाशयः ।

अथ तृतीया ।

१ २ ३ १ २ ३ २ ३ १ २ २ १ २
तमु हुवे वाजसातय इन्द्रम्भराय शुष्मिणम् ।

१ २ ३ १ २ ३ २ १ २ ३ २
भवा नः सुम्ने अन्तमः सखा वृधे ॥ ३* ॥ १२ †

"तमु" पूर्वोक्तगुणमेव "शुष्मिणं" बलवन्तम् "इन्द्रं" "वाजसातये" बलाना मन्नानां वा साति र्लाभो यस्मिन् तादृशाय "भराय" सङ्ग्रामाय ; यद्वा, [ ध्रियन्ते तस्मिन् हवींषीति भरो यज्ञः, प्रायेण सङ्ग्रामनामानि यज्ञनामत्वेन च दृश्यन्ते ] भराय यज्ञार्थं "हुवे" आह्वयामि। हे इन्द्र ! त्वं "सुम्ने" सुखे धने वा लिप्सिते सति "नः" अस्माकम् "अन्तमः" अन्तिकतमः सन्निकृष्टतमो भव [ तमेतादेरेति अन्तिकशब्दस्यतादि लोपः ] ; "वृधे" वर्द्धनार्थञ्च "सखा" समानख्यानो मित्रभूतो भव ॥

"तमुहुवे"—"तमुह्वे—इति पाठौ ॥ ३ ॥ १२

॥ कौत्सम् ॥ इन्द्रसुतेषुसोमेषू । क्रतुं रम्पुनायि । य

उक्थियाम् । विदेवार्द्धा २ । स्यदक्षस्या । महा ऽहा

यिषा २ः । महा ऽ२३हिषा३४३ः ॥(१) सप्रथमेवियोमा

* ऋ० वे० ६, १, ७, २ ।

† 'अत्र कौत्सं साम'—इति वि० ।

२　　१२　१२　　　२२१　　　२२१
नो । देवा२ना७सा । हनवृधाः । सुपाराःसु२ । अ

१　　　२　१　　　१　　२
वस्तमाः । समप्सुजो२त् । समा२३प्सुजो३४३त् ॥(२)

१　२२　२१२　　　　१　　२　१
तमुऊवेवाजसातायायि । इन्द्रा२भरा । यष्टुक्मिणाम् ।

२२१　　　२　१　　　२२१　　　　१
भवानाःहु२ । वृत्रेष्वन्तमाः । सखावाजा२यि । स

२　१　　　　१　　　२　　　१
खावाजा२यि । सखा२३वृधा३४३यि । औ२ ३ ४ ५ई ।

डा(३) ॥ १० * ॥ [१]

१　२१२२ १२ २२१　　　　　२
॥ उद्व७शीयम् ॥ इन्द्रस्तुतेषुसोमेषा । क्रतुम्पुनीषउक्था

१　　　　१　　२　　१　२　२
२३याम् । विदा२हो१यि । वा२३र्द्धा । स्यदा१क्षा३

२　　२　३　　　५　१　६　२　　२
स्या । मह्वा७हा२३४यिषाः । माहा३उवा३ । उप् ।

१　　　१　　　　१　२१२२　२१　२२२
हा२यिषो३५हायि ॥(१) सप्रथमेव्योमनिया । देवाना७

२　　२　　१　　　　२　　१　२　२
सदनेवा२३र्द्धाः । सुपा२हो१ । रा२३ःह । अवा१स्ता

२　　３　　५　　१　६　२　　२　१
३माः । समञ्ज२३४जीत् । सामा३उवा३ । उप् । पञ्च

---

जा० गा० १प्र० २ख० १०गा० ।

२ १ २र१र २र१२१ र
ऽ२ओ३५हायि ॥(२) तमुक्रवैवाजसातयआ। इन्द्रम्भरा

२ १ २ १र २
यष्टुष्माऽ२३यिणाम्। भवा २हो१ ना२३:५वृ। नेआ

२ २ र २ ५ १ ऽ २
१न्ताऽ३मा:। सखावा २३४ हायि। साखा३उवा३।

२ १ २
उप्। वाऽ२हौ३५हायि(३) ॥ २ * ॥ [२] १२

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य

तृतीय-खण्ड: ॥ ३ ॥

———

अथ चतुर्थे खण्डे, प्रगाथरूपे—

प्रथमसूक्ते, प्रथमा।

३१ २ ३१ २र३ १ २र३१२
एनावोअग्निन्नमसोर्जोनपातमाहुवे।

३१ २र ३१ २३१ २र ३२३१२
प्रियञ्चेतिष्ठमरतिं स्वध्वरं विश्वस्यदूतमम्तम् ॥ १ † ॥

---

* ऊ० गा० १९प्र० १ख० २सा०।

† छ० आ० १, १, ५, १ (१ भा० १९७ पृ०) = ऋ० वे० ५, २, २१, १।

'इदानीं मन्त्रिवर्णानाय:, सच हृ-देवत्य: अग्निरग्निमाविति'—इति वि०।

"ऊर्जः" बलस्य "नपातं" [नपादित्यपत्यनाम (निघ०२,२,१२)] पुत्रं "प्रियम्" अस्माकम् "चेतिष्ठम्" अतिशयेन ज्ञातारं प्रज्ञापकं वा "अरतिं" गन्तारं स्वामिनं वा "स्वध्वरं" शोभनयज्ञं "विश्वस्य" सर्वस्य यजमानस्य "दूतम्" "अमृतं" नित्यम् "अग्निम्" "एना" एतेन "नमसा" स्तोत्रेण हे ऋत्विग्यजमानाः! "वः" युष्मदर्थम् "आहुवे" आह्वयामि॥१॥

अथ द्वितीया।

१ २      ३ २ ३ १ २    ३ १ २ २क २र
सयोजतेअरुषाविश्वभोजसासदुद्रवत्स्वाहुतः।

३ १ २ ३ २ ३ २ ३ १ २    ३ २उ    ३ १ २
सुब्रह्मायज्ञःसुशमीवसूनान्देवꣳराधोजनानाम्॥२*॥१३†

"सः" अग्निः "अरुषा" आरोचमानौ "विश्वभोजसा" विश्वस्य पालयितारा वश्वौ "योजते" स्वकीये रथे "युनक्तु" [यद्वा, "विश्वभोजसा" विश्वस्य रक्षकेण "अरुषा" आरोचमानेन तेजसा "योजते" अयुज्यत]। तदनन्तरं यः अग्निः "स्वाहुतः" स्तोतृभिः सुष्ठु आहुतः सन् "दुद्रवत्" आनेतुं देवान् प्रति भृशं द्रवतु गच्छतु। कीदृशः? सुब्रह्मा शोभनस्तुतिकः शोभनान्नोवा "यज्ञः" यष्टव्यः "सुशमी" शोभनकर्मा च भवति; ततः "वसूनां" वासकानां "जनानां" यजमानानां सम्बन्धि "राधः" हविर्लक्षणं धनं "देव" द्योतमान सम्भिक्षति गच्छतितिशेषः॥ २ ॥ १३

---

* ऋ० वे० ५,२,२१,२।      † 'घ्यन्न वारवन्तीयम्'– इति वि०।

॥ वारवन्तीयम् ॥ एनावो३ । औहोहायि । अग्नि

यिन्नामार२३४सा । ऊर्ज्जोनपातमाऊवो२३४हायि । प्रिय

श्चेतिष्ठमरतिꣳसुवध्वा३४ । औहोवा । इहा२३४हायि ।

उऊवा२३४राम् । विश्वस्य । दूतममा३४ । औहोवा ।

इहा२३४हायि । औहो३१२३४ । ताम् । एहियाऽ६

हा ॥(१) विश्वस्यदूऔहोहायि । तामामार२३४र्त्ताम् ।

सयोजार२३४वा । तेअरुषाविश्वभोजा३४ । औहोवा ।

इहा२३४हायि । उऊवा२३४सा । सदुद्र । वात्सुबाह

३४ । औहोवा । इहा२३४हायि । औहो३१२३४ । ताः ।

एहियाऽ६हा ॥(२) समुद्रवाऔहोहायि । स्वबाह्व२३४ताः ।

सुब्राह्मा२३४हायि । यज्ञःसुगमीवसू३४ । औहोवा ।

इहा२३४हायि । उऊवा२३४नाम् । देवꣳरा । धोज

२ ३र ४र ५ १ ३ ५ ३र २

ना३४ । औहोवा । इहा२३४हायि । औहो२१२३४ ।

५ऽ र ५

नाम् । एहियाई२हा(३) ॥ ८ * ॥ [१]

४ र र ४ २ ४

॥ महावामदेव्यम् † ॥ आऽ५यिना । वोआ३आ२यिन्न

५ १ र र र र १ २ १

मसा । ऊ । जोनपातमाङ्कवेप्रियस्त्वेतिष्ठमरतिᳪसुवध्व ।

र २ १ २ ३ र २

राम् । औ२३होहायि । विश्वा२३स्यदू । तमौहो३ ।

१ १ २ ३ ४ २

ऊम्मा२ । माऽ२र्त्तो३५हायि ॥(१) वाऽ५यिश्व । स्यदू३ता

४ ५ १ र र र २र १

३मम्र्तताम् । साः । योजनेश्च कृषाविश्वभोज । सा ।

२ र २ १ २ ३ र २ १

औ३होहायि । सदू२३द्रवात् । सुवौहो३ । ऊम्मा२ ।

१ २ ३ ४ २ ४र ५

ह्ऽ२तो३५हायि ॥(२) सा५ऽदु । द्रवा३त्सू३वाङ्कताः ।

१ र र २र १ र २

ह्व । ब्रह्मायज्ञःसुषमीवसू । नाम् । औ२३होहायि ।

१र र २ ३र २ १ १

देवा२३ᳪराधाः । जनौहो३ । ऊम्मा२ । नाऽ२मो३५

२

हायि ॥ ११ ‡ ॥ [२]

* ऊ० गा० २१प्र० २ख० ८सा० । † 'वामदेव्यम्—इति ख० पु० पाठः ।

‡ ऊ० गा० २१प्र० २ख० ११सा० ।

१ २ र १ २र १र
॥ अध्यम् ॥ एनावोआ२ग्निम्। नमसोवा। ऊर्ज्जो
२१ २ ३र २ १ २ १ २र १ २ १
नपा। तमाहुवायि। प्रियञ्चेतिष्ठमरतिꣳस्वध्वरंविश्व
२ र १ २ १र १
स्यदूतम्। आ२३। मृताउवा। अूधिया२॥(१) वि
१ २ १र २१ २ २ २र १
श्वस्यदू२तम्। अमृतोवा। सयोजते। अरुषावायि।
र २ र १ २ १ २ १र
अभोजसासन्दुद्रवत्सु। आ२३। ऋताउवा। अूधिया
१ र १ २ १ २र १ २
२॥(२) सदुद्रवा२त्सु। आहुतोवा। सुब्रह्मायायि। ज्ञः
३ २ १ र २र र १ र २र १ २
सुम्नमायि। वसूनान्देवꣳराधोज। ना२३। नाउवा।
१र
अूधिया२॥ १४ *॥ [३] १३

अथ द्वितीय-प्रगाथे—

प्रथमा।

१ २ ३ १ १ २ ३ २ ३ २
प्रत्युअदर्श्यायत्यू३च्छन्तीदुहितादिवः।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अपोमहीवृणुतेचक्षुषातमोज्योतिष्कृणोतिसूनरी॥ १ †॥

* ऊ० गा० २१प्र० १अ० १४सा०।

† ऊ० आ० ४, १, २, १ (१भा० ६११ प०)=ऋ० वे० ५, ६, १, १।

"आयती" आगच्छती "उच्छन्ती" तमांसि विवासयन्ती वर्जयन्ती "दिवः" द्युलोकस्य सूर्य्यस्य वा "दुहिता" पुत्री, एवंभूता उषाः "प्रति अदर्शि" सर्वैः प्रति दृश्यते ; "उ"—इति पूरणः ; सैषा "मही" महत् "तमः" नैशमन्धकारं "चक्षुषा" दर्शनेन "अप उ" [—इति निपातद्वय समुदायः अपेत्यस्यार्थे] "वृणुते" निवारयति। एवं कृत्वा "सुनरी" जनानां सुष्ठु नेत्री उषाः "ज्योतिः" प्रकाशं "कृणोति" करोति ॥

"वृणुतेचक्षुषा"-"व्ययतिचक्षुषे"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ २ ३ १ १ ३ १२ २२ ३ १
उदुस्रियाःसृजतेसूर्य्यःसचाउद्यन्नक्षत्रमर्च्चिवत्।

१ २२ ३ २ ३ १ २ ३ २ ३ १ २
तवेदुषोव्युषिसूर्य्यस्यचसम्भक्तेनगमेमहि ॥ २ * ॥ १४ †

"सूर्य्यः" सर्वस्य प्रेरकआदित्यः "उस्रियाः" रश्मीन् "सचा" सह युगपदेव "उत्सृज्यते" उद्गमयति। तथा "उद्यत्" उद्गच्छत् प्रादुर्भवन् "नक्षत्रं" नभसि दृश्यमानं ग्रहनक्षत्रादिकम् "अर्च्चिवत्" दीप्तिमत् करोति ; ["सौरेण तेजसा हि नक्तं चन्द्रप्रभृतीणां नक्षत्राणि भासन्ते", "सुषुम्नः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वः"—इति हि निगमान्तरम्। एवञ्च सति हे "उषः"

* ऋ० वे० ५, ६, १, २। † चतुर्दशसूक्ते यन्नामसामानि दृष्टापितन्नाभान्येव।

उषोदेवते ! "तव" "सूर्यस्य" च "व्युषि" विवासने प्रकाशने सति "अन्तेन" अन्नेन "सङ्गमेमहि" वयं गच्छेमहि। "इत्"-शब्दः पूरकः ॥ २ ॥ १४

२ र र १ २ ३
॥ वारवन्तीयम् ॥ प्रत्युवदाऔहोहायि। श्रीऋायार३४
५ २ र र १ ५ १ र र
तायि। उच्छन्तीदुहितादायिवोर३४हायि। अपोमही
र र २ ३र ४र ५ १ ३ ५ २
वृणुतेचक्षुषातार३४। औहोवा। इहार३४हायि। उज्ज
३ ५ २र १ २ १ ७र २ ३र ४र ५
वार३४माः। ज्योतिष्कृ। णोतिसूना३४। औहोवा।
१ ३ ५ ३र २ ५ र
इहार३४हायि। औहो३१२३४। रायि। एहियाई
५ २र र र १ २ ३ ५
हा ॥(१) ज्योतिष्कृणोऔहोहायि। तायिसूनार३४रा
२ १ ५ १र र र २ ३र
यि। उदूस्रो२३४हा। याःसृजतेसूरियःसा३४। औ
४र ५ १ ३ ५ २ ३ ५ २ १ २
होवा। इहार३४हायि। उज्ज्वार३४चा। उद्यन्न।
१ ७ २ ३र ४र ५ १ ३ ५ ३र २
क्षात्रमर्चा३४। औहोवा। इहार३४हायि। औहो३
५र ५ २ र र १ २
१२३४। वात्। एहियाईहा ॥(२) उद्यन्नक्षाऔहोहा

३ ५ २१ ५ १र
यि। त्वामर्च्चा२३४यिवात्। तवेदू२३४हायि। घोवियु

र २ ३र ४र ५ १ २ ५ २
षिसूरियस्या३४। औहोवा। इहा२३४हायि। उक्

३ ५ २ १ २र १ ० र २ ३र ४र ५ १
वा२३४चा। सम्भक्तो। नागमेमा२३४। औहोवा। इ

३ ५ ३र २ ५र
हा२३४ हायि। औहो ३१२३४। हायि। एहिया६

५
हा(३) ॥ ८ * ॥ [१]

२ ४ २ ४र ५ १
॥ वामदेव्यम् ॥ प्रा ऽ५त्यु। अदा३र्शा३आयताायि। ऊ।

र र र र र र २र१ २
च्छन्तीदुहितादिवोअपोमहीवृणुतेचक्षुषात। मा। औ३

र २ १र २ ३ र २ १
होहायि। ज्योता२३यिष्कृणों। तिसौहो३। ऊम्मा

१ २ ३ ४ २
२। ना ऽ२रो३५हायि ॥(१) ज्यो ऽ५तिः। कृणो३ता३यि

४र ५ १ र रर २ १ २
सूनरायि। ऊत्। उस्रियाःसृजतेसूरियस्साचा। औ

र २ १ २ ३ र २ १
३होहायि। उद्या२३न्नक्षा। त्रमौहो३। ऊम्मा२।

१ २ ३ ४ २ ४ ५
चा ऽ२यिवो३५हायि ॥(२) ऊ ऽ५द्यत्। नक्षा३त्रा३मर्चिवात्।

---

* ऊ० गा० २१प्र० २अ० ८सा०।

१ २ २ २ १ १ २ २ २
ता। वेऊषोवियुषिस्रियस्य। चा। औ३होहायि।
१ २ २ २ २ २ १ १
सम्भा२३क्ता। गमौहो३। ऊम्मा२। मा॥२हो३५
२
हायि(३) ॥ १२ * ॥ [२]

१ २ १ २ १
॥ अध्यम् ॥ प्रत्युवदा२र्शि। आयतौवा। उच्छ
२२ १ २ २२ २ १ २ २ १२ २२ १ १२१ १२ १२
न्तोहू। हिताद्दिवाः। अपोमहोवृणुतेचक्षुषातमोज्यो
१ २ १ २ १२
तिष्कृणोति। सू२३। नराउवा। अूधिया२॥(१)
१२ २ १ २१ २ १ १ २ १२
ज्योतिष्कृणो२ति। सूनरोवा। उदुस्रियाः। सृजत
१ २२ १ २१ २
सू। रियःसचाउद्यन्नच्चनम्। आ२३। विवाउवा।
१२ १ १ २१२ २१
अूधिया२॥ उद्यन्नचा२त्रम्। अर्चिवोवा। तवेदुषो।
२ ३२ २१ २ १ २२ १ २
वियुषिसू। रियस्थचसम्भक्तेनग। मा२३यि। महाउ
१२
वा। अूधिया२(३) ॥ १५ † ॥ [३] १४

* ऊ० गा० २१प्र० २ख० १४सा०।

† ऊ० गा० २१प्र० २ख० १५ सा०।

अथ तृतीये प्रपाठे—

प्रथमा ।

२ १ २ ३ १ २ २ १ १
इमाउवान्दिविष्टयउस्राहवन्त अश्विना ।
२ १ २ ३ १ २ ३ १ २ ३ १र २र
अयंवामह्वेवसेशचीवसूविशंविश ँहिगच्छथः ॥ १ * ॥

"इमाः" "दिविष्टयः" दिवमिच्छन्त्यः प्रजा ऋत्विजोऽपि "उ"—इति चार्थे ; हे "अश्विना !" "उस्रा" वासकौ उस्रौ वा "हवन्ते" आह्वयन्ति "अयं" स्तोतापि हे "शचीवसो" कर्म्मधन ! "वां" युवाम् "अवसे" अस्मद्रक्षणाय युवयोस्तर्पणाय वा "अह्वे" आह्वयामि । किमर्थम् ? एवं प्रजा अपि, अयमपीत्यादरोक्तिरिति "विशं विशं हि गच्छथः" सर्वाः स्तुतिकर्त्रीः प्रजाः प्रति युवां गच्छतः खलु, तस्मादेवमुच्यत इति ॥ १ ॥

अथ द्वितीया ।

२ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
युवञ्चित्रन्ददथुर्भोजनन्नराचोदेथा ँसूनृतावते ।
२ ३उ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
अर्वाग्रथ ँसमनसानियच्छतम्पिबत ँसोम्यम्मधु॥२†॥१५‡

* ऋ० आ० ४, १, १, २ ( १भा० ६१३पृ० )=ऋ० वे० ५, ५, २१, १ ।

† ऋ० वे० ५, ५, २१, २ । ‡ त्रयोदश-चतुर्द्दशखण्डयोर्यन्नामानि सामानि इहापि तन्नामान्येव ।

हे "नरा" नेतारावश्विनौ ! "युवं" युवां "चित्र" चायनीयं "भोजनं" धनं "ददथुः" धारयेथे, तद्धनं "सूनृतावते" स्तुतिमते स्तोत्रे "चोदेथां" प्रेरयतम्,* तदर्थं "समनसा" समानमनस्कौ सन्तौ "रथं" युवयोः सम्बन्धिनम् "अर्वाग्" अस्मदभिमुखं "नियच्छतं" नियमतम्, तथा कृत्वा "सोम्यं" सोमसम्बन्धिनं "मधु" मधुरसञ्च † "पिबतम्" ॥ २ ॥ १५

२र र र १ २ ३
॥ वारवन्तीयम् ॥ इमाउवाऔहोहायि । हायिविष्टार
५ २ र १ ५ १ २ र
२३४या: । उत्नाहवन्तेअश्वायिनो२३४हायि । अयंवामश्वे
र र २ २र ४र ५ १ ३ ५ २
अवसेश्वचीवा३४ । औहोवा । इहा२३४हायि । उत्व
२ ५ २ १ २ १ ७ २ ३र ४र ५
वा२३४सू । विशंवि । शा२ह्विगच्छा३४ । औहोवा ।
१ ३ ५ ३र २ ५र ५
इहा२३४हायि । औहो३१२३४ । था: । एहियाइहा ॥(१)
२ र र १ २ ३ ५ १ २
विशंविशाऔहोहायि । हायिगच्छा२३४था: । युवाम्वा

---

* 'चोदेथां सूनृतावते—एवं चोदनां कुरुतां यथा सूनृता वयं भवेम !'—इति वि० ।

† 'सोम्यं मधु—सोमे भवं स्वादुद्रव्यम्'—इति वि० । "मये च (४, ४, १३८)—इति पा० । "सोमशब्दाद्यः स्यान्मयडर्थे । सोम्यं मधु सोममयमित्यर्थः ॥"—इति च तत्र दीक्षितः ।

२३४यिहायि। चन्दइयुर्भोजनन्ता३४। औहोवा। इहा
२३४हायि। उक्तवा२३४रा। चोदेथाम्। इन्नृतावा३४।
औहोवा। इहा२३४हायि। औहो३१२३४। नायि। एहि
याईहा॥(२) चोदेथा॰सूऔहौहायि। नाक्तोवा२३४तायि।
अर्वाग्मा२३४हा। थ॰समनसानियच्छा३४। औहोवा।
इहा२३४हायि। उक्तवा२३४ताम्। पिबतम्। सौमि
यम्मा३४। औहोवा। इहा२३४हायि। औहो३१२३
४। धू। एहिया६हा। होप्रई। डा(३)॥१०*॥[१]

॥ वामदेव्यम्॥ आऽ५यिमाः। उवा३न्दा३यिविष्टयाः।
ऊ। ह्वाहवन्तेअश्विनाअयंवामक्के अवसेशचीव। हु।
औ३होहायि। विशा२३ँविशाम्। हिगौहो३। ऊम्मा
२। क्वाऽ२थाँ३५हायि॥(१) वाऽ५यिशाम्। विशा३॰

* ऊ० गा० २१प्र० २ख० १०सा०।

२ ४ ५ १ २ २ १
हाऽ३यिगच्छथाः। यू। वश्विन्नन्ददयुर्भोजनन्न। रा।
२ २ २ १२ २ २ २ २ २ १
औ३होवाायि। चोदे२३थाॅसू। नृतौहो३। ऊम्मा
१ २ २ २ ४ १
२। वाऽ२तो३५वाायि॥(२) चोऽ५दे। थाॅसू३ना३
४२ ५ १ २ २ २ १
त्तोवताायि। आ। वांग्रथॅसमनसानियच्छ। ताम्।
२ २ १ २ ३ २ २ १
औ२३होवाायि। पिबा२३तॅसो। मियौहो३। ऊम्मा
१ २
२। मा२धो३५वाायि३)॥ १२ *॥ [२]

१ २ १ २ १२
॥ अध्यम्॥ इमाउवा२न्दि। विष्टयोवा। उस्रा
२ १ १२ ३ २ १ २ १२ २ १२ २१ २ २२ १ २
हवा। तेअश्विना। अयवामक्केवसेशचीवस्वविशंविशॅ
१ २ १२ १
हि। गा२३। च्छथाउ। वा। अृधिया२॥(१) वि
१ १ १ २ १ १ २ २ १
शंविशा२ॅहि। गच्छथोवा। युवश्विनाम्। ददथुर्भो।
२ २ १२ २ २२ २ १ २ १२
जनन्नराचोदेथाॅसून्। ता२३। वतावा। अृधिया
१२ २ २ २ १ २ १२ २ १
२॥(२) चोदेथाॅसू२न्। तावतोवा। अर्वाग्रथाम्।

---

* ऊ० गा० २१प्र० २अ० १२सा०।

२ ३ २ १    २   १ २ र १    २
समनसा। नियच्छतम्पिबतꣳसोमि। या२३म्। मधा
   १र    १   २    १
उवा। ऊधिया२। ए२३हियाँ ३४३। औ२३४५ई।
डा॥ १६ *॥ [३] १५

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य
चतुर्थः खण्डः† ॥ ४ ॥

---

अथ पञ्चम-खण्डे ‡—

अस्यप्रत्नेति नवर्चंसूक्तं, प्रथमा।

२ १ २ २उ   २ १ २   ३ १ २   २ १ २
अस्यप्रत्नामनुद्युतꣳशुक्रन्दुदुह्रे अह्रयः।
१ २   ३ १र   २र
पयःसहस्रसामृषिम्॥ १ ¶ ॥

"अस्य" सोमस्य "प्रत्नां" पुरातनां "द्युतं" द्योतमानां तनुम् "अनु" "शुक्रं" दीप्तं "सहस्रसां" अभिलषितस्यापरि०

---

* ऊ० गा० १प्र० २अ० १६सा०।

† 'समाप्ता सन्धिः। अथ षोड़शिकोऽतिरात्रो ब्राह्मण-समाम्नायेऽथ ऋक्समाम्नाये न तथा कल्पकारः कल्पसो ज्योतिष्टोमोऽतिरात्रः षोड़शिकः। तथा च लक्षणकारः—अतिरात्रो ०००'—इति वि०।

‡ 'इदानीं द्वादशाहस्य प्रथममहस्तस्य बहिष्पवमानम्'—इति वि०।

¶ य० वा० २, १६=ऋ० वे० ७, १, ९, १।

मितस्य फलस्य दातारम् "ऋषिम्" अतीन्द्रियकर्मफल-द्रष्टारं "पयः" पातव्यं * "अह्रयः" कवयः † "दुह्रे" दुहन्ति ‡ ॥ १ ॥

---

* 'पयः—क्षीरम्'—इति वि०।

† 'अह्रयः—अह्रीकाराः'—इति वि०।

‡ अत्र महीधरः—"गायत्र्यवत्सारदृष्टा गोऽग्निपयोदेवत्या। अस्याग्नेः प्रत्नां चिरन्तनकालभवां द्युतमनु दीप्तिमनुलक्ष्य। अह्रयः नास्ति ह्रीर्येषामीदृशा लज्जारहिता दोग्धारः ऋषिं गां शुक्रं शुद्धं पयो दुदुह्रे दुदुहिरे। दुहेर्लिटि इरयो रे इति रे आदेशे रूपम्। ऋष गतौ। अर्षति दोहनस्थाने गच्छतीति ऋषिर्गाः। तां होमार्थं दुग्धवन्तः। सायं दोहनकालेऽग्निप्रकाशाभावे दुह्यमानं पयो भूमौ पतिष्यतीति शङ्कया दोग्धॄणां लज्जा भवति। सत्यामग्निदीप्तौ स्कन्दशङ्काभावाल्लज्जाभावादह्रयो दोग्धारः। किम्भूतामृषिं सहस्रसाम्। षोऽन्तकर्मणि। सहस्रसङ्ख्याकानि कर्माणि स्यति समापयति क्षीरदध्याज्यहविःप्रदानेनेति सहस्रसा ताम्। स्यतेः क्विप्। तद्वाख्या ऋचोऽर्थान्तरम्। गामङ्गत्याग्निहोत्रब्राह्मणे श्रूयते। तामु हाग्निरभिदध्यौ मिथुन्येनया स्यामिति तां सम्बभूव तस्यां रेतः प्रासिञ्चत्तत्पयोऽभवदित्यादि (२,२,४,१५)। तदभिप्रायमेषा ऋग्वदति। अह्रयः गावः नास्ति ह्रीर्लज्जा यासां ता अह्रयः अलज्जा उज्ज्वलाः प्रशस्ता इत्यर्थः। मलिनो हि लज्जते। अह्रयो गावोऽस्याग्नेः प्रत्नां चिरन्तनीमात्मानुषक्तां द्युतं दीप्तिं शुक्रं शुक्ररूपापन्नां द्युतमेव पयो दुग्धं दुदुह्रे दुहन्ति क्षरन्ति। अग्निना शुक्ररूपेण सिक्तां स्वकान्तिमेव गावो दुग्धरूपेण क्षरन्तीत्यर्थः। सहस्रसामृषिमिति विशेषणद्वयं पयसः। सहस्रं सनोति सहस्रसास्तम्। चातुर्मास्यपशुसोमानां सम्भक्तारम्। पुंस्त्वमार्षम्। जनसनखनक्रमगमो विडिति विट्प्रत्यये विड्वनोरनुनासिकस्यादित्याकारे वेर्लोपे सहस्रसा इति रूपम्। तथा ऋषिं द्रष्टारम्। गवि वर्त्तमानं द्रष्टृत्वं पयस्युपचर्यते। ता हैनानुदीक्ष्य हिङ्कारेत्युपक्रम्य ते देवा विदाञ्चक्रुरेष साम्नो हिङ्कार इत्यादिना ग्रन्थेन गोभिर्हिङ्कारो दृष्ट इति प्रत्यपादि। यद्वा सहस्रसामृषिमिति विभक्तिलिङ्गवचनव्यत्ययेन अह्रय इत्यस्य विशेषणद्वयम्। किम्भूता अह्रयः सहस्रसाः ऋषयः। पूर्ववदर्थो वा"—इति ॥

अथ द्वितीया।

२ १ २ १र ३ २ ३ १र २र
अयꣳसूर्यइवोपदृगयꣳसराꣳसिधावति।

३ २३ २र३ १र २र
सप्तप्रवतआदिवम् ॥ २* ॥

"अयं" सोमः "सूर्य इव" यथा सूर्यः सर्वस्य लोकस्योपद्रष्टा, तथा कर्म्मणाम् "उपदृक्" उपद्रष्टा; अपिच "अयं" सोमः "सरांसि" त्रिंशत् उक्थपात्राणि [—इति केचिद् वदन्ति, अपरेतु त्रिंशदहोरात्राणि सरांसीति], तानि "धावति" प्रति गच्छति [तथाच यास्कः—"तद्यदेतद् याज्ञिका वेदयन्ते त्रिंशदुक्थ-पात्राणि, माध्यन्दिने सवने एकदेवतानि, तान्येतस्मिन् काल एकेन प्रतिधानेन पिबन्ति, तान्यत्र सरांस्युच्यन्ते—त्रिंशद-परपक्षस्याहोरात्राः त्रिंशत् पूर्वपक्षस्येति नैरुक्ताः (५, ११) इति †]। अपिचायं सोमः "दिवम्" अधिकृत्य "सप्त प्रवत" सप्त नदीरातिष्ठति‡ ॥ २ ॥

---

* ऋ० वे० ७, १, २, २।

† "तद्या एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति। तथापि निगमो भवति। यमक्षितिमक्षितयः पिबन्तीति तं पूर्वपक्ष आप्याययन्ति। तथापि निगमो भवति। यथा देवा अंशुमाप्याययन्तीति"—इति च तच्छिष्टांशः।

‡ 'सप्त प्रवत—सप्त लोकान् प्रवत। अथवा सप्त छन्दांसि'—इति वि०।

अथ तृतीया।

३ १र २र १ १र २र ३ १ २
अयंविश्वानितिष्ठतिपुनानोभुवनोपरि।

१ २ ३ १र २र
सोमोदेवोनसूर्यः॥ ३*॥ १६ †

"पुनानः" पूयमानः "अयं" "सोमः" "विश्वानि" सर्वाणि "भुवना" भुवनानि सर्वेषां भुवनानाम् "उपरि" "तिष्ठति"। तत्र दृष्टान्तमाह—"देवो न सूर्यः" यथा सूर्यो देवः सर्वेषां भुवनानामुपरि तिष्ठति तद्वदयं सोमोऽपीत्यर्थः॥ ३॥ १६

३ २ र
॥ सत्रासाहीयम्॥ अयाऽ२३। पुनानमनुद्युतम्।

५ ५ १ र १ १
ओ६वा। प्राक्रन्दुदुहेअद्वा२र्याः। पा२र्याः। सा२३

२ १ ऽ २र २र २ १ ५ ५
हा। ससौ२हो वाहा३४३यि। आ२३४र्षो६हायि॥

३ २ र र ५ ५ १
(१) अया२३४म्। सूर्य्यइवोपहक्। ओ६वा। अयं

र र १ १ १ १ ऽ
सरा२सिधावा२ताथि। सा२त्ता। प्रा२३वा। तओ

२र २र २ १ ५ ५ ३ २
३हो। वाहा३४३यि। दा२३४यिवो६हायि॥(२) अया

* ऋ० वे० ७, १, २, ३।

† मूलेत्येतदन्त मेव षोड़शं सूक्तम्, विवरणादि-मतेप्येवमेव। 'उक्तः प्रथमपर्यायः'—इति वि०।

र ५ ५ १ र र र
३४म्। विश्वानितिष्ठति। ओ६वा। पुनानोभुवनो

१ १ २ १ ८ २र ३र
पा२राथि। सो२मो। दा२३यिवाः। नसौ३हो। वा

२ १ ५ ५
हा३४३यि। रा२३४योई३हायि(३)॥ ९ *॥ [१]

५ २ ४र ५ २
॥ आमहीयवम्॥ अस्यप्रा३त्नामनुद्युताम्। प्रुउ

१ २ १र २ १ ११
क्रान्दू१हू२। ह्रे आ२३ह्रयाः। पयःसहा। स्वसा२३

२ ५ २ ४ ५र २ १ २
मृषाउ। वा३॥(१) अयꣳसू३र्य्यइवोपहक्। अयꣳसा

१ २ १२१ २
१रा२। सिधा२३वतायि। सप्तप्रवा। तआ२३दिवाउ।

५ २ ४र ५ २ १ २ १
वा३॥(२) अयंवा३यिश्वानितिष्ठतायि। पुनानो१भू२। व

२ र १र२र१ २
नोर३परायि। सोमोदेवाः। नसू२३रियाउ। वा३।

२र १११११
स्तोभे३४५ (३)॥ ३ †॥ [२]

२ १ २ १ २ १
॥ जराबोधीयम्॥ अस्यप्रत्नोवा। आनुद्युताम्।

२ १ २ र २ ४ ५र ३ २
प्रुउक्रान्दू२३हू। ह्रे याःसा१हा२३स्ना। साम्। स्वृषो२

* ऊ० गा० ८प्र० १ख० ८सा०। † ऊ० गा० ८प्र० २ख० ३सा०।

२ २ १ २ १ २ २ १
४५ई। डा ॥(१) अयꣳसूर्य्योवा। आयिवोपदृक्।
२ १ २ २ १ २ ४
अयाꣳसार२३रा। सिधावातायि। सप्तप्रा१वार२३ताः।
५२ ३ २ २ १ २ १
आ। दिवो३४५ई। डा ॥(२) अयंविश्वोवा। नायि
२ १ २ १ २ २ १ २ २
तिष्ठतायि पुनानो२३भू। वनोपारायि। सोम्योदा१
४ ५२ ३ २ स १
यिवार२३ना। सू। रियो३४५ई। डा(३) ॥ १० ]
२२ २ १
॥ हाविश्वतम ॥ हावस्यप्रत्नामनुद्युतꣳहाउ। शुक्र
२ १ २ ३ ५ २ २ १
न्दुदु३। कअह्रा२३४याः। ऐ२हो१आ२३यिही। प
२ २ १२ ३ ५२ २ २२
याःसा२हा। ससाम। आ२र्षी२३४औहोवा ॥(१) हा
२ २ १ २ १ २ ३
वयꣳसूर्य्यइवोपदृग्घाउ। अयꣳसरा२। सायिधावार३
५ २ १ २ २ १२
४तायि। ऐ२हो१आ२३यिही। सप्तप्रा२वा। तआ।
३ ५२ २ २२ २
दार्यिवा२३४औहोवा ॥(२) हावयंविश्वानितिष्ठतिहाउ।
२२ २ २ १ २ २ ५ २
पुमानोभू३। वानोपार२३४रायि। ऐ२हो१आर२३यिही।

* ऋ० गा० ९प्र० २अ० १०सा०।

१र  २  २  १र  ३  ५र र  २ १
सोमोदाश्यिवाः । नद्व । रा२्या२३४औहोवा । ह्वि
२ १ १ १ १ १
ग्नते२३४५ ॥ ८ * ॥ [४]

२ १ २ १र  २  २
॥ आप्तभार्गवम् ॥ अस्यप्रत्नाम । नुद्यू३ताम् ।
१  २  १  ३  ५  १  २
प्रुक्रन्दुदू३ । हे आ२र्हा२३४याः । पयाःसा१्हा२र् ।
१ २  १  ५ ५  २ १  र  २र
स्रसा३म् । आ२३४पीई्हायि ॥(१) अयथ्व्ह्व्र्प्यः । द्रवो
२  १  २  १  ३  ५  १
पा३हक् । आयथ्सरा३ । सायिधा२र्वा२३४तायि । स
२  २ २  १  ५ ५  २ १
प्ताप्रा१वा२ । तआ३ । दा२३४यिवोई्हायि ॥(२) अग्र्
र  २  २  १ र र २  १  २
विश्वानि । तिष्ठा३तायि । पूनानोमू३ । वानो२्पा२३
५  १र  २  ३ २  १  ५ ५
४रायि । सोमोदा१्यिवा२ः । नद्व३ । रा२३४योई्हा
यि ॥ १८ † ॥ [५]

२ र १ २  १  २
॥ मार्गीयवाद्यम् ॥ अस्यौहोवा । प्रात्ना२र्म् । अ
२ ३  ५  २ १  २  र १ २  १
नूद्यू२३४ताम् । प्रुक्रन्दुदू । हे आ्हा१्या२ः । पयः ।

---

* ऊ० गा० ११प्र० २ख० ८सा० ।   † ऊ० गा० १४प्र० १ख० १८सा० ।

हा । औ३होयि । सा२३४हा । सा२सा२३४औहो
वा । ए३ । ऋषा२३४५यिम् ॥(१) अयौहोवा । सू
र्य्या२ः । द्रुवोपा२३४हक् । अयꣳसरा । सिधावा१ता२
यि । सप्त । हा । औ३होयि । प्रा२३४वा । ता२आ
२३४औहोवा । ए३ । दिवा२३४५म् ॥(२) औयौहोवा ।
वायिश्वा२ । नितायिष्ठा२३४ताथि । पुनानोभु । वनो
पा१रा२यि । सोमः । हा । औ३होयि । दा२३४यि
वाः । ना२स२३४औहोवा । ए३ । रिया२३
४५ः(३) ॥ २० * ॥ [६]

॥ सौभित्रम् ॥ अस्यप्रत्नामनुद्युता३मे । पुक्रन्दु
दुह्रे । आ२१ऽ२३ । ह्रया३४३ः । पा२३याः । सहा
२ओ२३ । स्रसोवा । आ५पीर्ईहायि ॥(१) अयꣳसूर्य्यं

* ऊ० गा० १४प्र० १ख० २०सा० ।

द्वोपहृ३गो । अयꣳसराꣳसि । धा२१ऽ२३ । वना३४
३यि । सा२३मा । प्रवा२औ२३ । तऔवा । दा५यिवौ
६हायि ॥(२) अयंविश्वानितिष्ठता३ए । पुनानोभुव ।
नो२१ऽ२३ । परा३४३यि । सो२३माः । देवा२औ२
३। नसोवा । रा५योऽ६हायि(३) ॥ १ * ॥ [७]

॥ ऐटतम् ॥ अस्य । एआस्या । प्रत्नाम । नू३ ।
आ२नू२३४औहोवा । द्यू२३४ताम् । शुक्रान्दू२३४दू ।
हृ आ३ । हृ२आ२३४औहोवा । हा२३४याः । पयाः
सा२३४हा । सहसा३ । सा२सा२३४औहोवा । आ२३
४र्षीम् ॥(१) अयम् । एआयाम् । सूर्यइ । वा३ ।
आरयिवा२३४औहोवा । पा२३४हक् । अयाꣳसा२३४

* ऊ० गा० १४प्र० २ख० १सा० ।

५ ३२ १ ३ ५र र ३ ५
रा। सिधा३। सा२यिधा२३४औहोवा। वा२३४ती।
२ ३ ५ ३२ १ ३ ५र र २
सम्नाप्रा२३४वा। तश्रा३। ता२श्रा२३४औहोवा। दी
५ १२ १ २ र
२३४वाम् ॥(२) अयम्। एश्रायाम्। विश्वानि। ता
१ ३ ५र र ३ ५ २ ३
३यि। ना२यिता२३४औहोवा। ष्ठा२३४ती। पुनानो
५ ३२ १ ३ ५र र ३ ५
२३४भू। वनो३। वा२नो२३४औहोवा। पा२३४री।
२र २ ५ ३१ १ ३ ५र र
सोमोदा२३४यिवाः। नस्३। ना२स्२३४औहोवा।
३ ५
री२३४याः ॥ २ * ॥ [८]

१ २ ५ २
॥ धुरासाकमश्वम् ॥ अस्यप्रत्ना३म्। हौ३हो३१यि।
२ ५ २ २ ५ २
अनुद्युता३म्। हौ३हो३१यि। शुक्रन्दुदू३। हौ३हो
र २ ५ २ २ ५
३१। हे अहुयाः३। हौ३हो३१यि। पयःसहा३। हौ
२ र २ ५ २
३हो३१। स्सामृषा३यिम्। हौ३हो३१२३४५ई। डा ॥(१)

---

* ऊ० गा० १४प्र० १ख० २सा०।

अयꣳसूर्य्याँ३ः । हौ३हो३१यि । इवोपदृ३क् । हौ३हो
३१ । यि । अयꣳसरा३ । हौ३हो३१ । सिधावता३
यि । अयꣳसराꣳसिधा । हा३हा३यि । वा२३४ता
यि । साम्रा३उवा३ । प्रा२वा२३४औहोवा । तआर्दि
यि । हौ३हो३१यि । सप्तप्रवा३ । हौ३हो३१ । तआ
दिवा३म् । हौ३हो३१२३४५ई । डा ॥(२) अयंविश्वा३ ।
हौ३हो३१ । नितिष्ठता३यि । हौ३होयि । पुनानोभू
३ । हौ३हो३१ । वनोपरा३यि । हौ३हो३१यि । सो
मोदेवा३ः । हौ३हो३१ । नसू्रिया३ः । हौ३हो३१२
३४५ई । डा ॥ ३ * ॥ [९]

॥ विलम्बसौपर्णम् ॥ अस्यप्रत्नामनुद्युतम् । ईयइ
याहायि । प्राक्रन्दुदुह्रेआं । हा३ हा३ । ह्रा २ ३ ४

* ऊ० गा० १४प्र० २ख० ३सा० ।

५ १ २ २ १ ३ ५र र २ र
याः । पाया३उवा३ । सा२हा२३४औहोवा । स्वसान्दि

३ १ १ १ १ १ २ १ र २ र १ २ १ २
षा२३४५यिम् ॥(१) अयᳯसूर्य्यइवोपदृक् । ईयद्दयाहा

४ २ ४र ५ र २ २ १ ५
यि । अयᳯसराᳯसिधा । हा३हा३यि । वा२३४तायि ।

५ २ २ १ ३ ५र र २ र
साम्रा३ उवा ३ । प्रा२वा२३४औहोवा । तन्नादि

३ १ १ १ १ १ २ १ र २ १ २ १ २
वा२३४५म् ॥(२) अयंविश्वानितिष्ठति । ईयद्दयाहायि ।

४ र ४र ४ ५र २ २ १ ५ १ २
पुनानोभुवनो । हा३हा३यि । पा२३४रायि । सोमा३

२ १ ३ ५र र २ र ३
उवा ३ । दा२यिवा२३४औहोवा । नसूरिया२३

४५ः ॥ ४* ॥ [१०] १६

अथ चतुर्थी† ।

३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
एषप्रत्नेनजन्मनादेवोदेवेभ्यःसुतः ।

१ २ ३ १ २
हरिःपवित्रेअर्षति ॥ १‡ ॥

---

* ऊ० गा० १४प्रा० २अ० ४सा० ।

† सूक्तेयं चतुर्दशसूक्तस्य प्रथमा, विवरणादि-मतेष्वेवमेव । तथैवानीकरत बोध्यम् ।

‡ इयमत्रैव पुनः श्रोष्यमाणा पञ्चम-द्वितीय-द्वितीय-नवमे । ऋ० वे० ९, ७, २१, ४ ।

"हरिः" हरितवर्णः "देवः" द्योतमानः "एषः" सोमः "प्रत्नेन" पुराणेन "जन्मना" जननेन * "देवेभ्यः" देवार्थं "सुतः" अभिषुतः सन् "पवित्रे" "अर्षति" आरोचते ॥ ४ ॥

अथ पञ्चमी ।

२ ३ १ २ ३ १ २   ३ २ ३ २ ३ १ २

एषप्रत्नेनमन्मनादेवोदेवेभ्यस्परि ।

३ १र २र

कविर्विप्रेणवावृधे ॥ २ ॥

"प्रत्नेन" पुराणेन "मन्मना" साधनेन स्तोत्रेण युक्त इति शेषः † "देवः" द्योतमानः "एषः" सोमः "देवेभ्यः" देवार्थं "कविः" मेधावी सन् "विप्रेण" मेधाविना यजमानेन ऋत्विजा "परिवावृधे" परिवर्द्धते ॥ ५ ॥

अथ षष्ठी‡ ।

३ २ ३ १र   २र ३ ३ ३ १ २

दुहानःप्रत्नमित्पयःपवित्रे परिषिच्यसे ।

१ २ ३ १ २

क्रन्दन्देवाँ अजीजनः ॥ ३ ¶ ॥ १७

---

* 'जन्मना—कर्मणा, नाम्ना वा'—इति वि० ।

† 'मन्मना—मन्म बलमभिधीयते, बलेन'—इति वि० ।

‡ मूले त्वेतदन्तमेव सप्तदशं सूक्तम्, विवरणादि-मतेऽप्येवमेव ।

¶ ऋ० वे० ६, ८, १२, ४ ।

"प्रत्नमित्" पुराणमेव "पयः" रसं * "दुहानः" हे सोम! पवित्रे परिषिच्यसे। हे सोम! त्वं "क्रन्दन्" शब्दं कुर्वन् "देवान्" इन्द्रादीन् "अजीजनः" स्वसमीपे जनयति। यत्र सोमोऽभिषुते तत्र देवा नियतं प्रादुर्भवन्तीत्यर्थः॥

"अजीजनः"-"अजीजनत्"—इति पाठौ †॥ ६॥ १७

अथ सप्तमी ‡।

१ २      २ १ २ ३ २ ३ १ २ ३ १ २

उपशिक्षापतस्थुषोभियसमाधेहिशत्रवे।

१ २      ३ २ ३ २

पवमानविदारयिम्॥ १ ¶॥

हे "पवमान" सोम! "उपशिक्ष" त्वं समीपे कुरु। कान्? "उपतस्थुषः" उपक्रम्य स्थितानस्मदभिमतानित्यर्थः। "शत्रवे" शत्रुषु अस्मद्विरोधिषु "भियसं" भयम् "आधेहि" कुरु जय। किञ्च तेषां शत्रूणां "रयिं" धनं "विदाः" § अस्मभ्यं विद्धि देहीत्यर्थः॥ ७॥

* 'पयः—स्वादु-द्रव्यम्, अथवा पय उदकं क्षीरं वा'—इति वि०।

† "षिच्यसे"-"षिच्यते"—इत्यपि पाठभेदः।

‡ मूले त्रियमष्टादशसूक्तस्य प्रथमा, विवरणादिमतेऽप्येव मेव। तथैवाग्रोत्तरत्र बोध्यम्।

¶ ऋ० वे० ६, ८, ९, ५।

§ 'विद्ज्ञाने, विद्लृलाभे, विदसत्तायामित्यस्येदं रूपम्'—इति वि०।

अथ अष्टमी-नवम्योर्ऋचोः प्रतीकमेव माम्नातम्—"उपोषु-जातमप्तुरम्"—इति, "उपास्मैगायतानरः"—इति च॥

तेष्वष्टमी प्रदेशान्तरे* आम्नाता—

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २र

उपोषुजातमप्तुरं(गोभिर्भङ्गम्परिष्कृतम्।

१ २ ३ १ २

इन्दुन्देवाअयासिषुः)॥ २ †॥

"जातं" सम्यक् प्रादुर्भूतम् "अप्तुरम्" वसतीवरीभिः अद्भिः प्रेरितं "भङ्ग" शत्रूणां भञ्जकं "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतं संस्कृतम् "इन्दुं" सोमं "देवाः" इन्द्रादयः "उप उ"—इति निपातद्वयसमुदायः उपेत्यस्यार्थे वर्त्तते सुष्ठु "उप अयासिषुः" उपागच्छन्ति॥ ८॥

नवमीत्वेव मन्त्रआम्नाता‡—

१ २ ३ १२ ३ १ २

उपास्मैगायतानरः(पवमानायेन्दवे।

३ २ ३ १ २र

अभिदेवाँइयक्षते)॥ ३ ¶॥ १८

---

* अत्रैव पञ्चमे इति बोध्यम्। परन्तासर्थमेतत्—भविष्यत्पाठस्य पूर्वम्प्रतीक-ग्रहणमिति।

† छ० आ० ६, १, १, १ (२भा० ४३ पृ०)—अत्रैव ५, २, १०, १—ऋ० वे० ७, १, २०, ३।

‡ उत्तराग्रन्थारम्भ एव।

¶ अत्रैव १, १, १, १ (२भा० ४पृ०)—ऋ० वे० ६, ७, २९, १।

हे "नरः" नेतारः! यज्ञस्य "देवान्" इन्द्रादीन् "अभि इयक्षते" आभिमुख्येन यष्टुमिच्छते यजमानाय चरते "अस्मै" अभिपूयमानाय "इन्दवे" सोमाय "उप गायत" उपगानं कुरुत ॥ ९ ॥ १८

१ र १ २र १
॥ अध्यम् ॥ उपोषुजा२तम्। अप्तुरोवा। गोभि
२ १ २ ३ २ १ २र १र ३
र्भङ्गाम्। परिष्कृताम्। इन्दुन्देवाअ। या२३। सि
२ १र १ २र १
षाउवा। ऊधिया२ ॥(१) तमिद्वर्द्धा२न्तु। नोगिरो
२ १ २ १ १ ३र २ १ २ १
वा। वत्सꣳसꣳशायि। श्वरीरिवा। यइन्द्रस्यहृ। दा
२ १र १ र
२३म्। सनाउवा। ऊधिया२ ॥(२) अर्षानःसो२म।
१ २ १ २ १ २ ३र २ १ र १
शङ्गवोवा। धुक्षस्वपायि। प्युषीमिषाम्। वर्द्धासमु
१ २ १र २
द्रम्। ऊ२३। क्थियाउवा। ऊधियार। ए२३ह्विया
१
३४३। ओ२३४५ई। डा॥ ५ * ॥ [१]

१ र २ र
॥ प्रतीचीनेडङ्काभ्रौ ॥ उपोषुजातम्। आ२प्तु,

* ऊ० गा० ६प्र० २अ० ५सा०।

१ २ १ ७ ३र २
राम्। गोभिर्भङ्गम्। परायिष्कृता२३४म्। हाहो
१ र २ २ १ ४ ५
यि। इन्दुन्देवाआ३या। सिषू। औ२३होवा॥(१)
१ २ १ २ १
तमिदर्द्धन्तु। नोरगिराः। वात्सꣳसꣳशि। श्वरायि
७ ३र२ १ २ २ १
रिवा२३४। हाहोयि। यइन्द्रस्याहा२हीम्। सनायिः।
४ ५ १ र र र १
औ२३होवा॥(२) अर्षानःसोम। शारङ्कवायि। धू
२ १ ७ ३र२ १र २
त्तखपि। प्युषायिमिषा२३४म्। हाहोयि। वर्द्धास मूद्रा
२ १ २ ४५ ४५
३मू। क्रियगा। औ३होवा। ईडा(३)॥११॥[२]
४३ र ४ २ ४र ५
॥ यज्ञायज्ञीयम्॥ उपाऽ५स्मै। गा३या३तानाराः।
२ १ २ २ १ २ १ २ २
पा३वामा३ना। या२३आ। ऊम्मायि। दा३वायि।
१ रर ३२ १ २ १र २
आभिदेवाꣳइयार्२त्तताउ॥ ते(१)आ। भितेमा। धूइ
१ २ २ १ १र र २ १
नापा३याः। आथार्वा। णोआ२३आ। ऊम्मायि।
२ २ १ र र ३२ १ २ १
आ३यूः। दायिवन्देवायदा२यिवयाउ॥ यू(२)साः। नः

* ज० गा० १९प्र० २ख० ११सा०।

२ १ २ २ १ १२ २
पवा। स्वा३श्राङ्गा३वायि। शङ्का२ना। यशा२३मा।

१ २ २ १ २ २ २ १
ऊम्मायि। वी३तायि। आ(६)राजन्नोपधा२यिम्यआउ।

॥ ११ * ॥ [३]

२ १ १ ४२ ५ २ ३ ५ २ १
॥ सप्तम् ॥ उपक्षी३त्नाप। तस्थू२३४षाः। भिया

२ १ २ ४ २ ५ २ १
सा२म्। आधायिच्छी३श्रा३। चा३२३४वायि। पवा।

२ २ ४ २ ५
मानावी३दा३ः। रा३४५यो६हायि ॥ २ † ॥ [४] १८

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य

पञ्चमः खण्डः‡ ॥ ५ ॥

---

* ऊ० गा० ११प्र० २ख० ११सा०।

† ऊ० गा० २१प्र० १ख० २सा०।

‡ 'प्रथमस्याञ्चोर्बहिष्पवमानमुक्तम्। तृचत्सौमिकत्वेऽस्मद्वः प्रत्नवतीभिश्चोपवतीभिश्च बहिष्पवमानम्'—इति वि०।

षष्ठे खण्डे*—

प्रथमतृचे, प्रथमा ।

१ २र २ ३१२ ३१ २ ३१२
प्रसोमासोविपश्चितोपोनयन्तऊर्मयः ।

१२ २३१ २
वनानिमहिषाइव ॥ १† ॥

"विपश्चितः" मेधाविनः "ऊर्मयः" प्रवृद्धाः "सोमासः" सोमाः "अपः" वसतीवर्याख्याः "प्र नयन्ते" प्राप्नुवन्ति । तत्र दृष्टान्तः— "वनानि महिषा इव" यथा प्रवृद्धा मृगा वनानि प्राप्नुवन्ति तद्वत् ॥

"अपोनयन्ते"-"अपांनयन्ति"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२ १ २र ३ १२ २ २ ३ १२ १२
अभिद्रोणानिबभ्रवःशुक्राऋतस्यधारया ।

२ ३ १२
वाजङ्गोमन्तमक्षरन् ॥ २‡ ॥

---

* 'इदानीं माध्यन्दिनः पवमानो वक्तव्यः, स च त्रिच्छन्दा उक्तः । स च उच्यते—प्रसोमास इति'—इति वि० ।

† छ० आ० ५, २, ५, १ (२भा० ३१पृ०)=ऋ० वे० ९, ८, ३३, १ ।

‡ ऋ० वे० ९, ८, ३३, २ ।

"अभि" चरन्तीति शेषः अभि शब्दश्रुतेरुचित-क्रियाध्याहारः। किम्प्रति? "द्रोणानि" द्रोणकलशान् * [ यद्यपि द्रोणकलशएकएव तथापि तत्प्राधान्यादितराण्यपि पात्राणि द्रोणानीत्युच्यन्ते। अथवैकस्मिन्नेव पूजार्थं बहुवचनम्। के "बभ्रवः" बभ्रुवर्णाः सोमाः "शुक्राः" दीप्ताः। केन प्रकारेण? "धारया" धाराकारेण। कस्मै प्रयोजनाय? † ॥ २ ॥

अथ तृतीया।

२ १ २र ३ २३१२ ३१२
सुताइन्द्रायवायवेवरुणायमरुद्भ्यः।

१ २ ३ १ २
सोमाअर्षन्तुविष्णवे ॥ ३ ‡ ॥ १८ ¶

"सुताः" अभिषुताः सोमाः इन्द्रादिदेवार्थम् "अर्षन्तु" गच्छन्तु§ ॥

"अर्षन्तु"-"अर्षन्ति"—इति पाठौ ॥ ३ ॥ १८

---

* 'द्रोणानि—द्रोणकलश सम्बन्धीनि ग्रह-चमसादीनि पात्राणि, तानि'—इति वि०।

† परत्रान्वयः।

‡ ऋ० वे० ६, ८, १२, ३।

¶ 'अथ गायत्री भवति'—इति वि०।

§ पूर्वत्रैवान्वयः।

१ २ १ २ १२
॥ आश्वम् * ॥ अभिद्रोणा २निबभ्रवाः। सुक्राकृतस्य
२ १ २२१ २ २ १ ऽ २
धारा २या। वाजङ्गोमा२३न्ताम्। आत्वा ३ उवा ३।
१ १ १ १
रा२३४५न्(२) ॥ ११ † ॥ [१]

१ २ ऽ ३ २ १
॥ सोमसाम‡ ॥ सुताइन्द्रा। यवायवायि। वारु
२ २ २ ३ २ १ २ ५ ५
णाया३मा३। रुद्धियाः। सोमाआर्षा३४। हाउ। तु
४
वा५यिष्णवायि। होपूई। डा(३) ॥ १२ ¶ ॥ [२]

१२ २ १ २ १२
॥ आश्वम् ॥ प्रसोमासो २विपश्चिताः। अपोनयन्त
२ १ २ १२ २ ऽ २ ११
ऊर्म्मा २याः। वनानिमा२३ही। षा३उवा३। वा२३
११ १ २ १ ३ १२ २
४५ ॥(१) अभिद्रोणा २निबभ्रवाः। सुक्राकृतस्यधारा
१ १२ १ २ २ १ ऽ २ १
२या। वाजङ्गोमा२३न्ताम्। आत्वा२उवा३। रा२
१११ १ २ २१ २
३४५न् ॥(२) सुताइन्द्रा २यवायवायि। वरुणायमरुद्धा

---

* "आश्वसूक्तम्"—इति ख० पु० पाठः। † ऊ० गा० १प्र० २अ० ११सा०।

‡ "गायत्रीसोमसाम"—इति ख० पु० पाठः। ¶ ऊ० गा० १प्र० २अ० १२सा०।

१ २र१र २ १ ४ २ ११
२याः। सोमाअर्षा२३न्दृ। वायिष्णा३उवा३। वा२३

११
४५यि(३)॥ १२ * ॥ [३]

१ र २र१र २ २
॥ आष्टुभार्गवम्॥ प्रसोमासोवि। पश्चा३यिताः।

१र २ १ ३ ५ १ २
आपोनया३। ताऊर्म्मा२३४याः। वनाना१यिमा२।

३२ १ ५ ५ १ १र र
हिषा३ः। आ२३४यिवोईहायि॥(१) अभिद्रोणानि।

२ २ १र २ १ ३ ५ १र
बभ्रा२वाः। घूतक्रा३तता३। स्याधा२रा२३४या। वाजा

२ ३२ १ ५ ५ २ १र र
ङ्गो१मा२। तमा३। च्चा२३४रोईहायि॥ सुताइन्द्रा

२र २ १ र१ १ ३ ५
य। वाया३वायि। वारुणाया३। माहुरङ्गा२३४याः।

१र २ ३२ १ ५
सोमाआ१र्षा२। तुवा३यि। ष्णा२३४वोईहायि(३)॥ ११ †॥[४]

१र र१ २ १ २ १ २१
॥ जराबोधीयम्॥ प्रसोमासोवा१ वायिपश्चिताः। अपो

२ र१ २ ४ ५र
ना२३या। तऊर्म्मीयाः। वनाना१यिमा२३हायि। षाः।

---

* ऊ० गा० ६प्र० २अ० १२सा०।

† ऊ० गा० ११प्र० २अ० ११सा०।

३ २ २ २ १ २ १ २ १
इवो३४५ई। डा ॥(१) अभिद्रोणोवा। नायिवश्ववाः।

२ १ २ २ १ २ २ ४
प्रुक्काआ२३र्त्ता। स्वधाराया। वाजाङ्गो१मा२३न्ताम्।

५ ३ २ २ २ १ २ १ २ २
अ। च्चरो३४५ई। डा ॥(२) सुताइन्द्रोवा। यावाय

१ २ १ २ १ २ २
वायि। वरुणा२३या। मरुद्भायाः। सोमाआ१र्षा

४ ५ ३ २
२३न्तू। वि। ष्णवो२३४ई। डा(३) ॥ १२ * ॥ [५]

१ २२ ३ २ १
॥ सोमसाम† ॥ प्रसोमासाः। विपश्चिताः। आपो

२ २ २२ ३ २ १ २ ५
नाया३न्ता३यि। ऊर्म्मयः। वानानायिमा३४। हाउ।

४ १ २२ ३ २ १
हिषा५इवा ॥(१) अभायिद्रोणा। निवाश्ववाः। प्रक्का

२ २ २२ ३ २ १ २ ५
आर्त्ता३स्वा३। धारया। वाजाङ्गोमा३४। हाउ।

५ १ २ ३ २ १
तमा५च्चरान् ॥(२) सुताइन्द्रा। यवायवायि। वारु

२ २ २ ३ २ १ २ ४ ४
णाया३मा३। रुद्भियाः। सोमाआर्षा३४। हाउ। तु

४
वा५यिष्णवायि। हो५ई। डा(३) ॥ १२ * ॥ [६]

---

* ऊ० गा० १४प्र० १ख० १२सा०। † "गायत्रीसोमसाम"—इति ख० पु० पाठः।

‡ ऊ० गा० १४प्र० १ख० १३सा०।

१ र २र र १ २
॥ रौहितकुलीयम् * ॥ प्रसोमासोविपाः । चिता२ः ।

१ र २ १र २ १ १ २ १
अपोनयन्तऊर्म्मा२३याः । वाना२नायिमा२३ । हिषो२

५ ४ ५ २ १ र २र १ २
३४वा । आ५यिवोइहायि ॥(१) अभिद्रोणानिबा । भ्रवा

१ र २ १र २ १ १
२ः । शुक्राऋतस्यधारा२३ या । वाजा२ङ्गोमा २ ३ ।

२ १ ५ ४ ५ २ १र २र १
तमो२३४वा । न्वा५रो इ हायि ॥(२) सुताइन्द्रायवा ।

२ १ र २ १ २ १ १
यवा२यि । वरुणायमरुद्भ्या२३याः । सोमा२आर्षा२३ ।

२ १ ५ ४ ५
तुवो२३४वा । ष्णा५वोइहायि ॥ १४ † ॥ [७]

२र १ २ १ ३ २
॥ मार्गीयवाद्यम् ॥ प्रसौहोवा । मासो२ । विपा

३ ५ १ र २ १ २ १ र
श्चा२३४यिताः । अपोनय । तऊर्म्मा१या२ः । वना ।

२ २ ३ ५ १ ३ ५र
हा । औ३होयि । ना२३४यिमा । हा२यिषा२३४औ

र २ १ १ १ १ १ २ र १ २ १
होवा । ए३ । इवा२३४५ ॥(१) अभौहोवा । द्रोणा

३ २ ३ ५ १ र २ १ २
२ । निबाभ्रा२३४वाः । शुक्राऋत । स्याधा१राया२ ।

* "रोहित कुलीयोत्तरम्"—इति ख०पु०पाठः । † ऊ० गा० १४प्र० १ख० १३सा० ।

१र २ २ २ ५ १ २
वाजम्। हा। औ३ह्वोयि। गो२३४मा। ता२मा२
५र २ २ १ ११११ २र१२
३४औहोवा। ए३। नरा२३४५न्॥(२) सुतौह्वोवा।
१ ३ २ २ ५ १ २र १ २
सायिन्द्रा२। यवाया२३४वायि। वरुणाय। मरुद्भ्या१
१र २ २ २ ३ ५
या२ः। सोमाः। हा। औ३ह्वोयि। आ२३४र्षा।
१ २ ५र २ २ १ ११११
ठ्र२वा२३४औहोवा। ए३। वसुवा२३४५यि (३)॥ ११*॥[८]

१ २ २ २ ४
॥ आभीकम्॥ प्रा२३४सोमासो५। विपौह्वोस्वायि
५ १र २ २ २ २ ३ ५
ताः। अपोनयन्तऊ१र्म्मा३याः। वनानि २ ३ ४ यिमा।
१ ६ २ २ ५ १
हायिषा३उवा३४३। आ३४५यिवो६हायि॥(१) आ२३४
२ २ ४ ५ १ २ २ २
भिद्रोणा५। निवौह्वोभ्रावाः। शुक्रातस्वधा१रा३या।
२ ३ ५ १ ६ २ २
वाजङ्गो२ ३ ४ मा। तामा३उवा३४३। वा३४५रो६हा
५
यि (२)॥ १५ †॥ [९]

२र २ १ २ १ २ २
॥ ऐडसौपर्णम्॥ प्रसोमासोवा। वायिपश्चा२३४यि

* ऊ० गा० १८प्र० १अ० ११सा०। † ऊ० गा० १९प्र० २अ० १५सा०।

५ २१ २१ ७ ३ ५ १
ताः। अपोनया। तऊर्म्मा२३४याः। वा२ना। ना

१ १ २र १ २ ४ ५ २ र १
२३यिमा। हायिषाइवा। औ३होवा॥(१) अभिद्रोणो

२ १ २३ ५ २ १ २ १ ७ ३
वा। नायिव्रा२३४वाः। पुरुक्राक्षता। स्यधा२रा२३

५ १ २ १ २ १
४या। वा२जाम्। गी२३मा। तामव्हरान्। औ२

४ ५ २र १ २ १ २ २ ५ २१
३होवा॥(२) सुताइन्द्रोवा। यावाया२३४वायि। वरु

२ १ ७ ३ ५ १ २
णाया। मरु२त्क्षा२३४याः। सी२माः। आ२३पी।

१ २ १ २ ४ ५
त्वविष्णवा। औ३होवा। हो५ई। डा(३)॥१६*॥[१०]१९

अथ प्रगाथात्मके—

द्वितीयसूक्ते, प्रथमा।

१ २ ३१२ ३ २ ३१ २३ १२
प्रसोमदेववीतयेसिन्धुर्नपिप्येअर्णसा।

३ १र २र ३ १र २र ३२३ १ २ ३१२
अꣳशोःपयसामदिरोनजागृविरच्छाकोशम्मधुश्चुतम्॥१†॥

* ऊ० गा० १९प्र० २ख० १६सा०।

† ऋ० आ० ६, १, ३, ४ (२भा० ८६पृ०)=ऋ० वे० ७, ५, १४, २।

हे "सोम!" त्वं "देववीतये" देवानां पानाय तदर्थम् "अर्णसा" वसतीवर्याख्येन "प्रपिप्ये" प्राप्यायसे। तत्र दृष्टान्तः— "सिन्धुः न" यथा सिन्धुः उदकेन प्रपिप्ये प्रप्यायते तद्वत् [प्यायतेर्लिटि "लिड्यङोश्च(६,१,२९)"—इति पी-भावः], स त्वं "मदिरो न" मदकरः सुरादिरिव "जागृविः" जागरणशीलः। यद्वा, नेति सम्प्रत्यर्थे। इदानीं मदकरो जागरणशीलस्त्वम्। "अंशोः" लताखण्डस्य "पयसा" रसेन "मधुश्चुतं" मधुर-रसस्य च्चारयितारं "कोशं" द्रोणकलशम् "अच्छ" अभि गच्छसि॥ १॥

अथ द्वितीया।

१　२　३　१र　१र　　२　१　२　　　२　२　२　१र　　२र
आ हर्यतो अर्ज्जुनो अत्के अव्यत प्रियः सूनुर्न मर्ज्यः।
१　२　　　　２　२　३　२　३　१　२　३　१र　　२र
तमीᳯहिन्वन्त्यपसो यथा रथं नदीष्वा गभस्त्योः॥ २*॥ २०१†

"हर्यतः" स्पृहणीयः "प्रियः" प्रीणयिता "सूनुर्न" सूनुरिव "मर्ज्यः" मार्जनीयः "अर्जुनः" श्वेतवर्णः‡ सोमः "अत्के" रूपे विचित्रे¶ "आ अव्यत" आवृणोति "तम्" "ईम्"§

* ऋ० वे० ७, ५, १४, २।

† 'अत्र यौधाजयं साम'—इति वि०।

‡ 'अर्जुनः—तृणसवर्णः। "एतानि अर्जुनानि सोमप्रतिनिधौ" तस्मादर्जुन इत्युक्तम्'—इति वि०।

¶ 'अत्के—भिन्ने, सोमप्रक्षालिते'—इति वि०।

§ 'तम् ईम्—इति पदपूरणः'—इति वि०।

एनं सोमम् अङ्गुलयः "नदीषु" नदमानासु वसतीवरीषु "गभस्त्योः" बाह्वोः "आ" आभिमुख्येन "हिन्वन्ति" प्रेरयन्ति। तत्र दृष्टान्तः—"अपसः यथा" वेगवन्तः शूराः जनाः "रथ" सङ्ग्रामेषु प्रेरयन्ति तद्वत्॥

"अर्जुनः"-"अर्जुने"—इति पाठौ॥ २॥ २०

३ २ २ ४ ५ २
॥ यौधाजयम्॥ प्रसो३१। मा३दे। व। वायि
२ ५ १ २ १ ३र २
तार३४यायि। सायिन्धूः३ः। नपा२यि। प्येआ३४५।
२ ५ २ १२१ २र १ २
णार३४सा। अ॒ओ॒ःपया। सा। मदिरो२। नजा
२ ५ २ १ ३ १
३४५। गृ२३४वीः। अक्रा२। कोशा२म्। मधू३४५।
३ ५ ३ २ २ ४ ५ २ ३
सू२३४ताम्॥(१) अच्छा३१। को३शम्। म। धूसू२
५ १ २ १र ३ २ २
३४ताम्। आच्छा३। कोशा२म्। मधू३४५। सू२
२ २र १ २ १ २ १र ३र २
३४ताम्। आहार्यता। अ। र्जुनोआ२। त्कोआ३
२ ५ २ १ ३ १
४५। व्या२३४ता। प्रिया२ः। हून२ः। नमा३४५।
३ ५ ३ २ २ ४ ५ २ ३
जी२३४याः॥(२) प्रिया३१ः। हू३नुः। न। मोर्जा

५ १ २ १र २ २ ३
२३४याः। प्रायाइः। ह्वन्२ः। नमा३४५। जीर२३४

५ २ १ २ १ २ १ २ २
याः। तमायि ऽ हिन्वा। ति। अपसोर। यथा३४५।

३ ५ २ १ २ २ ३
रार२३४थाम्। नदा२यि। पूवार। गभा३४५। स्री

२३४योः(३)॥१२ *॥[१]

४ ३ ५ २ ५ र ३ २
॥वज्रम्॥ प्रसो४म। दा४यिववो। तया३यि।

४ ५ २ र १ २ १ र २
सायिन्धूः। नपायि। प्येआर्णासा३। आ ऽ श्रोःपया

१र ३ ५ र २र ३ ५
३। सामार्२दार२३४यिराः। नजा। गृवौवाओर२३४वा।

र १र २ ३ ५ ४ ४
अक्ता। कोशौवाओर२३४वा। मधू५श्चुताम्॥(१) अ

३ ५र ३ ५ ३ २ ४ ५ २र
क्ता४को। शा४म्मधु। श्चुता३म्। आक्ता। कोशाम्।

१ २ १ २ १ ३ ५ र
मधूश्चूता३म्। आहर्य्यजौ३। अर्जू२नो२३४आ। ल्को

३ २ ३ ५ ३र २ ३ ५
आ। व्यजौवाओर२३४वा। प्रियः। इनौवाओर२३४वा।

४ ४ ३ ५र ३ ५ ३ २
नमा५र्जियाः ॥(२) प्रिया४ःइ। न्४र्नम। जियाइः।

---

* ऊ० गा० १प्र० २ख० १२सा०।

प्रायाः। प्रायाः। ह्वनूः। नमाज्जीयाऽः। जामीं
ह्नचाऽ। तियार्२पार२३४साः। यथा। रथौवांऔर२३
४वा। नदी। पुवौवांओर२२४वा। गभापूस्तियोः। हो
पुइ। डा (३)॥ १२ ॥ [२]

॥ अभीवर्त्तः ॥ प्रसोऽमाऽदेववौतयोवा। सायिन्धु
र्नंपि। प्येआर्णा१सा२। आऽशोःपयाऽ१२२३४। सा
मदिरः। नजागृ१वी२ः। अच्छाको१शा२म्। मधुऽ।
स्रू२३४५। ता२३४५म् (१) ॥ १३ ॥ [३]

॥ गौगवम् ॥ प्रसोमाऽदेववीतयायि। सायिन्धूर२ः।
नपिप्येआऽ। णासा। अऽशोःपयसामदा२ऽयिरोर।
नजाऽगृवीः। अऽशोःपयसामदिरः। नजाऽगृवीः।

---

* ऊ० गा० ६प्र० २अ० १२सा०।

† ऊ० गा० ८प्र० १अ० १३सा०।

१ र २र १ २ २ १ ५ ४
आच्छाको। शा। औ३हो। मधो२३४वा। सू५तो

६हायि(१)॥ १७*॥ [४]

१ र १ र १ र २ १
॥ मधुश्च्युन्निधनम् † ॥ प्रसोमदेववीतयायि। सि

२र १ २ १ र र २ १र
न्धुर्न पिप्ये अर्णा२३सा। अ ंशोपयसामदिरोनजागृ२३

२ १र २ १ ३२ ५र र
वीः। अच्छाको२३शा३म्। मा२। धुश्चू३४औहोवा।

३ १ १ १ १
ता२३४५म्(१)॥ १८ ‡ ॥ [५]

५ र २ ४र ५ ४र ५ १
॥ गौङ्गवम् ॥ प्रसोमा२देववीतयायि। सायिन्धू

१ २र २ ४ ५ १ १र र
२ः। नपिप्य आ३। णासा। अ ंशो.पयसामदा२३यि

१ ३ २ ४ ५ २ १र र ३ १
रो२। नजा३गृवीः। अ ंशोःपयसामदिरः। नजा२

४ ५ १ र २र १ १ २ १ ५
गृवीः। आच्छाको। शा। औ३हो। मधो२३४वा।

४ ५ ५ र २ ४ ५ ४ ५ १
सू५तो६हायि ॥(१) अच्छाको३शन्मधुश्चुताम्। आच्छा

१र २ २ ४ ५ २र १ र
२। कोशन्मधु३। श्चुताम्। आहर्यं तोअर्जुनो२३

---

* ऊ० गा० ८प्र० २अ० १७सा०। † "पदान्तमधुश्च्युन्निधनम्"—इति ख०पु० पाठः।

‡ ऊ० गा० ८प्र० २अ० १८सा०।

१ ३र २ ४ ५ २र १ र र र
आ२। त्को आ३व्याजा। आहय्यं तौअञ्ज गोत्र। त्को

२ ४ ५ १ २र १ २ २ १
आ३व्याता। प्रायःस्त्व। ना। औ३हो। नमोर ३ ४

५ ४ ५ ५ २ ४ ५ ४ ५ १
वा। जाधुयोई३हायि॥(२) प्रियःस्त्व३नुर्न मर्जियाः। पा

१र ३ २ ४ ५ २ १र
या२ः। स्त्वनुर्न मा३। जायाः। तमोंहिन्वन्त्यपार३

१ ३ २ ४ ५ २ १र ३ २
सो२। यथा३राथाम्। तमोंहिन्वन्त्यपसः। यथा३

४ ५ १ र २ १ २ २ १ ५
राथाम्। नादीषु। आ। औ३हो। गभोर३४वा।

४ ५
स्ताधुयोई३हायि(३)॥ १७ *॥ [६]

३ २ २ ४ऽ ५
॥ यौधाजयेत्त्वारान्तम्॥ प्रसो३१। मा३दे। व।

२ ३ ५ १ २ १ र
वायिता२३४यायि। सायिन्धू३ः। नपाऽरयि। पोत्र

३ १ १ १ १ २ १ २१ २र १
वो३४५। सा२३४५। अंशोःपया। सा। मदिराऽ२।

र ३ १ १ १ १ २ १
नजागृ३४५। वी२३४५ः। अच्छा२। कोशाऽ२म्।

३ १ १ १ १ ३ २ २ ४
मधुश्च्यु३४५। ता२३४५म्॥(१) अच्छा३१। को३शम्।

* ऊ० गा० ११प्र० १अ० १७सा०।

५ २ ३ ५ १ २ १र
म । धुंश्चू२३४ताम् । आच्छा३ । कोशा ऽ२म् । मधु
३ १ १ १ १ २र १ २ १ २ १ र
श्चू३४५ । ता२३४५म् । आचार्य्यतो । अ । जुनोआ
र ३ १ १ १ १ २ १
ऽ२ । त्कोअव्या३४५ । ता२३४५ । प्रिया२ः । ह्वनूऽ२ः ।
३ १ १ १ १ ३ २ २ ४ ५
नमर्जा२३४५ । या२३४५ः ॥(२) प्रिया२१ः । ह्व२नुः । न ।
२ ३ ५ १ २ १र
मार्ज्जा२३४याः । पाया३ः । ह्वनूऽ२ः । नमर्ज्जा२३४५ ।
३ १ १ १ १ २ १ २ १ २ १ र
या२३४५ः । तमायिर्ंछन्वा । ति । अपसोऽ२ । यया
३ १ १ १ १ १ १ २
रा३४५ । था२३४५म् । नदा२यि । षुवाऽ२ । गभ
३ १ १ १ १
स्ता३४५ । यो२३४५ः(३) ॥ १५ * ॥ [७]

५ र २ ४र५४र ५ १ २
॥ दैगतम् ॥ प्रसोमा३देववीतयायि । सायिन्धुर्न्नं
र १ १ ३ २ ५ २ २ १
पि । प्येआर्णा१सार । अं०ँशोऽ३ः । हौ२हो२वा । पय
र र २ १ १ ३ ५र
सामदिरोनजागृ१वीरः । अच्छा२३ । कोरशा२३४औ

* ऊ० गा० १४प्र० १ख० १५सा० ।

२ १ ३ १ १ १ १ ५ र २
होवा । ए३ । मधू २श्चुता२३४५म् ॥(१) अच्छाकोश

४ ५ ४ ५ १ र २र १ १
३म्मधुश्चुताम् । आच्छाकोशम् । मधूश्च् १तार्म् ।

२र २ ऽ २ २ १र र ०
आहा३ । हौ३हो३ । वा । यतोअजुनोअन्के अव्यात

१ १ ३ ५र र २ १
२ । प्रियार२३ः । ह्वरेना२३४औहोवा । ए३ । नमा २

१ ३ १ १ १ १ ५ २ ४ ५ ४ ५ १ २र
ज्जियार२३४५ः ॥(२) प्रियःह्वरनुर्न्नमर्जियाः । प्रायःह्वनुः ।

१ २ ३ १ ऽ २ र १
नमाञ्जा१र्यारः । तमा३यिम् । हौ३हो३वा । द्वन्व

र २ १ १ ३ ५र
न्व्यपसोयथारा१था२म् । नदा२३यि । पूर्वा२३४औ

र २ १ ३ १ १ १ १
होवा । ए३ । गभा २स्तियो२३४५ः(३) ॥ १२ * ॥ [८]

५ र २ ४र५ ४ ५ १
॥ पौरुहन्मनम् ॥ प्रसोमा३देववीतयायि । सायि

२ र १ र १ १ र २
न्धुर्नपि । प्वेआर्णी१सा २ । णासा २ । आ१ऽशोःपय ।

१ऽ २ १ २ १ २ ३ ५ १
सा । मदिरो३ । मदिरो३ । नाजागृ२३४वी । आ

---

* क० गा० १८प्र० १सा० १२ऋ० ।

च्छाकोशाम्। माधुश्चू२३४ताम्। मधूश्चुताम्॥(१)
अच्छाकोशम्मधुश्चुताम्। आच्छाकोशम्। मधूश्चू
१ता२म्। श्चूता२म्। आहर्य्यतः। आ। जुनो
आ२। जुनोआ२। त्कोअव्या२३४ता। प्रायःसूनूः।
नमाउर्जा२३४याः। नमाउर्जयाः॥(२) प्रियःसू३नुर्न
मर्जियाः। प्रायःसूनुः। नमाउर्जा१या२ः। जाया२ः।
तामीॐहिन्व। तायि। अपसो२। अपसो२। याथा
रा२३४थाम्। नादीषुवा। गाभस्ता२३४योः। गभा
स्त्रियोः। होइ। डा(३)॥१३*॥[९]

॥हारायणम्॥ प्रसोमदेवहा२यिविवीतयायि। सा
यिन्धुर्नपिप्येअर्णसा। शोःपा२या। सामदिरो। न

* ऊ० गा० १८प्र० १अ० १३सा०।

२ १ १ र र २ १ ५
जाइहा। गृवी२:। अच्छाकोशम्मधोवा३ओ२३४वा।

४ ५ १ र र १
सूतोइहायि ॥(१) अच्छाकोशौहो२यिमधुश्चुताम्। आ

र र र २ २ १ र
च्छाकोशम्मधश्चुतम्। आहाय्याइतो। अर्ज्जनोआ।

र २ २ १ १ र २ १ ५
त्केआ३हा। व्याता२। प्रियःहनुर्न्नमोवा३ओ२३४वा।

४ ५ १ २र १
जा५योइहायि ॥(२) प्रियःहनौहो२यिनमर्ज्जयाः। प्रा

र २ २ १
यःसूनुर्न्नमर्ज्जयः। तमायिहा३यिन्वा। तियपसो।

२ २ १ १र र २ १ ५
यथा३हायि। राया२म्। नदोषुवागभोवा३ओ२३४वा।

४ ५
स्ता५योइहायि(३) ॥ १४ * ॥ [१०]

२ १र ४र ५र
॥ हिंहिङ्कारंवामदेव्यम्॥ प्रसोमा२३देववीतयायि।

१ र र र २ ३र २
सायिन्धुर्न्नपिप्ये अर्णसा ओः पयसामदिरोऽनजौहो ३।

१ १ १ १ र र २ ३र २ १
ऊम्मा२। गृ२३वीः। अच्छाकोशाम्मधौहो३। ऊम्मा

* ऊ० गा० १प्र० १अ० १४सा०।

१ ४ ५ २ १र ४
२। श्रुताम्। औ२३होवा ॥(१) अच्छाको ३ २ ३ श
५ १ २ र र र र
मधुश्रु ताम्। आच्छाकोशम्मधुश्रु तमाहृर्यतोअर्जुनौ
५ २ ३र २ १ १ २ १ र २ ३र
आत्कऔहो३। ऊम्मा२। व्या२३ता। प्रियस्हनुर्न्नमौ
२ १ १ २ ४ ५ २ १
हो३। ऊम्मा२। जिया। औ३होवा ॥(२) प्रियःसूर
४ ५ १ र र
३नुर्नमर्ज्जियाः। प्रायःसूनुर्न्नमर्जियस्तमौ२हिन्वन्त्यपसो
२ ३र २ १ १ २ १र २ ३र
ऽयथौहो३। ऊम्मा२। रा२३थाम्। नदीषुवाऽगभौ
२ १ १ ४ ५ ४
हो३। ऊम्मा२। क्षितयोः। औ२३होवा। हो५
ई। डा(३)॥१७*॥ [११]

२र र १ २र १र २ १ २ १
॥ कण्वरथतरं॥ प्रासोमदेववीतयायि। सिन्धुर्न्न
२ १ २ २ र र र र
पायि। ष्ये३आर्णा३सा। अꣳशोःपयसामदिरोनजागृ
३ ५र २ १र ५ २
वा२३४ऐहि। अच्छाको२३४शाम्। मधा३१उवा२३।
१ २ ३ १ २र र १र २ १ २ १ २ १र
ए३। श्रु तमा॥(१) आच्छाकोशम्मधुश्रुताम्। अच्छा

* ऊ० गा० १९प्र० २ख० १७सा०।

२ २ २ २ २ २ २ २
कोशाम्। मा२धुसू३नाम्। आद्दर्यतोअजुनोअत्के

३ ५र २ १ १ २ २ २
अव्यता२३४ऐही। आ२हार्यो३तो। अजुनोअत्केअ

३ ५र २ १ ५ २ २
व्यता२३४ऐही। पियःसू२३४नूः। ममा३१उवा२३। ए३।

२ २ २ २र १र २ १ २ १ २ १र २
जियआ ॥(२) प्रायःसूनुर्न्नमर्जियाः। प्रियःसूनूः। ना

१ २ २ २ २ २ ५र २
३माज्जो३याः। तमीᳬहिन्वन्त्यपसोयथा२३४मैही। ना

१ २ २ २ २ ३ ५र २ १र
३मायिᳬहा३यिन्वा। तियपसोयथा२था२३४मैही। नदी

५ २ २ ३ ३र २
षू२३४वा। गभा३१उवा२३। ए३। क्षियोवा ॥६*॥[१२]२०

अथ तृतीयतृचे, † प्रथमा।

१ २र ३ २ ३ १ २ ३ १ २
प्रसोमासोमदच्युतःश्रवसेनोमघोनाम्।

७ २ ३ १ २
सुताविदथेअक्रमुः ॥ १ ‡ ॥

---

* ऊ० गा० २२प्र० २ख० ६सा०।

† 'उक्तोमाध्यन्दिनः पवमानः, उक्तानि गायत्राणि ०००। आर्भवः पवमानो वक्तव्यः तस्य ज्योतिष्टोमवत् छन्दांसि साम्नाञ्चापनामधेयैरिवोच्यते'—इति वि०।

‡ ऋ० आ० ५, २, १ (१भा० ३०पृ०)=ऋ० वे० ६, ८, २२, १।

"सोमासः" सोमाः "मदच्युतः" मदस्राविणः "सुताः" अभिषुताः सन्तः "विदथे" यज्ञे "मघोनां" हविष्मतां "नः" अस्माकं "अवसे" अन्नाय कीर्त्तये वा "प्र अक्रमुः" प्र गच्छन्ति ॥

"मघोनां"-"मघोनः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २र ३ १ २ ३ २
आदीꣳहꣳसोयथागणंविश्वस्यावीवशन्मतिम् ।

२ ३ १ २र
अत्योनगोभिरज्यते ॥ २ * ॥

"आत्" अपिच "ईम्" अयं सोमः "हंसो† यथा" "गणं" जनसङ्घं स्वगतिविशेषेण स्वनेन वा प्रविशति, तद्वत् "विश्वस्य" सर्वस्य स्तोतृजनस्य "मतिं" स्तुतिं बुद्धिं वा "अवीवशत्" वशं नयति ; स च सोमः "अत्यो न" अश्व इव "गोभिः" गव्यैरुदकै र्वा "अज्यते" सिच्यते स्निग्धीक्रियते ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
आदीन्त्रितस्ययोषणोहरिꣳहिन्वन्त्यद्रिभिः ।

२ २ १ २ ३ १ २
इन्दुमिन्द्रायपीतये ॥ ३ ‡ ॥ २१

* ऋ० वे० ६, ८, २२, २ ।

† 'हंसः—आदित्यः'—इति वि० ।

‡ ऋ० वे० ६, ८, २२, ३ । अत्रैव च पुनः ५, २, ४, २ । परं तत्र तु "यतन्त्रितस्य"—इति पाठः ।

"आत्" अपिच "ईम्" एनं "हरिं" हरितवर्णम् "इन्दुम्" सोमं "त्रितस्य" ऋषेः "योषणः"* अङ्गुलयः "अद्रिभिः" ग्रावभिः "हिन्वन्ति"। किमर्थम्? इन्द्राय इन्द्रस्य "पीतये" पानार्थम् ॥ ३ ॥ २१

१ र २र र १ २
॥ सꣳहितम् ॥ प्रसोमासोम। दा२च्युताः। अ
१ २ १ २
वा२। सा२३यिनो। मा२घोनाम्। सू२३ताः।
१ ७र २
वा२यिदा। धेआ२३। हाउवा३। आ२३४
५
मूः (१) ॥ १४† ॥ [१]

१ र २र १र २ २
॥ आप्तभार्गवम् ॥ प्रसोमासोम। दच्यू३ताः।
१ र २ १ ३ ५ १ २
आवसेनो३। मा२घो२३४नाम्। सुतावा३यि। दा२।
३र २ १ ५ ५
धेआ३। आ२३४मो६हायि(१) ॥ २० ‡ ॥ [२] २१

---

* 'योषणः—युमिश्रणे, मिश्रणकर्त्तारः ऋत्विजः,—इति वि०।

† ऊ० गा० १प्र० २अ० १४सा०।

‡ ऊ० गा० ११प्र० १अ० २०सा०।

अथैकर्च्चं चतुर्थसूक्ते*—प्रथमा।

३ १ २ ३१र २र १ २ ३ १ २
अयापवस्वदेवयूरेभन्पवित्रंपर्येषिविश्वतः।

२ ३ १ २
मधोर्धाराअसृक्षत ॥ १ ॥ †

हे सोम! "देवयुः" देवान् कामयमानः त्वम् "अया" अनया धारया "पवस्व" क्षर। ततः "रेभन्" शब्दायमानः "पवित्रं" "विश्वतः" "पर्येषि" परिगच्छसि। अनन्तरं "मधोः" मदकरस्य तव "धाराः" आत्मीयाः "असृक्षत" सृज्यन्ते॥

अत्र द्वितीय-तृतीय-पादौ व्यत्ययेन ‡ पाठौ ॥ १ ॥

अथैकर्च्चं पञ्चमे—प्रथमा ¶।

१ २ ३ १उ ३ २ ३ १ २ ३ १ २
पवतेहर्यतोहरिरतिह्वराꣳसिरꣳह्या।

३क २र ३१ २ ३ २३१ २
अभ्यर्षस्तोतृभ्योवीरवद्यशः ॥ २ ॥ §

---

* मूले, गानग्रन्थे, पदकारनये, विवरणमते चेदमपि सूक्तं तृचं; तथाचेदमेव सूक्तमस्य प्रथमकस्यान्त्यमिति।

† ऋ० वे० ७, ५, ११, ४।

‡ तथाच—"अयापवस्वदेवयुर्मधोर्धाराअसृक्षत। रेभन्पवित्रंपर्येषिविश्वतः"—इति ऋ० पाठः।

¶ मूलादिमते त्रिंशदृक् द्वाविंशति-सूक्तस्य द्वितीयेति।

§ ऋ० आ० ६, २, ३, ११ (२ भा० २२० पृ०) = ऋ० वे० ७, ५, ११, २।

"हर्य्यतः" स्पृहणीयः "हरिः" हरितवर्णः सोमः "रंह्या" तृतीयाया आकारः साधुवेगेन "ह्वरांसि" कुटिलानि अनृजूनि पवित्राणि "अति पवते" अतीत्य गच्छति। किं कुर्व्वन्? स्तोतृभ्यः "वीरवत्" पुत्रयुक्तं "यशः" "अभ्यर्षन्" अभिगमयन् पवते ॥ ३ ॥

अथैकर्च्चं षष्ठे प्रथमा *।

१ २ ३ १र २र ३ २ ३ १ २ ३ १र २र
प्रसुन्वानायान्धसोमर्त्तोनवष्टतद्वचः।

३ १ २ ३ १ २ ३ २ ३ १र २र
अपश्वानमराधसꣳहतामखन्नभृगवः ॥ ३ † ॥ ९२

॥ इति प्रथमः प्रपाठकः ॥

"सुन्वानाय" [षष्ठ्यर्थे चतुर्थी (२,३,६२वा०)] सुन्वानस्य अभिषूयमाणस्य "अन्धसः" अदनीयस्य सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तः" मारकः कर्म्मविघ्नकारी "न प्र वष्ट" न भजतां न शृणोत्विति यावत्। तथा हे स्तोतारः! "अराधसं" साधककर्म्म-रहितं "श्वानम्" "अपहत"। तत्र दृष्टान्तः—"मखं न" यथा पुरा अपराद्धं मखम् एतन्नामानं "भृगवः" अपहतवन्तः तथा अपहतेत्यर्थः ॥

"प्रसुन्वानाय"-"सुन्वानस्य", "वष्ट"-"हत"—इति पाठौ ॥१॥२२

* मूलादिनये त्रिचात्मक् द्वाविंशति-सूक्तस्य तृतीयेति।

† छ० आ० ६, २, १, ९ (२भा० १६८ पृ०) = ऋ० वे० ७, ५, ३, ३= आर्च्चिकोत्तरायां पुनः ६, २, ३, १।

५ २र २ ३ ४ र ४
॥ आष्टारम् ॥ पव । तेहा३४ । औहोपूर्ष्यतोहरा

१ र ११ २ ३१ र
यिः । अतिक्रराꣳसिरꣳ । हा२३या३४ । अर्षा । स्तो

१र २ ४५ ३ ११११
तृभ्योवायि । रा३वद्य । म्रा२३४५ः(३) ॥ १६ * ॥ [१]

५ ३र २ ४ ५ १
॥ गौरोवितम् ॥ प्रसु । न्वाना ३ । यअन्धसाः । म

र १ र१ ४
र्त्तोनवष्टतद्वचा२३ः । आपश्वाना३१२३म् । अरा५धसा

१ र २ ४ ५ ४ ५
म् । हातामखा३१२३म् । नभोवा । गा५वो६हायि ॥

(३)॥ १७ † ॥ [२]

२ र र १ २ १
॥ सुज्ञानम् ॥ पवतेहा । र्ष्यतोहरायिः । अजिक्रा

१ २ १ र
रा२ । सिरꣳहिया । अभियार्षा२ । स्तोतृ । भ्यो

३ ५र र १ २ १ ११११
रैर्वा२३४औहोवा । रवद्यमय३उपा२३४५(२) ॥१५ ‡॥[३]

२ र १र २
॥ काम्रीजम् ॥ पवतेहा । र्ष्यतोहा२३रा३४यिः ।

* ऊ० गा० १६प्र० २ख० १६सा० ।

† ऊ० गा० १प्र० २ख० १७सा० ।

‡ ऊ० गा० ६प्र० २ख० १५सा० ।

२ र १ २ र र
अजिक्करा। सिर॒हार२३या३४। अभियर्षा। स्तोतृभ्यो
र १ ३ ५र र २
वीरवत्। यार। आ२३४। औहोवा। ऊ२३४
५
पा(२) ॥ १६ * ॥ [४]

२१२ ४५ २ २ ५
॥ पौष्कलम् ॥ पवते३हर्य्य। तोहा २३४रायिः।
२ १२१ २ २ ५ २ १ ७र
अतिक्करा। सायिर॒हार२३४या। अभाअर्षा। स्तोतृ
र ३ २ १३ ११११
रभ्योर२३४५वाई५६यि। रवद्यशा२३४५ः ॥ २ † ॥ [५]२२

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य

षष्ठः खण्डः‡ ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरोदेयाद् विद्यातीर्थ-महेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-
प्रकाशे उत्तराग्रन्थे द्वितीयोऽध्यायः¶ ॥

---

* ऊ० गा० ६प्र० २अ० १६सा०।

† ऊ० गा० ९प्र० २अ० २सा०।

‡ 'विद्वल्लौमिकं प्रथममद्धः समाप्तम्'—इति वि०।

¶ 'समाप्तश्च प्रथमः प्रपाठकः'—इति वि० मूलादिसर्वसम्मतश्चैतदिति श्रम्।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १ ॥

## ॥ अथ तृतीयोऽध्यायः आरभ्यते * ॥

तत्र,

पवस्ववाचइति पञ्चतृचात्मके प्रथमखण्डे—

प्रथमतृचे—प्रथमा ।

१२ २ १ २ ३१२ ३२ ३ १ २ ३ १ २
पवस्ववाचोअग्रियःसोमचित्राभिरूतिभिः ।
३ १ १२ ३ १ २
अभिविश्वानिकाव्या ॥ १ ॥ †

हे "सोम !" "अग्रियः" मुख्यः‡ त्वं "चित्राभिः" पूजनीयैः¶ "ऊतिभिः" रक्षणीयैः सह "वाचः" अस्मदीयाः स्तुतीः

---

* 'इदानीं द्वितीयमहरारभ्यते द्वितीयश्च प्रपाठकः । पञ्चदशसौमिकं द्वितीयमहः'—इति वि० ।

† ऋ० वे० ७, १, २८, ५ ।

‡ 'अग्रियः प्रधानभूताः'—इति वि० । अग्रियशब्दमेवं व्याचष्टे भगवान् यास्कः—"अग्रगमनेनेति वाग्रगरणेनेति वाग्रसम्पादिन इति वा । अपिवाग्रमित्येतदनर्थकमुपबन्धमाददीत"—इति ६, १५ ।

¶ 'चित्राभिः विचित्राभिः नानाप्रकारैः'—इति वि० ।

प्रति "पवस्व"। [उत्तरार्द्धं उक्तमेवार्थं विशदयति—] "विश्वानि" सर्वाणि "काव्या" काव्यानि स्तुत्यात्मकानि वाक्यानि "अभि" पवस्वेति ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३२ २ १र २र३१२
त्वꣳसमुद्रिया अपोग्रियोवाचईरयन्।
१ २
पवस्वविश्वचर्षणे ॥ २ ॥ *

हे "विश्वचर्षणे" सर्वस्य द्रष्टः सोम! "अग्रियः" मुख्यः त्वं "वाचः" † "ईरयन्" प्रेरयन् "समुद्रियाः" आन्तरिक्षाणि‡ "अपः" उदकानि¶ "पवस्व" धारया क्षर ॥

"विश्वचर्षणे"-"विश्वमेजय"—इति छन्दोग-बह्वृचानां पाठौ ॥ २ ॥

अथ तृतीया।

२ ३१र २र ३ १ २
तुभ्येमाभुवनाकवेमहिम्नेसोमतस्थिरे।
१ २ ३ १ २
तुभ्यन्धावन्तिधेनवः ॥ ३ § ॥ १

* ऋ० वे० ७, १, २९, १।

† 'अग्रियो वाचः—प्रधानभूताः ऋग्यजुःसामलक्षणाः'—इति वि०।

‡ "समुद्रः"—इत्यन्तरिक्षनामसु निघण्टौ पञ्चदशं पदम् (१, ३)।

¶ 'समुद्रिया अपः—समुद्रे भवाः आपः समुद्रियाः। द्रोणकलशः समुद्रः'—इति वि०।

§ ऋ० वे० ७, १, २९, २।

हे "कवे" क्रान्तकर्म्मन् सोम ! "तुभ्यं" तव "महिम्ने" "इमा" इमानि "भुवना" भुवनानि "तस्थिरे" तिष्ठन्ति त्वामेव पुरस्कुर्वन्तीत्यर्थः । किञ्च "धेनवः" नवप्रसूतिकाः देवानां हविःप्रदानेन प्रीणयित्र्यो गावः * "तुभ्यं" त्वदर्थमेव 'आशिरं प्रयच्छ मे'—इति "धावन्ति" आगच्छन्ति ॥

"धावन्तिधेनवः"—इति छन्दोगाः, "अर्षन्तिधेनवः"—इति बह्वृचाः ॥ ३ ॥ १

अथ द्वितीयतृचे—प्रथमा ।

१ २   ३ १ २ ३ २ ३ १ २ ३२ ३ १ २
पवस्वेन्दोवृषासुतःकृधीनोयशसोजने ।

२ ३ २ ३ १ २
विश्वाअपद्विषोजहि ॥ १ ॥ †

हे "इन्दो" सोम ! "सुतः अभिषुतः "वृषा" कामानां वर्षिता "पवस्व" धारया क्षर "जने" जनपदे "नः" अस्मान् "यशसः" यशस्विनः "कृधि" कुरु ; "विश्वा" विश्वान् सर्वान् "द्विषः" द्वेष्टॄन् शत्रून् "अपजहि" मारय च ॥ १ ॥

---

* 'धेनवः—गावः । अथवा धेनव आदित्यरश्मयः'—इति वि० ।

† ऋ० आ० ५, २, ५, ३ ( २भा० २२४० ) = ऋ० वे० ७, १, २२, ३ ।

अथ द्वितीया।

१ २ ३ २३१ २ ३१ २ ३ २

यस्यतेसख्येवयꣳसासह्यामपृतन्यतः।

१ २ ३ १ २ ३ २

तवेन्दोद्युम्नउत्तमे॥ २ ॥ *

हे "इन्दो" सोम! "अस्य" † अस्मिन् यागे वर्त्तमानस्य "ते" तव "सख्ये" सखित्वे सति वयं स्तोतारः "तव" त्वदीये "उत्तमे" श्रेष्ठे "द्युम्ने" अन्ने तृप्तिं प्राप्ताः [ तथाच यास्कः— "द्युम्नं द्योततेर्यशो वान्नं वा ( निरु० नै० ५, ५ )"—इति ] "पृतन्यतः" युद्धमितः शत्रून् ‡ "सासह्याम" अभिभवेम ¶॥

द्वितीय-तृतीयपादौ व्यत्ययेन पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १र २र ३ २ ३ २ ३ १ २

यातेभीमान्यायुधातिग्मानिसन्तिधूर्वणे।

१ २ ३ २

रक्षासमस्यनोनिदः॥ ३ §॥ २

---

* ऋ० वे० ७, १, २३, ४।

† मूलपाठस्तु "यस्य"—इति; विवरणकृतापि तथैव व्याख्यातम्, पदग्रन्थ-गानग्रन्थादावपि तथैव श्रूयते।

‡ 'पृतन्यतः—पृतनाः सेनाः, ताभिर्ये यान्त्यग्रे ते स्थिताः वीरपुरुषाः'—इति वि०। "पृतनाः"—इति सङ्ग्रामनामसु निघण्टौ अष्टादशं पदम् (२, १७।

¶ 'सासह्याम—सहेम'—इति वि०।

§ ऋ० वे० ७, १, २३, ५,।

हे "सोम!" "ते" तव "या" यानि "भीमानि" शत्रूणां भयङ्कराणि "तिग्मानि" तीक्ष्णानि "आयुधा" आयुधानि * "धुर्वणे" शत्रुवधार्थं सन्ति तैः "आयुधैः" "समस्य" सर्वस्य शत्रोः "निदः" निन्दायर्† "नः" अस्मान् "रक्ष" पालय ।३॥ २

अथ तृतीयतृचे—प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २
वृषासोमद्युमाꣳअसिवृषादेववृषव्रतः ।
२ ३ १ २
वृषाधर्म्माणिदध्रिषे ॥ १ ॥ ‡

हे "सोम!" "वृषा" कामानां वर्षिता त्वं "द्युमान्" दीप्तिमान् "असि"। अपिच हे "देव" द्योतमान सोम! "वृषा" त्वं "वृषव्रतः" वर्षणशीलकर्मासि। किञ्च हे सोम! "वृषा" त्वं "धर्माणि" देवानां मनुष्याणाञ्च हितानि कर्माणि "दध्रिषे" धारयसि ॥

"दध्रिषे"-"दधिषे"—इति पाठौ ॥ १ ॥

---

* 'शत्रुघिप्रासतोमरादीनि'—इति वि० ।

† 'निदः—नितरां हणाति निदः, तस्य सम्बोधनं निदः'—इति वि० ।

‡ ऋ० आ० ऋ० ६, १, २, ८ (२भा० ६३ पृ० ) = ऋ० वे० ७, ६, ३९, १ ।

अथ द्वितीया ।

१ २ ३ २ २   २ ३ २ ३ २ ३ १ २ ३ २
वृष्णस्तेवृष्ण्यᳬशवोवृषावनंवृषासुतः ।
१र २र ३ १र   २र
सत्वँवृषन्वृषेदसि ॥ २ ॥ *

हे "वृषन्" कामानां वर्षक सोम ! "वृष्णः" वर्षितुः † "ते" तव "शवः" बलं ‡ "वृष्ण्यं" वर्षणशीलं भवति "वनं" तव भजनमपि, "वृषा" वर्षणशीलं "सुतः" अभिषुतः तव रसोऽपि "वृषा" वर्षणशीलः "स त्वं" "वृषेदसि" वर्षणशील एवासि भवसि ॥

"सुतोमदः"—इति, "सत्वंसत्यम्"—इति च पाठौ ॥ २ ॥

अथ तृतीया ।

२ ३ १ २   ३ २ ३ १र २र ३ १र २र
अश्वोनचक्रदोवृषासङ्गाइन्दोसमर्वतः ।
१ २ ३ १र २र
विनोरायेदुरोवृधि ॥ ३ ¶ ॥ ३

हे "इन्दो" सोम ! "वृषा" त्वं "अश्वोन" अश्वइव "सञ्चक्रदः" सङ्क्रन्दसे । अपिच "गाः" पशून् "अर्वतः" अश्वांश्च अस्मभ्यं

* ऋ० वे० ७, १, २९, २ ।

† 'वृष्णः'—वृषु सेचने ( भ्वा० पर० ) सेचन-समर्थस्य ते'—इति वि० ।

‡ "शवः"—इति बलनामसु निघण्टौ तृतीयं पदम् ( २, ९ ) ।

¶ ऋ० वे० ७, १, २९, ३ ।

सम्प्रयच्छसीति शेषः । किञ्च "नः" अस्माकं * "राये" धनाय "दुरः" द्वाराणि "विहधि" विहतानि कुरु ॥ ३ ॥ ३

अथ चतुर्थतृचे—प्रथमा ।

२ २ १ २ ३ १ २ ३ १ २
वृषा ह्यसि भानुना द्युमन्तन्त्वा हवामहे ।

१ २ ३ १ २
पवमान स्वर्दृशम् ॥ १ ॥ †

हे सोम ! त्वं "वृषासि हि" अभिमत-फलानां वर्षिता भवसि खलु । तस्मात् हे "पवमान" पूयमान वा सोम ! "स्वर्दृशं" सर्वस्य [ सूर्यस्य वा ] द्रष्टारं [ सर्वैर्देवैर्द्रष्टव्यं वा ] "भानुना" तेजसा "द्युमन्तं" दीप्तिमन्तम् अतिशयेन तेजस्विन-मित्यर्थः [ स्तुतिमन्तं वा ], "त्वा" त्वां वयं "हवामहे" यज्ञेषु आह्वयामहे ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ २ १ २ ३ १ २ ३ १ २
यदद्भिः परिषिच्यसे मर्मृज्यमान आयुभिः ।

१ २ ३ १ ३ १ २
द्रोणे सधस्थमश्नुषे ॥ २ ॥ ‡

---

* 'नः-अस्मभ्यम्'—इति वि० ।

† छ० आ० ५, २, ५, ४ ( २भा० ३३पृ० ) = ऋ० वे० ७, ३, १, ४ ।

‡ ऋ० वे० ७, ३, २, १ ।

हे सोम ! त्वम् "आयुभिः" मनुष्यैः * ऋत्विग्भिः "मृज्यमानः" अतिशयेन शोध्यमानः सन् "अद्भिः" वसतीवर्याख्याभिः "यद्" यदा "परि सिच्यसे" परितः सिच्यमानो भवसि, तदानीं "द्रोणे" द्रोणकलशेन गृह्यमाणः सन् "सधस्थं" सह तिष्ठन्त्यनेनेति सधस्थं स्थानं ग्रहचमसादिकम् "अश्नुषे" व्याप्नोषि ॥

"मृज्यमानआयुभिः"-"मृज्यमानोगभस्त्योः"—इति, "द्रोणे"-"द्रुणा"—इति च पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ १ २
आपवस्वसुवीर्य्यम्मन्दमानःस्वायुध । 

३ १ २ ३ १ २
इहोष्विन्दवागहि ॥ ३ † ॥ ४

हे "स्वायुध" ! यज्ञे 'स्फ्य-कपालादीनि दशायुधानि-इत्यभिधीयन्ते, शोभनानि तानि यस्य स तथोक्तः । यद्वा धनुरादीन्यायुधानि यस्य सः, तादृश हे सोम ! त्वं "मन्दमानः" मोदमानः सन् [ अन्तर्णीतण्यर्थः ] देवान् स्वयं मादयन् ‡ "सुवीर्य" शोभनवीर्योपेतं पुत्रादिकमस्माकम् "आ पवस्व" पवतिर्गत्यर्थः, आ प्रापय । किञ्च हे इन्दो ! ग्रहेषु चमसेषु रक्षणशील सोम !

---

* "आयवः"—इति निघण्टौ मनुष्यनामसु सप्तदशं पदम् ( २ ३ ) ।

† ऋ० वे० ७, ९, ६, ५ ।

‡ 'मन्दमानः—शोभमानः तप्यमानोवा'—इति वि० ।

"इह उ" इहैव * अस्मदीये यज्ञे "सु आगहि" सुष्ठु † आगच्छ ॥ २ ॥ ‡

अथ पञ्चमतृचे—प्रथमा ।

१ २      ३ २ ३ १ २    ३ २
पवमानस्यतेवयम्पवित्रमभ्युन्दतः ।
३   १   २र
सखित्वमावृणीमहे ॥ १ ॥ ‡

हे सोम ! "पवित्रम् अभ्युन्दतः" पवित्रमभिद्रवतः ¶ "पवमानस्य" क्षरतस्य "ते" तव "सखित्वं" सख्यं वयम् अस्मदीयवः आङ्गिरसाः स्तोतारः "आ वृणीमहे" प्रार्थयामहे ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १   २   ३ १ २   ३ १   २
येतेपवित्रमूर्मयोभिक्षरन्तिधारया ।
१ २
तेभिर्नःसोममृडय ॥ २ ॥ §

हे सोम ! "ते" तव "ये" ऊर्म्मयः तरङ्गाः ‖ "पवित्र"

---

*, † 'उ, सु—इति द्वावपि पदपूरणौ,—इति वि० ।

‡ ऋ० वे० ७, १, १८, ४ ।

¶ 'अभ्युन्दतः—आर्द्रं कुर्वन्,—इति वि० ।

§ ऋ० वे० ७, १, १८, ५ ।

‖ 'ऊर्म्मयः—लहर्यः, सोमसङ्घाताः —इति वि० ।

"धारया" "अभि चरन्ति" तेभिः तैः ऊर्मिभिः "नः" अस्मान् "मृड़य" सुखय॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र ३ २ ३ १ २ ३ १ २
सनःपुनानआभररयिंवीरवतीमिषम्।
१ २ ३ १ २
ईशानःसोमविश्वतः॥ ३ *॥ ५

हे सोम! "विश्वतः" सर्वस्य जगतः "ईशानः" ईश्वरः "सः" अभिषुतः "पुनानः" पूयमानः त्वं "नः" अस्मभ्यं "रयिं" धनं "वीरवतीं" पुत्राद्युपेतम् "इषम्" † तम् "आभर" आहर॥ ३॥ ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य प्रथमः खण्डः ‡॥ १ ॥

———000———

* ऋ० वे० ७, १, १९, १।

† 'इषं—इष्टिमन्नं वा—इति वि०।

‡ 'ऊर्जं वर्द्धिष्यमानम्'—इति वि०।

अथ द्वितीयखण्डे *—

प्रथमतृचे—प्रथमा।

३ २ ३ १   ३ १ २   ३ १ २
अग्निन्दुतंवृणीमहेहोतारंविश्ववेदसम्।
३ २३१२ ३१२
अस्ययज्ञस्यसुक्रतुम्॥ १॥ †

[अग्नेर्दूतत्वमेतन्मन्त्रव्याख्याने तैत्तिरीयब्राह्मणे समाम्नायते—'अग्निर्देवानां दूत आसीदुशनाकाव्योऽसुराणाम्'—इति] तादृशं देवं "दूतम्" अग्निम् अस्मिन् कर्म्मणि वृणीमहे भजामः। कीदृशं "होतारं" देवानामाह्वातारं "विश्ववेदसं" सर्वधनोपेतं [बहुव्रीहौ विश्वं सञ्ज्ञायाम् (६, २, १०६)"—इति पूर्वपदान्तोदात्तत्वम्] "अस्य" प्रवर्त्तमानस्य यज्ञस्य निदानत्वेन "सुक्रतु" शोभन-कर्माणं शोभन-प्रज्ञं वा॥ १॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २   ३ १ २
अग्निमग्निं हवीमभिःसदाहवन्तविश्पतिम्।
३ १ २ ३ २
हव्यवाहम्पुरुप्रियम्॥ २॥ ‡

* 'इदानीमाज्यानि'—इति वि०।

† ऋ० आ० १, ६, १, २ (१भा० ९७पृ०) = ऋ० वे० १, १, १२, १।

‡ ऋ० वे० १, १, १२, २।

[ यद्यप्यग्निः स्वरूपेणैक एव तथापि प्रयोगभेदादाहवनीयादिस्थानभेदाद्वा बहुविधत्वमभिप्रेत्य ] "अग्निम्-अग्निम्"—इति वीप्सा तं "हवीमभिः" आह्वानकरणैर्मन्त्रैः "सदा हवन्त" निरन्तरमनुष्ठातार आह्वयन्ति *। कीदृशम् ? "विश्पतिं" विशां प्रजानां होत्रादीनां पालकं "हव्यवाहं" यजमान-समर्पितस्य हविषः देवान् प्रति वोढारम् अतएव "पुरुप्रियं" बहूनां देवानां प्रीत्यास्पदम् ॥ [अग्निमग्निम्—"नित्यवीप्सयोः ( ८, १, ४ )"—इति वीप्सायां द्विर्भावः ; "तस्य परमाम्रेडितम् ( ८, १,२ )"—इत्युत्तरस्य आम्रेडित-सञ्ज्ञायाम् "अनुदात्तञ्च ( ८, १, ३ )"—इत्यनुदात्तत्वम्। हवीमभिः—'ह्वेञ् स्पर्द्धायां शब्दे च ( भ्वा०, उभ० ) ; आह्वानकरणभूतेषु मन्त्रेषु स्वव्यापारस्वातन्त्र्यात् कर्त्तृत्वविवक्षया "अन्येभ्योऽपि दृश्यन्ते ( ३, २, ७५ )"—इति कर्त्तरि मनिन् ; तस्य छान्दस ईड़ागमः ; बहुलं छन्दसि ( ६, १, ३४ )"—इति धातोः सम्प्रसारणम् ; परपूर्वत्वं ; गुणावादेशौ ; नित्स्वादाद्युदात्तत्वं ( ६, १, १९ )। सदा—"सर्वैकान्येत्यादिना ( ५, ३, १५ )" सर्वशब्दाद्दाप्रत्ययः "सर्वस्य सोऽन्यतरस्याम् ( ५, ३, ६ )"—इति सभावः ; व्यत्ययेनाद्युदात्तत्वम् ( ३, १, ८५ )। हवन्त—ह्वेञो लट् झस्य अन्तादेशः ( ७,१,३ ) ; टेरेभावश्छान्दसः ( ६, ४, ७६ ) शपि "बहुलं छन्दसि ( ६, १, ३४ )"—इति सम्प्रसारणम् ; "तिङ-

* 'हवीमभिः—होतव्यैः सदा हवन्तः आकयन्तः ; यानि होतव्यानि हवींषि, तैः पुरतोऽवस्थितैः सदाकयन्ते इति वि०।

तिङः ( ८, १, २८ )"—इति निघातः। विश्पतिं—"पत्यावै-श्वर्ये ( ६, २, १८ )"—इति पूर्वपदप्रकृतिस्वरे प्राप्ते, "परादि-श्छन्दसि ( ६, २, १९९ )"—इत्युत्तरपदाद्युदात्तत्वम्। हव्य-वाहम्—'वह प्रापणे ( भ्वा०, उभ० ), "वहश्च ( ३, २, ६४ )" —इति णिव प्रत्ययः ; कृदुत्तरप्रकृतिस्वरत्वम् ( ६, २, १३९ )। पुरूणां प्रियं—समासान्तोदात्तत्वम् ( ८, १, २२३ ) ॥ २ ॥

अथ तृतीया ।

१ २ ३२ २१ २ २ २३१२
अग्नेदेवाꣳइहावहजज्ञानोवृक्तबर्हिषे ।
२ ३ १ २ ३१२
असिहोतानईड्यः ॥ ३ * ॥ ६ †

हे "अग्ने !" "जज्ञानः"‡ अरण्योरुत्पन्नः त्वं "वृक्तबर्हिषे" आस्तरणार्थं छिन्नं न बर्हिषा युक्ताय। तं 'यजमान मनुग्रही-तुम् "इह" कर्मणि हविर्भुजो देवानावह—"नः" अस्मदर्थं "होता" देवानामाह्वाता त्वम् "ईड्योसि" स्तुत्यो भवसि ॥ ३ ॥ ६

द्वितीयतृचेषु—प्रथमा ।

३ २ ३१ २ ३१२३ १ २
मित्रंवयꣳहवामहेवरुणꣳसोमपीतये ।
२ ३ २ ३१२
याजातापूतदक्षसा ॥ १ ॥ §

---

* ऋ० वे० १, १, २२, ३ ।　　† "आग्नेय साम्यमुक्तम्"—इति वि० ।

‡ 'जज्ञानः—जायमानः, अथवा यजमानः'—इति वि० ।

¶ 'इदानीं मैत्रावरुणमुच्यते—इति वि० । साम्यमिति शेषः ।

§ य० वे० ३३, ४६=ऋ० वे० १, २, ८, ४ ।

"वयम्" अनुष्ठातारः "सोमपीतये" * सोमपानार्थं [ "दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ] "मित्र" "वरुणं" च उभावाह्वयामः । कीदृशावुभौ ? "या जाता" यौ जातौ सन्तौ प्रदेशं प्रादुर्भवन्तौ, "पूतदक्षसा" शुद्धबलौ † । [ पूञ् पवने ( क्र्या०, उभ० ); "निष्ठा (३, २, १०२ )"—इति क्तः, श्र्युकः किति ( ७, २, ११ )"—इति इट् प्रतिषेधः। पूतं दक्षो ययोस्तौ "बहुव्रीहौ प्रकृत्या ( ६, २, १ )"—इति पूर्वपद-प्रकृतिस्वरत्वम् ॥

"याजाता"-"जज्ञाना"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ २ ३ १ २ ३ १ २ ३ २ २ १ ३ २ १ २
ऋतेनयावृतावृधावृतस्यज्योतिषस्पती ।
२ ३ १र २र
तामित्रावरुणाहुवे ॥ २ ‡ ॥

"यौ" मित्रावरुणौ "ऋतेन" सत्यवचनेन¶ यजमानानुग्रह-कारिणा "ऋतावृधौ" ऋतमवश्यम्भावितया सत्यं कर्मफलं तस्य वर्द्धकौ "ऋतस्य" सत्यस्य प्रशस्तस्य "ज्योतिषः" प्रकाशस्य "पती" पालकौ § [ श्रुत्यन्तरे मित्रावरुणयोरदिति-पुत्रत्वेन श्रुतत्वात्

* "सन्त्वे इषेषपचमनविद्भूवीरा उदात्तः"—इति पा० ६ । २ । ९६ ।

† "पूतदक्षौ—पूतत्वेन दक्षत्वेन च सम्पन्नौ"—इति वि० ।

‡ ऋ० वे० १, २, ८, ५ ।

¶ 'ऋतेन—यज्ञेन—इति वि० ।

§ 'ज्योतिषः नक्षत्रजातस्य ज्योतिष्टोमस्य वा पतौ'—इति वि० ।

द्वादशादित्येष्वन्तर्भूतत्वेन ज्योतिषः पालकत्वं युक्तम्, श्रुत्यन्तरे च अष्टौ पुत्रासो अदितेरित्युपक्रम्य मित्रस्य वरुणस्येत्यादिकमाम्नातम् तौ मित्रावरुणौ। तथाविधैर्मित्रावरुणैः "सुपां सुलुगिति (७, १, ३९) पूर्वसवर्णदीर्घ आकारः] "हुवे" आह्वयामि। [ह्वेञ आत्मनेपदोत्तमपुरुषैकवचने सम्प्रसारणे (६, १, ३४) पूर्वरूपत्वे च (६, १, १०८) "बहुलं छन्दसि (२, ४, ७३)"—इति शपोलुक्; टेरेत्त्वम् (३, ४, ३९); "गुणे प्राप्ते "क्ङिति च (१,१,५)"—इति प्रतिषेधः; उवङादेशः (६, ४, ७७); "तिङतिङः (८, १, २८)"—इति निघातः ॥ २ ॥

अथ तृतीया।

१ २　　३ १ २　　२ १र　　२र　　२ १ २
वरुणःप्राविताभुवन्मित्रोविश्वाभिरूतिभिः।

१ २　　३ १ २
करतान्नःसुराधसः ॥ ३ * ॥ ७

अयं "वरुणः" देवः अस्माकं "प्राविता भुवत्" प्रकर्षेण रक्षको भवतु। "मित्रः" च "विश्वाभिः ऊतिभिः" सर्वाभिः प्राविता भुवत्। तावुभावपि "नः" अस्मान् "सुराधसः" प्रभूतधनयुक्तान् "करतां" कुरुताम्। [डुकृञ् करणे (उभ०) भौवादिकः, लोटस्तस्, तसस्ताम्, अकर्त्तरि शप्, गुणोरपरत्वम्,

* ऋ० वे० १, २, ८, ६।

शपः पित्त्वादनुदात्तत्वम् ( ३, १, ४ ); तिङश्च लसार्वधातुक-स्वरेण ( ६, १, १८६ ) धातुस्वरं ( ६,१, १६२ ) म्रियते ॥३॥ ७

इन्द्रमिद्गाथिनइति चतुर्ऋचं तृतीयं सूक्तम् *

तत्र प्रथमा।

२ ३ १२ ३ १ २ ३ १ ३१ २ १ १२ १ २

इन्द्रमिद्गाथिनोबृहदिन्द्रमर्केभिरर्किणः।

२ ३ १ २

इन्द्रंवाणीरनूषत ॥ १ † ॥

"गाथिनः" गीयमान-सामयुक्ता उद्गातारः "इन्द्रमित्" इन्द्रमेव "बृहत्" "त्वामिद्धिहवामहे ( छ० आ० ३, १, ५, २ )"—इत्यस्यामृच्युत्पन्नेन बृहन्नामकेन ( आ० गा० १, १, २७) साम्ना "अनूषत" स्तुतवन्तः। [णु स्तुतौ ( तु०, प० ); "णो नः ( ६, १, ६५ )"—इति नत्वम्; लुङि व्यत्ययेनात्मनेपदम् ( ३, १, ८५ ); झस्य अदादेशः ( ७, १, ५ ); सिच इड़भावः उकारस्य दीर्घत्वं छान्दसम् ( ६, १, १३३ ); धातोः कुटादित्वात् सिचो ङित्त्वेन ( १, २, १ ) गुणाभावः ( १, १, ५ ) ] "अर्किणः" अर्चन-हेतु-मन्त्रोपेता होतारः "अर्केभिः" उक्थ-रूपैर्मन्त्रैरनूषत। ये त्ववशिष्टा अध्वर्यवः ते "वाणीः" वाग्भिः" यजूरूपाभिः इन्द्रम् अनूषत [ अर्कस्य मन्त्रपरत्वं यास्केनोक्तम् ( ५, ४ ) 'अर्कोमन्त्रोयदनेनार्चन्तीति' ] ॥ १ ॥

---

* 'ऐन्द्रमाज्यमिदर्'—इति वि०।

† छ० आ० २, १, १, ५ ( १भा० ४२७ पृ० ) = ऋ० वे० १, १, १२, १।

अथ द्वितीया ।

२ ३२७ ३ २ ३ १ २ ३१ २३१ २
इन्द्रइद्धर्य्योस्सचासम्मिश्लआवचोयुजा ।

१ २३१ १२ १ २
इन्द्रोवज्रीहिरण्ययः ॥ २ * ॥

"इन्द्रइत्" इन्द्रएव "हर्य्योः" हरिनामकयोरश्वयोः "सचा" सह युगपत् "आ सम्मिश्लः" सर्वतः सम्यक् मिश्रयिता । कीदृशयोर्हर्योः ? "वचोयुजा" इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः । अयम् "इन्द्रः" "वज्री" वज्रयुक्तः "हिरण्ययः सर्वाभरणभूषितइत्यर्थः ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ १ २
इन्द्रवाजेषुनोवसहस्रप्रधनेषुच ।

३१ ३१ २ ३ १ २
उग्रउग्राभिरूतिभिः ॥ ३ † ॥

हे "इन्द्र !" "उग्रः" शत्रुभिरप्रधृष्यः त्वम् "उग्राभिः" अप्रधृष्याभिः "ऊतिभिः" अस्मद्रक्षणपरपद्धाभिः "वाजेषु" युद्धेषु "नः" अस्मान् "अव" रक्ष । तथा "सहस्रप्रधनेषु च" सहस्र-सङ्ख्याक-गजाश्वादि-लाभयुक्तेषु महायुद्धेष्वपि रक्ष ॥ ३ ॥

---

* छ० आ० प० १, २, ३ ( २भा० २९० पृ० ) = ऋ० वे० १, १, १३, २ ।

† छ० आ० प० १, २, ४ ( २भा० २९८ पृ० ) = ऋ० वे० १, १, १३, ३ ।

अथ चतुर्थी।

१ २ ३ २ ३१ १ ३ १र २र ३ १
इन्द्रोदीर्घायचक्षसआसूर्य्यंरोहयद्दिवि।
२उ ३ १ २
विगोभिरद्रिमैरयत्॥ ४ *॥ ८ †

अयम् "इन्द्रः" "दीर्घाय" प्रौढाय निरन्तराय "चक्षसे" दर्शनाय "दिवि" द्युलोके "सूर्य्यमारोहयत्" पुरा वृत्रासुरेण जगति यदापादितं तमस्तन्निवारणेन प्राणिनां दृष्टिसिद्ध्यर्थम् आदित्यं द्युलोके स्थापितवानित्यर्थः। स च सूर्य्यः "गोभिः" स्वकीय-रश्मिभिः "अद्रिम्" मेघम् "व्यैरयत्" विशेषेण दर्शनार्थं प्रेरितवान् प्रकाशितवानित्यर्थः [ अथवा इन्द्रएव "गोभिः" जलैर्निमित्तभूतैः "अद्रिं" मेघं "व्यैरयत्" विशेषेण प्रेरितवान्। पञ्चदश-सङ्ख्याकेषु रश्मि-नामसु 'खेदयः' (१) 'किरणाः' (२) 'गावः' (३)—इति पठन्ति ( निघ० १, ५ ); त्रिंशत्सङ्ख्याकेषु मेघनामसु 'अद्रिः'(१) 'ग्रावा'(२)—इति पठितम् ( निघ० १, १० )॥ ४॥ ८

* ऋ० वे० १, १, १३, ५।
† 'इद्वायोमैन्द्राग्नमाज्यम्'—इति वि०।

अथ तृचात्मकं चतुर्थं सूक्तं—

प्रथमा ।

१ २ ३ १र २र ३१ २३ १र २र
इन्द्रेअग्नानमोबृहत्सुवृक्तिमेरयामहे ।

३ १र २र ३१२
धियाधेनाअवस्यवः ॥ १ * ॥

"अवस्यवः" रक्षणकामाः वयम् "इन्द्रे" देवे "अग्ना" अग्नौ च "बृहत्" प्रंहणं वर्द्धकं † "नमः" हविर्लक्षणमन्नं ‡ "सुवृक्तिं" सुप्रवृत्तां स्तुतिञ्च ¶ "आ ईरयामहे" प्रेरयामः। तथाच "धिया" कर्म्मणा युक्ताः § "धेनाः" || [ वाङ्नामैतत् ( निघ० १, ११, २९ )] स्तुतिरूपा वाचश्च अभिप्रेरयामः ॥ १ ॥

अथ द्वितीया ।

१र २र३१२ ३ १र २र ३१२
ताहिशश्वन्तईडतइत्थाविप्रासऊतये ।

३ २ ३ १ २
सबाधोवाजसातये ॥ २ ** ॥

---

* ऋ० वे० ५, ९, १०, ४।

† 'बृहत्—महत्'—इति वि०।

‡ 'नमः—नमस्कारम्'—इति वि०।

¶ 'सुवृक्तिं—शोभनां वृक्तिं वरणम्'—इति वि०।

§ 'धिया बुद्ध्या'—इति वि०। "धीः"—इति कर्म्मनामसु निघण्टौ एकविंशतितमं पदम् ( २, १ )।

|| 'धेनाः—धेट् पाने ( भ्वा० प० ), पानसमर्थाः'—इति वि०।

** ऋ० वे० ५, ६, १७, ५।

"ता हि" तौ खलु * इन्द्राग्नी "प्रयस्वन्तः" बहवः "विप्रासः" मेधाविनः जनाः "ऊतये" रक्षणाय "इत्थम्" अनेन प्रकारेण "ईडते" स्तुवन्ति। तथा "सबाधः" समानं परस्परं बाध्यमाना जनाः "वाजसातये" अन्नसातये अन्नलाभाय ताविन्द्राग्नी ईडते। यद्वा 'वाजसातिः'—इति सङ्ग्रामनाम (निघ० २, १७, २६) सङ्ग्रामार्थम् ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ २ २ ३ १ २
ताबाङ्गीर्भिर्विपन्यवःप्रयस्वन्तोहवामहे।

३ १ २ ३ १ २
मेधसातासनिष्यवः ॥ २ † ॥ ९

"विपन्यवः" स्तोत्रमिच्छन्तः "प्रयस्वन्तः" हविर्लक्षणेनान्नेनोपेताः ‡ "सनिष्यवः" सनिं धनमात्मन इच्छन्तः वयं "मेधसाता" मेधानां यागानां ¶ "सातौ" सम्भजने निमित्तभूते

* 'हीति यस्मादर्थे'—इति वि०।

† ऋ० वे० ५, ६, १७, ६।

‡ 'प्रयस्वन्तः—प्रकर्षेण यजमान स्थान् प्रति गच्छन्तः'—इति वि०।

¶ "मेधः"—इति निघण्टौ यज्ञनामसु चतुर्थं पदम् (३, १७)।

सति हे इन्द्राग्नी ! "ता" तौ "वां" युवां "गीर्भिः" स्तुतिभिः "हवामहे" ॥

"विपन्यवः"-"विपन्यवे"—इति पाठौ ॥ ३ ॥ ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य
द्वितीयः खण्डः * ॥ २ ॥

---

वृषापवस्वेति तृतीयखण्डे †—

प्रथमतृचे—प्रथमा ।

१ २　३ १२　३ १ २　३ २
वृषापवस्वधारयामरुत्वतेचमत्सरः ।
२ ३ १ २ ३ १ २
विश्वादधानओजसा ॥ १ ‡ ॥

हे सोम ! त्वं "वृषा" स्तोतॄणामभिमत-फलस्य वर्षकः सन् "धारया" त्वदीयया "पवस्व" द्रोणकलशमागच्छ [ पवतिर्गति-कर्मा ( निघ० २, १४, १०८ ) जागतस्त्वं यदा अस्माभिः इन्द्राय हीयसे तदा "मरुत्वते" सहाया मरुतो यस्य सन्ति तस्मै इन्द्राय "मत्सरः" मदकरश्च भव । कीदृशः ? "विश्वा" विश्वानि सर्वाणि व्याप्तानि वा धनानि "ओजसा" आत्मीयेन बलेन

---

* 'उक्तं प्रातःसवनम्'—इति वि० ।

† 'इदानीं माध्यन्दिनं सवनमभिधीयते'—इति वि० ।

‡ ऋ० आ० ५, २, ४, ३ ( २भा० १०६० ) ऋ० वे० ७, २, २, ४ ।

युक्तः सन् स्तोतृभ्यः तानि "दधानः" प्रयच्छन् त्वं मादयिता भवेति समन्वयः ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ २ १ २ ३ १ २
तन्त्वाधर्त्तारमोण्योऽ३ऽव्यवमानस्वर्दृशम् ।
३ १२ ३२ ३ १ २
हिन्वेवाजेषुवाजिनम् ॥ २ * ॥

हे "पवमान" पूयमान पुनान वा सोम ! "ओण्योः" [ द्यावापृथिवी नामैतत् ( निघ० ४, ३०, १५ ) ] तयोः "धर्त्तारं" धारकम् अतएव "स्वर्दृशं" सर्वस्य सूर्य्यवत् द्रष्टारं, सर्वैः द्रष्टव्यं वा । "वाजिनं" बलवन्तं तं पूर्वोक्तगुणं प्रसिद्धम् "त्वा" त्वां "वाजेषु" सङ्ग्रामेषु त्वां प्रेरयामि [ यद्वा "वाजेषु" विषयेषु प्रेरयामि, अन्नादिकं प्रयच्छेत्यर्थः † ] ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ १उ ३ १ २ ३ १ २
अयाचित्तोविपानयाहरिःपवस्वधारया ।
२ ३ १ २
युजंवाजेषुचोदय ॥ ३ ‡ ॥ १० ¶

* ऋ० वे० ७, २, ३, १ ।

† 'वाजेषु—अन्नेषु । सप्तम्येषा, अधिकरणभूतेषु । वाजिनं अन्नवन्तं वेगवन्तं वा'—इति वि० ।

‡ ऋ० वे० ७, २, ३, २ ।

¶ 'इह यौक्ताश्वं साम'—इति वि० । 'यौक्ताश्व-प्रभृतीनि सामानि तेषां नाम्नां वार्षप्रतिपत्तिः'—इति च वि० ।

हे "पवमान" सोम ! "अया" * [ अय पय गतौ ( भ्वा०, आ० ) पचाद्यच् ( ३, १, १३४ ), तृतीयाया आकारः ( ७, १, ३९ ) ] कर्मार्थमितस्ततो गच्छन्तीभिः "विपा" [ विप प्रेरणे ( चु०, उभ० ) हवींष्यग्नौ प्रेरयन्तीति विपा अङ्गुलयः । एकवचनं छान्दसं प्रत्येक-विवक्षया वा ] एताभिर्मदीयाभिरङ्गुलिभिः "चितः" स्नातः निर्गतः अभिषुतः "हरिः" हरितवर्णः त्वं "धारया" सन्ततया "पवस्व" द्रोणकलशं ग्रहांश्च गच्छ । किञ्च "युजं" † सखायम् इन्द्रं "वाजेषु" सङ्ग्रामेषु ‡ "चोदय" प्रेरय । यदास्माभिरिन्द्रार्थं सोमा दीयन्ते तदानीमिन्द्रः स्तुत्यानेन हृष्टः सन् शत्रून् हन्तीत्यर्थः ॥ ३ ॥ १०

॥ यौक्ताश्वम् ॥ औहोहोहायि । वृषा । पवस्वा३ धारयाइ । मारुत्वा२३४तायि । ओयि । चमा२३ । चमा२त्सा२३४राः । औहोहोहायि । विश्वा । दधा२ ना२३४ओ । जासा२३४औहोवा ॥(१) औहोहोहायि । तन्वा । धर्त्तारा३मोणायो३ः । पावा२मा २ ३ ४ ना ।

---

* 'अया—अनया धिया विश्वस्य पालयित्र्या'—इति वि० ।

† 'युजं—योगम्'—इति वि० ।

‡ 'वाजेषु—अन्नेषु'—इति वि० ।

१ ७ १ ३ ५ २र १ २
ओयि । सुवा२३ । सुवा२ हूँ २३४शाम् । औहोहोहा
१ २ १र २ ५ २ २
यि । हिन्वायि । वाजा२यिषू२३४वा । जायिना२३४
२ ५र २र १ २ १ २ र १
औहोवा ॥(२) औहोहोहायि । अया । चित्तोवी३पा
२ १ ३ ५ १ ७
नाया३ । हारा२यिः । पा२३४वा । ओ । स्वधा२३ ।
१ ३ ५ २र १ १ १ २ १र
स्वधा२रा२३४या । औहोहोहायि । युजाम् । वाजा२यि
३ ५ २ ३ ५र र २ ३
षू२३४चो । दाया २ ३ ४ औहोवा । ओयि । ज्वर
२
आ(३) ॥ १९ * ॥ [१]

१ २ १ २
॥ सन्तनि ॥ वृषाहाउ । पावस्वधा३१उवा२३ । रा
५ २ १ २र ३ २ २ १ र २
२३४या । मरुत्वतेचमत्सरा१ः । विश्वाहाउ । दाधान
१ ५ १ र १ १र २र १र
ओ३आउवा२३ । जा२३४सा ॥(१) तन्वाधर्त्तारमोस्योः
२र १ ३ २१११ १ १ १ र २
पवमानसुवर्हूँ आ२३४५म् । हिन्वेहाउ । वाजेषुवा३
५ २ १र २ १र २ १र २र
१उवा२३ । जा२३४यिनाम् ॥(२) अयाचित्तोविपानया

* ऊ० गा० १प्र० २ख० १९सा० ।

१ २ १र ३११११ १ २ १र१ १
हरिःपवस्वधारयार२३४५। युजा०ऽहाउ। वाजेषुचोऽ३श्र।
५
उवा२३। दा२३४या(३) ॥ १ * ॥ [२]

२र १ २ १ २ २ ५
॥ ऐडसौपर्णम् ॥ वृषापवोवा। स्वाधारार२३४या।
२ १ २ १ ७ ६ ५ १
मरुत्वतायि। चमा२त्सा२३४राः। वा२यिश्वा। दा२
२ १ २र १ २ ४ ५ २ र १ २
३धा। नाश्रोजसा। औ३होवा ॥(१) तन्त्वाधर्तोवा।
१ २ ३ ५ २१ २र१ ७ ३ ५
रामोणार२३४योः। पवामाना। सुवा२ह्रॅ २ ३ ४ शाम्।
२ १ २र १ ४ ५
हा२यिन्वे। वा२३जायि। पूवाजिनाम्। औ३होवा ॥(२)
२ र १ २ १ २ ३ ५ २ १ २ १
अयाचित्तोवा। वायिपानार२ ३ ४ या। हरायिःपवा।
७ ३ ६ १ २ १ २र १
स्वधाररार२३४या। यू२जाम्। वा२३जायि। पूचोदया।
२ ४ ५ ४
औ३होवा। होपुड़ि। डा(३) ॥ २ † ॥ [३]

१ २र १ २ १ २
॥ रौहितकुलीयोत्तरम् ॥ वृषापवस्वधा। रया२।
१ र२१ २ १ १ २ २
मरुत्वतेचमत्सार२३राः। वायिश्वा२दाधा२३। नश्रो२३४

* ऊ० गा० ४प्र० १अ० १सा०। † ऊ० गा० ४प्र० १अ० २सा०।

५ ४ ५ १ २ २१२२१ २
वा । जा५सो६हायि ॥(१) तन्त्वाधर्त्तारमो । णियो

१ २ २१ २ १ १
२ः । पवमानसुवर्द्दृ २३शाम् । हायिन्वे २वाजा२३यि ।

२१ ५ ४ ५ ११२२ २ २ १
षुवो२३४वा । जा५यिनो६हायि ॥(२) अयाचित्तोविपा ।

२ १ २१२ २. १ १
नया २ । हरिःपवस्वधारा२३या । यूजा २वाजा२३यि ।

२ १ ५ ४ ५
षुचो२३४वा । दा५यो६हायि(३) ॥ २ * ॥[४]

५ २ १ ४ ५२ २ १ २
॥ आमहीयवम् ॥ वृषोपा३वस्वधारया । मरुत्वा१

२ १२२ १ २
जा २यि । यमा२३त्सराः । विश्वादधा । नओ२३जसा

५ २ २ ४२ ५२ २ १
उ । वा३ ॥(१) तन्त्वाधा३र्त्तारमोणियोः । पवामा१

१ २ १२२२ १
ना २ । सुवा२३हृशाम् । हिन्ववाजायि । षुवा २ ३

२ ५ २ २ ४२ ५२ २ १
जिनाउ । वा३ ॥(२) अयाचा३यित्तोविपानया । हरा

२ १ २ १ २२ १
यिःपा१वा २ । स्वधा२३रया । युजंवाजायि । षुचोर

२ २२ १११२
३दयाउ । वा३ । स्तौषे२३४५(३) ॥ १ † ॥ [५]

* ज० गा० ४प्र० १अ० २सा० । † ज० गा० ६प्र० २अ० १सा० ।

२र　र　२ र　१
॥ ह्राविष्मतम् ॥ हाउवृषापवस्वधारयाहाउ । मरु
२　१ २ ३　५　२　२
त्वता३यि । चामत्सा२३४राः । ऐ२ह्रो१आ २ ३ यिह्री ।
१　१ २　१र　२　५र र
विश्वादा३धा । नओ । जा२सा २ ३ ४ औहोवा ॥(१)
२र　र　र　र र　१ र २　१ २
ह्राउतन्त्वाधर्त्तारमोण्योर्ह्राउ । पवमाना३ । सूवर्द्द२३
५　२　२　१　२ २
४शाम् । ऐ२ह्रो१आ२३यिह्री । हिन्वेवा३जायि । पु
१र　३　५र र　२र र　र　र
वा । जा२यिना२३४औहोवा ॥(२) ह्रावयाचित्तोविपान
र　१　०　१ २ ३　५
याह्राउ । हरिःपवा३ । स्वाधारा२३४या । ऐ२ह्रो१आ
२　१　२　२　१र　३　५र र
२३यिह्री । युजांवा३जायि । पृचो । दा२या२३४औहो
१　३१११११
वा । हविष्मते२३४५(३) ॥ १ * ॥ [६]

२ र र १　२
॥ यौक्ताश्वोत्तरम् ॥ वृषाऔहोहोहायि । पवा ३
१ र　२　१　३　५　३२　१
स्वाधा१राया३ । मारु२त्वा२३४तायि । चमा३ । ओयि ।
०　२　५　२ र र र १ २　१　२
चमा२त्सा२३४राः । विश्वाऔहोहोहायि । दधा२ना

* ऊ० गा० ७अ० १ख० १सा० ।

२३४ओ । जा२सा२३४औहोवा ॥(१) तन्त्वाऔहोहो
हायि । धर्त्ता३रामो१णायो३ः । पावा२मा२३४ना ।
सुवा३ । ओयि । सुवा२ह२३४शाम् । हिन्वाऔहो
होहायि । वाजा२यिषू२३४वा । जा२यिना२३४औहो
वा ॥(२) अयाऔहोहोहायि । चित्तो३वायिपा१ना
या३ । हारा२यिःपा२३४वा । स्वधा३ । ओ । स्वधा
२रा२३४या । युजाऔहोहोहायि । वाजा२यिषू२३४
वो । दा२या२३४औहोवा । ओयि । जू२३४
वा(३) ॥ २ * ॥ [७]

॥ आजिगम् ॥ वृषापावा । स्वधाराया । मरुत्व
ते । चामत्सा२३राः । विश्वादाधा । नओजा२३सा३
४३ ॥(१) तन्त्वाधार्त्ता । रमोणायोः । पवमान । स्वव

* ऊ० गा० ७प्र० १अ० २सा० ।

२ २ १र २
हॅ२३शाम्। हिन्वेवाजायि। षुवाजा२३यिना३४३म्॥(२)
१ २ १ २ १ २ १ २
अयाचायित्तो। विपानाया। हरिःपव। स्वाधा१रा२
२ १ २ १र २ १
३या। युजांवाजायि। षुचोदा२३या३४३। ओ२३४५
ई। डा(३)॥ १४ *॥ [८]

२ र र २ ४ ३ ४र५
॥ स्वारसौपर्णम्॥ वृषापवस्वधारा३या। मरुत्वतेच
र १ ३ ५ १ २ २ १र
मा। ऊम्। त्सा२३४राः। वायिश्वा३उवा। दधा।
२ १ ५ ४ ५ २ र र र
नओ२३४वा। जा५सोई्हायि॥(१) तन्त्वाधर्त्तारमोणा
२ ३ ४ ५ र र १ ३ ५ १
३या३यौः। पवमानस्तुवा। ऊम्। ह२३४शास्। हायि
२ २ र १र २ १ ५ ४ ५
न्वा३उवा। वाजे। षुवो२३४वा। जा५यिनोई्हायि॥(२)
२ र र र २ ३ ४ ३ ४ ५र १ ३
अयाचित्तोविपाना३र्या। हरिःपवस्वधा। ऊम्। रा२
५ १ २ २ र १र २ १ ५ ४
३४या। यूजा ३ उवा। वाजे। षुचो२३४वा। दा५
५
योई्हायि(३)॥ १५ †॥ [९]

* ऊ० गा० ११प्र० २अ० १४सा०। † ऊ० गा० ११प्र० २अ० १५सा०।

२ र १ १ २ र १
॥ सुहूपोत्तरम् ॥ वृषापवौहो२ । इया । स्वधारा

२ १ १ २ १ र
या२ । मरुत्वतौहो२ । इया । चमत्सारा२ः । विश्वा

१ १ २ १र २ २ र
दधौहो२ । इया । नश्रोजार२सा२ ४ ३ ॥(१) तन्त्वा

१ १ २ र १ २ १र
धत्ताहो२ । इया । रमोण्ययो२ः । पवमानौहो२ ।

१ २ १ र १र १ २
इया । सुवर्दृशा२म् । हिन्वेवाजौहो२ । इया । पु

१र २ २ र १ १
वाजा२३यिना ३ ४ ३म् ॥(२) अयाचित्तौहो२ । इया ।

२ र १ १ १ २ र १
विपानाया२ । हरिःपवौहो२ । इया । स्वधाराया२ ।

१र १ २ १र २ १
युजंवाजौहो२ । इया । पुचोदा२३या३४३ । ओ २ ३

४५ई । डा(३) ॥ १८ * ॥ [१०]

२र र र २
॥ ऋषभःपावमानम् ॥ हाहाउवृषापवा । हा३ । हा

१ ३ ५ १ र २ २ २
३यि । स्वाधार्१रा २ ३ ४ या । मरुत्वतेचमा१त्सा३रा: ।

र ३ ५ १ २ ४ ४ ४ ५
विश्वादार२३४धा । ओमो३ । नश्रोवा । जा५सोई३हा

---

* ज० गा० १८प्र० १ख० १८सा० ।

यि ॥(१) रामोऽ२णा२३४यो: । पवमानसुवा१६ऽ२श्राम् ।
हिन्ववा२३४जायि । ओमो२ । षुवोवा । जापूयिनो६
हायि ॥(२) हाहावयाचित्ता: । हा२ । हा३यि । वा
यिपाऽ२ना२३४या । हरि:पवखधा१राया । युजंवा२३४
जायि । ओमो२ । षुचोवा । हापूयो६हायि(३)॥१८*॥[११]

॥ हरिश्रीनिधनम् ॥ वृषापवखधारया । वृषापवा ।
खधारयाऽ२ । मरुत्वतेचमाहोऽ२ । त्सारा२३: । हाउ
वा । विश्वादा२३धा । नओ । जाऽ२सा२३४औहोवा ॥(१)
तन्वाधर्त्तारमोणियो: । तन्वाधर्त्ता । रमोणियोऽ२: ।
पवमानसुवाहोऽ२ । हश्रा२३म् । हाउवा । हिन्वेवा
२३जायि । षुवा । जाऽ२यि । ना२३४औहोवा ॥(२) अ
याचित्तोविपानया । अयाचित्ता: । विपानयाऽ२ । हरि:

* ऊ० गा० १८प्र० १अ० १९सा० ।

पवस्वधाहो२। राया२३। हाउवा। युजांवार३जा

यि। पुचो। दा२या२३४औहोवा। हरीश्रीर२३

४५:(३)॥१*॥[१२]

॥ गौषूक्तम्॥ वृषापवस्वधौ। हौहोवाहायि। रया।

मरुत्वतेचमौ२। ऊवायि। ऊवा२यि। त्सारा२:। वि

श्वादधानश्नौ२। ऊवायि। ऊवा२यि। जासा२३।

हो२वा२३४औहोवा॥(१) तन्त्वाधर्त्तारमौ। हौहोवा

हायि। ण्यियोः। पवमानस्तुवौ२। ऊवायि। ऊवा२

यि। दृशा२म्। हिन्वेवाजेषुवौ२। ऊवायि। ऊवा

२यि। जासा२३। हो२वा२३४औहोवा॥(२) अया

चित्तोविपौ। हौहोवाहायि। नया। हरि:पवस्वधौ

२। ऊवायि। ऊवा२यि। राया२। युजंवाजेषु

* ऊ० गा० २०प्र० १ख० १सा०।

१ १ १ २
चौ २ । ऊवायि । ऊवा २यि । दाया२ ३ । हा२वा२
५र र २ १ र २ २ १ १ १ १
३४औहोवा । अग्निराऊता२३४५ः(३) ॥ ८ * ॥ [१३]

१ र र १ २ १
॥ साकलम् ॥ वृषापवा२स्वधारया । मरुत्वतेचमत्स
२ १ १ र २ १ १ २
२३राः । वायिश्वा२ । दाधानओ२३ । ऊम् । जा३
५ १ र र १ र
४ ५ सोई्हायि ॥(१) तन्त्वाधर्त्ता२रमोणियोः । पवमान
२ १ २ १ १ ११ १
सुवहृ२ ३शाम् । हायिन्वे२ । वाजेषुवा २ ३ । ऊम् ।
२ ५ १ र र १
जा३४५यिनो६हायि ॥(२) अयाचित्तो२विपानया । ह
२ १र २ १ १ र २ र १
रिःपवस्वधारा२३या । यूजा२म् । वाजेषुचो२३ । ऊम् ।
२ ५
दा३४३यो६हायि(३) ॥ १० † ॥ [१४] १०

अथ द्वितीयत्र्चे—प्रथमा ।

२ ३ १ २ ३ १ २ ३
वृषाशोणोअभिकनिक्रदद्गा
३ १ २ ३ २ ३ २
नदयन्नेषिपृथिवीमुतद्याम् ।

* ऊ० गा० २१प्र० २अ० ८सा० ।  † ऊ० गा० २०प्र० २अ० १०सा० ।

१ २ ३ १र २र ३ १
इन्द्रस्येववग्नुराश्टण्वआजौ
२ ३ १ २ ३ २ ३ २
प्रचोदयन्नर्षसिवाचमेमाम् ॥ १ * ॥

"शोणः" शोणवर्णः † "वृषा" कश्चिद् वृषभः "गाः" पशून् "अभि" लक्ष्य "कनिक्रदत्" ‡ शब्दं करोति [ एवं "गाः" स्तुतीः "अभि कनिक्रदत्" अभिशब्दायमानः ]। तदेवाह— "नदयन्" शब्दमुत्पादयन् हे सोम ! त्वं "पृथिवीम्" "उत" अपिच "द्याम्" एतौ लोकौ "एषि" गच्छसि। किञ्च "वग्नुः" [ वग्नु वाङ्नामैतत् ( निघ० १, ११, २५ ) तस्य ] वाक्स शब्दः "आजौ" सङ्ग्रामे "इन्द्रस्येव" इन्द्रशब्द इव "शृण्वे" सर्वैः श्रूयते। ततः "प्रचेतयन्" आत्मानं सर्वेषां प्रज्ञापयन् "इमां" "वाचम्" "अर्षसि" समन्तादागमयसि उच्चैः शब्दायत इत्यर्थः ॥ १ ॥

अथ द्वितीया ।

३२ ३ १२३१२
रसाय्यःपयसापिन्वमान
३१२ ३१२३ २ २
ईरयन्नेषिमधुमन्तमंशुम् ।

* ऋ० वे० ७, ४, १३, २। † 'शोणः—रक्तवर्णः'—इति वि०।

‡ "दाधर्त्ति-दर्द्धर्त्ति-दर्द्धर्षि-बोभूतु-तेतिक्ते-ऽलर्ष्या-ऽऽपनीफणत्-संसनिष्यदत् करिक्रत्-कनिक्रदद्-भरिभ्रद्-दविध्वतो-दविद्युतत्-तरित्रतः—सरीसृपतं—वरीवृजन् मर्मृज्या-ऽऽगनीगन्तीति च (७, ४, ६५)"—इति पाणिनिस्मरणात् क्रन्देर्लुङि चुलेरङ

१ २   ३ १ २   ३ १
पवमानसन्तनिमेषिकृण्व
२र   ३ १ २
न्निन्द्रायसोमपरिषिच्यमानः ॥ २ * ॥

हे सोम ! "रसाय्यः" [ रसेरौणादिक आय्य-प्रत्ययः ( उ०, ३, ९६ ) ] आस्वाद्यः † "पयसा" "पिन्वमानः" क्षरंस्त्वम् "ईरयन्" "मधुमन्तं" माधुर्य्योपेतम् "अंशुम्" रसभावम् "एषि" प्राप्नोषि ["अंशुमष्टमात्रो भवति"—इति यास्कः ( निरु० , ) ]। अनेन सोमरसोऽभिधीयते। किञ्च हे सोम। "परिषिच्यमानः" अद्भिः परिषिक्तो भवंस्त्वं "पवमानः" पवित्रे पूयमानः सन् "सन्तनिं" [ तनु विस्तारे ( त०, प० ) इ-प्रत्ययः ] सन्ततां धारां "कृण्वन्" कुर्वन् "इन्द्राय" इन्द्रार्थम् "एषि" गच्छसि ॥ २ ॥

अथ तृतीया ।

३ १ २   ३ १र २र
एवापवस्वमदिरोमदायो
३ १ २ ३ १ २   ३ २
दग्राभस्यनमयन्वधस्नुम् ।
१ २ २ ३ १ २   ३ १ २
परिवर्णम्भरमाणोरुशन्तं
३ १ २   ३ १ २   ३ २
गव्युर्नोअर्षपरिसोमसिक्तः ॥ ३ * ॥ ११

द्विर्वचनमभ्यासस्य चुत्वाभावो निगमत्वात्। लुङ् चात्र "छन्दसि लुङ्-लङ्-लिटः ( ३, ४, ६ )"—इति धात्वर्थ-सम्बन्धमात्रे सार्वकालिकः।

* ऋ० वे० ७, ४, १३, ४ ।   † 'रसाय्यः—रसवान्'—इति वि० ।

‡ ऋ० वे० ७, ४, १३, ५ ।

हे सोम! "मदिरः" मदकरः त्वम् "उदग्राभस्य" * ["क्रिया ग्रहणं कर्त्तव्यम्"—इति कर्मणः सम्प्रदानसञ्ज्ञा। चतुर्थ्यर्थे बहुलमिति षष्ठी ] उदग्राभम् उदकग्राहिणं मेघं "नमयन्" वृष्ट्यर्थं प्रह्वीकुर्वन्। कीदृशम्? "वधस्नुम्"† वृत्रबधेन प्रस्नवन्तम् "मदाय" मदार्थमेव "पवस्व" पात्रेषु चर। किञ्च "रुशन्तम्" आरोचमानं श्वेतं "वर्ण" "परि भरमाणः" परितो बिभ्रत् "सिक्तः" पवित्रे सिच्यमानः त्वं "गव्ययुः" अस्माकं गा इच्छन् "पर्यैषि" परिगच्छ ॥

"वधस्नुं"-"वधस्नैः"—इति पाठौ । ३ ॥ ११

॥ इन्द्रवद्वासिष्ठम् ॥ औहोवाहा ३ होयि । इहा । वृषाशोणो । अभिक्र । निक्रदद्गाः । नदयन्नायि । यी ३ पृथि । वीमुतद्याम् । इन्द्रस्येवा । वग्नुरा । शृण्व आजाउ । प्रचोदयान् । अर्षसि । वा३४३ । चा३मा ५ यिमा ६५६म् ॥(१) रसायियाः । पयसा । पिन्वसा नाः । ईरयन्नायिषी३मधु । मन्तम॑ऽशूम् । पवमाना ।

---

* 'उदग्राभस्य—उदक-सङ्घातस्य वधस्नुम्, उदकसङ्घातस्य वधः येन क्रियते भवति परिवर्त्तः सोमेन स वधस्नुः'—इति वि० ।

† मन्त्रे तु प्रायो वधोऽन्त्यस्यवकारादिर्दृश्यते ।

२ १ २ ३ ४ ५ २ १र २ १ २
सन्तनिम्। एषिकृण्वान्। इन्द्रायसो। मा३परि। षा

२ ४ २र १र २
३४३यि। च्या३मापुनाई५ई: ॥(२) एवापवा। स्वा ३

१ २ ३ ४ ५ २ १ र २ १ २ र १
मदि। रोमदाया। उदग्राभा। स्या ३ नम। यन्वध

५ २ १ २ १ र २ ३ ४ ५ १र २र
स्नुम। परिवर्णम्। भरमा। णोदमन्ताम्। औहो

३ २ १ ३ २ १ र २ १ ४
वाहा३होयि। इन्द्रा। गव्युर्न्नीआ। षा३परि। सो३

२ ४
४३। मापुसा५यिक्ता६५६:(३) ॥ २ * ॥ [१]

२ २ २ र १र २ १
॥ पार्थम् ॥ ओ३हो३होयि। वृषाशोणो। अभिक।

२ ३ ४ ५ २ १ २ १ २ ३ ४ ५
निक्रदद्गाः। नदयन्नायि। षी३पूयि। वीमुतद्याम्।

२ १र २ १ र २ २ ४ ५ २ र १ २
इन्द्रस्येवा। वग्नुरा। शृण्वआजाउ। प्रचोदयान्। अ

१ २ २ ४ २ र १
र्पसि। वा३४३। चा३मा ५ यिमाई५ईम् ॥(१) रसायि

२ १ र २ ३ ४ ५ २र १ २ १
याः। पयसा। पिन्वमानाः। ईरयन्नायि। षी३मधु।

२ ३ ४ ५ २ १र २ १ २ ३ ४ ५
मन्तमᳫंशुम्। पवमाना। सन्तनिम्। एषिकृण्वान्।

* ऊ० गा० २प्र० १अ० २सा०।

२ र १ २ १ २ २ ४
इन्द्रायमो । मा२परि । षा२४३यि । च्या२मा५ना६

२र र १ २ १ २ ३ ४ ५ २
५६ः ॥(२) एवापवा । स्वा२मदि । रोमदाया । उद

१र २ १ २ ३ ५ २ १ २१
आभा । स्या२नम । यन्वधस्नूम् । परिवणाम् । भर

र २ ३ ४ ५ २ २ २ १र
मा । णोरूग्रताम् । ओ२हो२होयि । गव्युर्नोआ ।

२ १ २ २ ४
षा२परि । सो२४३ । मा२सा५यिक्ता६५६ः(३) ॥ ६* ॥[२]११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य
तृतीयः खण्डः † ॥ ३ ॥

---

अथ चतुर्थखण्डे ‡ प्रगाथरूपे—

प्रथमसूक्ते—प्रथमा ।

१र २र ३ १ २र ३ १ १
त्वामिद्धिहवामहेसातौवाजस्यकारवः ।

२ ३ १ २ ३ १ २ ३ १ २ २उ ३ १ २
त्वांवृत्रेष्विन्द्रसत्पतिन्नरस्त्वाङ्काष्ठास्वर्वतः ॥ १ ¶ ॥

---

* ऊ० गा० ७प्र० १अ० ६सा० ।

† "उक्तोमाध्यन्दिनः"—इति वि० ।

‡ 'या ज्योतिष्टोमे देवता परिभाषा साम्नां सैवात्रापि"—इति वि० ।

¶ छ० आ० ३, १, ५, २ ( १भा० ४८१ पृ० )=ऋ० वे० ४, ७, २७, १ ।

"कारवः" स्तोतारो वयं "वाजस्य" अन्नस्य "सातौ" सम्भजने निमित्तभूते सति, हे "इन्द्र !" "त्वाम् इत् हि" त्वामेव "हवामहे" स्तुतिभिराह्वयामहे। हे इन्द्र! "सत्पतिं" सतां पालयितारं श्रेष्ठं त्वां "नरः" अन्येऽपि मनुष्याः "वृत्रेषु" आवरकेषु शत्रुषु सत्सु "हवन्ते" आह्वयन्ति, तज्जयार्थम्। अपिच "अर्वतः" अश्वस्य सम्बन्धिनीषु "काष्ठासु" यथा अश्वः क्रान्त्या तिष्ठति तासु "काष्ठासु" सङ्ग्रामेषु युद्धकामाश्च त्वामेवाह्वयन्ति, अतो वयं त्वामेवाह्वयाम इत्यर्थः॥

"सातौ"-"साता"—इति पाठौ॥ १॥

अथ द्वितीया।

१२३२ २ ३ २१ ३२१ २

सत्वन्नश्चित्रवज्रहस्तधृष्णुयामहस्तवानोअद्रिवः।

१ २२ ३ २२ ३१२ ३२३ ३१२१ २

गामश्वꣳरथ्यमिन्द्रसङ्किरसत्रावाजन्नजिग्युषे॥२*॥ १२

हे "चित्र" चायनीय! "वज्रहस्त" वज्रबाहो! "अद्रिवः" वज्रवत् † [यद्वा आदृणात्यनेनेत्यद्रिरशनिस्तद्वत्] एवम्भूत हे इन्द्र! "धृष्णुया" धृष्णुः शत्रूणां धर्षयिता ‡ "महः" महान्

* ऋ० वे० ४, ७, २७, २।

† 'अद्रिवः—वज्रवन्। अथवा अद्रयः पर्वताः। अथवा अभिषवग्रावाणः। ते अद्रिवः'—इति वि०। अत्र "मतुवसो रुः सम्बुद्धौ छन्दसि (८, ३, १)"—इति रुत्वम्।

‡ 'धृष्णुया—धारणशीलया बुद्ध्या प्रज्ञया वा'—इति वि०।

स तादृशस्त्वं "स्तवानः" अस्माभिः स्तूयमानः सन् "गाम्" "रथ्य" रथवाहम् "अश्वं" च "सं किर" सम्यक् प्रयच्छ । "जिग्युषे" जितवते पुरुषाय भोगार्थं "सत्रा" महत् प्रभूतं * "वाजं न" अन्नमिव यथा शत्रून् जितवते भोगार्थं बहु प्रयच्छसि तद्वत् † ॥ २ ॥ १२

२ र र र १ २ ३
॥ वारवन्तीयम् ॥ तुवामिद्धाऔहोहायि । हावामार२३

५ २ र र र १ ५ १र र
४हायि । सातौवाजस्यकारावो२३४हायि । त्वांवृत्रेष्वि

२ २र ४र ५ १ ३ ५ २
न्द्रसत्पतिन्ना३४ । औहोवा । इहा२३४हायि । उक्ष

३ ५ २१र २र १ ७ २ २र ४र ५
वा२३४राः । तुवाङ्का । ष्ठासुअर्वा ३ ४ । औहोवा ।

१ ३ ५ ३र २ ५र ५
इहा२३४हायि । औहो३१२३४ । ताः । एहियाईहा । (१)

२ र र र १ २ ३ ५ २ १
तुवाङ्काऔहोहायि । सूअर्वा२३४ताः । सत्वान्ना२ ३ ४

५ १ २ ३र ४र ५ १ ३
हायि । चित्रवज्रहस्तधृष्णू३४ । औहोवा । इहा२३४

५ २ ३ ५ २ १ १ १ ७र २
हायि । उक्षवा२ ३ ४ या । महस्त । वानोअद्रा २ ४ ।

---

* 'सत्रा—महा'—इति वि० ।

† 'वाजम्—अन्नम् । न जिग्युषे—न शब्द उपमार्थीयः, यथा जिग्युषे ; गमनशीलाय वणिजि यथा धनमुत्पद्यते तद्वत् लमस्मासु देहीत्यर्थः ।

३र ४र ५　१ २　५　३र २
औहोवा । इहा २ ३ ४ हायि । औहो३१२३४ । वा: ।
५र　५　२　र र १ २　२
एहियाऽ६हा ॥(२) मद्वस्त्वाऔहोहायि । नोअद्रा२३४
५　२र १　५　२　२
यिवा: । गामाश्वा२३४ऽहायि । रथियमिन्द्रसङ्का३४ ।
३र ४र ५　१ २　५　२　३　र　२ १र २र
औहोवा । इहा२३४हायि । उहुवा२३४रा । सन्नावा ।
१ ७ २　३र ४र ५　१ २　५　३र २
जान्नजिग्यू३४ । औहोवा । इहा२३४हायि । औहो
५र　५　४
३१२३४ । षायि । एहियाऽ६हा । होऽ५इ । डा(३) ॥१ २*॥[१]
२र र　र　२　१ २
॥ कण्वबृहत् ॥ औहोतुवामिद्धा३ए । हवामा१हा
३र २　१ र २र　र　२　२
२३४यि । हाहोयि । सातौवाजस्यकारव: । तुवांवा१
३र २　१　२　१　२
त्री२३४ । हाहोयि । वृत्रेष्विन्द्रसत् । पतायिन्ना१रा२३४: ।
३र २　१　२　३र २　२ १　१
हाहोयि । तुवाङ्का१ष्ठा२३४ । हाहो । सुआ३ । वी
५　५　२र र　र र
२३४ता: । उहुवाऽ६हाउ । वा ॥(१) औहोतुवाङ्काष्ठा
२　१ २　३र २　१　२
३ए । सुआर्वा१ता२३४: । हाहोयि । सात्वन्नश्चि । त्र

* ऊ० गा० २२प्र० १अ० १२सा० ।

१ २ ३र २ १ २ ३र २
वाजा१इा२३४। हाहो। स्वधाष्णु१या२३४। हाहो
१ २ ३र २ ३र २ १
यि। महास्ता१वा२३४। हाहो। नोआ३। द्रा२३४
५ ५ ३र २ २
यिवाः। उहुवा६हाउ। वा॥(२) औहोमहस्तवा३ए।
२ १ २ ३र २ १ २ १
नोआद्रा१यिवा२३४ः। हाहोयि। गामश्रुवम्। रथा
२ ३र २ १ २ ३र
यिया१मा२३४। हाहोयि। द्रमाङ्का१यिरा२३४। हा
२ १ २ ३र २ ३ २ १
होयि। सन्नावा१जा२३४म्। हाहो। नजा३यि। म्यू
५ ५
२३४षायि। उहुवा६हाउ। वा(३)॥ १७ *॥ [२] १२

अथ द्वितीयसूक्ते प्रगाथे—

प्रथमा।

३ १र २र ३ १ १ २ १ २ ३ १ २ ३ २
अभिप्रवःसुराधसमिन्द्रमर्च्चयथाविदे।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
योजरितृभ्योमघवापुरूवसुस्सहस्रेणेवशिक्षति॥ १ †॥

"पुरूवसुः" पश्वादिबहुधनोपेतः, यज्ञबाहुल्यात् बहूनि वासको वा "मघवा" धनवान् "यः" इन्द्रः "जरितृभ्यः"

* ऊ० गा० २२प्र० १ख० १७सा०।

† ऋ० आ० ३, १, ५, २ (१भा० ४८३ पृ०)=ऋ० वे०-६, ४, १४, १।

स्तोतृभ्यः अस्मभ्यं "सहस्रेणेव" सहस्रसङ्ख्याकेन धनेनेव "शिक्षति" [ शिक्षतिर्दानकर्मा ( निघ० ३, २०,८ ) ], पश्चादिबहु धनम् अस्मभ्यं प्रयच्छतीत्यर्थः। स इन्द्रः "यथाविदे" यथास्माभिर्विज्ञायते तथा हे ऋत्विजः! "वः" यूयं "सुराधसं" शोभनधनोपेतम् "इन्द्रम्" ऐश्वर्य्ययुक्तं देवम् "अभि" आभिमुख्येन "प्र अर्च्च" प्रकर्षेणार्च्चत ॥ १ ॥

अथ द्वितीया ।

२ १ २ २ १ २ २ १ २र ३ १ २ ३ १ २
शतानीकेवप्रजिगातिधृष्णुयाहन्तिवृत्राणिदाशुषे ।
३ १ २ ३ १र २र २ १ २ २ १ २
गिरेरिवप्ररसाअस्यपिन्विरेदत्राणिपुरुभोजसः ॥ २* ॥१३†

"धृष्णुया" ‡ धृष्णुः धर्षणशीलः पुरुषः "शतानीकेव" यथा शतसङ्ख्याकानि शत्रुसैन्यानि "प्रजिगाति" जयार्थं प्रकर्षेण गच्छति, तद्वत्; इन्द्रः "दाशुषे" यजमानार्थं "वृत्राणि" यज्ञविघातकान् शत्रून् प्र जिगाति ततस्तान् "हन्ति"। किञ्च "पुरुभोजसः" बहुधनस्य "अस्य" इन्द्रस्य सम्बन्धीनि "दत्राणि" दत्तानि धनानि "प्र पिन्विरे" यजमानार्थं प्रकर्षेण वर्त्तन्ते। तत्र दृष्टान्तः—"गिरेरिव" यथा गिरेः सकाशात् "रसाः" उदकानि पिन्विरे प्रवर्त्तन्ते तद्वत्॥ २ ॥ १३

* ऋ० वे० ६, ४, १४, २ ।

† 'वामदेव्य', मैत्रावरुणं साम । शैत्यं, ब्रह्मसाम'—इति वि० ।

‡ 'धृष्णुया—धारणस्वभावया'—इति वि० ।

४ २ ४ ५ र २ २ ३र ४र ५
॥ श्येनम् ॥ अभिप्रवःसुरा । धसा ३ ४ औहोवा ।
१ २ १ ७ ५ ५ १र २
आयिन्द्रमर्च्च । यथाविदा२३४यि । ओ६हा । योजरि
१ २ १ २ १ ३ ५ २ १ र
तृभ्यः । माघा२३वा । पुरूर२ । वा२३४सूः । सहस्रेणा
२ २ १ ३ ५र र
यिवा३शा । ऊम्मायि । ज्ञा२ता २ ३ ४ औहोवा ॥(१)
४ ३ र ४र५ ३ ३ ३र ४र ५ १ २र र १
सहस्रेणेवशि । क्षता३४औहोवा । सहस्रेणे । वशा
७ ५ ५ २ १र र २र १
यिन्नता२३४यि । ओ६हा । शतानीकेव । प्राजा२ ३
२ १ ३ ५ १ २ २
यिगा । तिधार२ । ष्णू२३४या । हन्तिवृत्राणी२दा ।
१ २ ४र र ३ ४ ३र ४ ५र
ऊम्मायि । शूरेषा२३४औहोवा ॥(२) हन्तिवृत्राणिदा ।
३ २ ३र ४र ५ १ २ र १ ७
शुषा३४औहोवा । हान्तिवृत्रा । णिदाशुषा२ ३ ४ यि ।
५ ५ २ १र २ १ २ १
ओ६हा । गिरिरिवप्र । रासा२३आ । स्यपा२ यि ।
३ ५ १ र २ २ १
न्वा२३४यिरायि । दत्राणिपूरू३भो । ऊम्मायि । जा२
३ ५र र ३ ५
सा२३४औहोवा । वा२३४ह्व(३) ॥ ३* ॥ [१]

---

* ऊ० गा० २प्र० १अ० ३सा० ।

५ ४　२　४　५र　४　५　१
॥ अभीवर्त्तः ॥ अभा३यिप्रा ३ वःसुराधसोवा। आ

२　१ २　१　२
यिन्द्रमर्च्चं। यथावा १ यिदा २यि। योजरितृ३१२३४।

२र　४ ५र　२ १ २　२　२ २
भ्योमघवा। पुरूवा१हू२रः। सहास्रे१णा२यि। वज्ञा

१　३ १ १ १ १　५ ४ २ ४
३यि। षा२३४५। जा२३४५यि ॥(१) सहा३स्रे३णे॒व

५ ४ ५　१ २र र　१ २　१ र
शिक्षतोवा। साहस्रेणे। वक्षायिक्षा१ता२यि। प्राता

र २　३ ४ ५र　२ १ २　१
नीका३१२३४यि। वप्रजिगा। तिधार्स्यू१या२। हन्ता

२　३ २　१　३ १ १ १ १
यिवा१र्ना २। णिरा ३। षू२३४५। षा२३४५यि ॥(२)

५ ४ २ ४　५र ४ ५　१ २ र　१ २
हन्ता३यिवा३र्नाणि३ाशुषोवा। हान्तिवृत्रा। णिदाशू

१ र २　३ ४र ५　२ १ २
१षा२यि। गायिरे रिवा३१२३४। प्ररसास्र। स्वपायिन्वा१

१ २　३ २　१
यिरा२यि। दत्नाणा१यिपू २। रुभो ३। जा२३४५।

३ १ १ १ १
सा२३४५ः(३) ॥ ७ * ॥ [२]

४ ३ ४　५र　३ २　३र ४र ५
॥ स्त्रौतनौधसम् ॥ अभिप्रवःसुरा। धसा३४औहोवा।

---

* ऊ० गा० ७प्र० १ख० ७सा०।

१ २ १ ७ ५ ५ र
आयिन्द्रमर्चं। यथाविदार२३४यि। ओ६हा। यो२३

२ १ २ १२ १ २ ३ ५ १
जा। रीतृभ्यः। मघ। वा। पूरुषार२३४सुः। सा२३

२ १ र२ १ ५ ३ ५ ४ ३र ४र५
हा। स्रे णेवश्रो२३वा। स्रा२३४ती ॥(१) सहस्रे णेवशि।

३ २ ३र ४र ५ १ २र र १ ७
क्षता३४औहोवा। साहस्रे णे। वशायिक्षता२३४यि।

५ ५ १ २ १र २ १२ १
ओ६हा। श्रा२३ता। नीकेव। प्रजि। गा। तायि

२ ३ ५ १ २ १र २ २ ५
धांष्णु२३४या। हा२३न्तायि। वार्त्राणिदो२३४वा।

३ ५ ३ ४ ३र ४ ५र ३ २ ३र ४र ५
भ्रू२३४षे ॥(२) हन्तिवृत्राणिदा। भ्रुषा३४ औहोवा।

१ २ र १ ७ ५ ५ १
हान्तिवृत्रा। णिदाभ्रुषार२३४यि। ओ६हा। गा२३यि

२ १ २ १२ १ २ ३ ५
रेः। आयिव। प्रर। साः। त्रा। स्यापिन्वार३४यिरा

१ २ १ २१ ५ ३
यि। दा२३त्रा। णायिपुरुभो२३४वा। जा२३४

५
साः(३) ॥ ११ * ॥ [३]

२ १ २ ५र
॥ वाङ्निधनं क्रौञ्चम् ॥ अभायिप्रावा३१२३४ः। सुरा।

---

* ऊ० गा० २प्र० १अ० ११सा०।

धसा३म्। इन्द्रमर्चा३१२३४। यथा। विदा३यि। यौजा
रितृ३१२३४। भ्योमघवापुरू। वहु३ः। सहास्रे णा३
१२३यि। वशा५यिचताउ॥(१) सहास्रे णा३१२३४यि।
वशि। चता३यि। सहस्रे णा३१२३४यि। वशि। चता
३यि। शतानीका३१२३४यि। वाजिगातिधृ। ण्णुया
३। हन्तायिवार्त्रा३१२३। णिदा५प्रुषाउ॥(२) हन्ता
यिवार्त्रा३१२३४। णि। दा। प्रुषा३यि। हन्तिवृत्रा
३१२३४। णिद्रा। प्रुषा३यि। गिरेरायिवा३१२३४।
प्ररमाअस्यापि। न्विरा३यिदत्राणायिपू३१२३। रुभो५ज
साउ। वा॥(३)॥१५॥[४]१२

---

* ऊ० गा० २१प्र० १ख० ५सा०।

अथ तृतीयप्रगाथे—

प्रथमा।

२ ३१र २र ३ १ २
त्वामिदाह्योनरोपीप्यन्वज्रिन्भूर्णयः।
१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
सइन्द्रस्तोमवाहसइहश्रुध्युपस्वसरमागहि॥ १ * ॥

हे "वज्रिन्" वज्रवन्निन्द्र! यं "त्वाम्" "भूर्णयः" हविर्भरणशीलाः "नरः" कर्म्मणां नेतारो यजमानाः "इदा" अद्य "ह्यः" पूर्वेद्युश्च "अपीप्यन्" सोममपाययन्। हे इन्द्र! "सः" त्वं "स्तोमवाहसः" स्तोत्रवाहकस्य मम स्तोत्रम् "इह" यज्ञे "श्रुधि" शृणु "स्वरं" गृहञ्च [ "दुर्याः"(९) "स्वसराणि"(१०)—इति (निघ० ३, ४) गृहनामसु पाठात्] "उपागहि" उपागच्छ॥

"स्तोमवाहसः"—इति छन्दोगाः, "स्तोमवाहसाम्"†—इति बह्वृचाः॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २
मत्स्वासुशिप्रिन्हरिवस्तमीमहेत्वयाभूषन्तिवेधसः।
२ ३ १ २ ३ १ २ २ १ २
तवश्रवांस्युपमान्युक्थ्यसुतेष्विन्द्रगिर्वणः॥ २‡॥ १४

* ऋ० सं० ४, १, १, १० (१भा० ६१० पृ०) ऋ० वे० ६, ७, ३, १।

† अतएव छन्दआर्चिक व्याख्यावसरे 'अस्माकम्'—इति बहुवचनान्त व्याख्यातम्।

‡ ऋ० वे० ६, ७, ३, २।

हे "सुशिप्रिन्" शोभनहनो ! "हरिवः" हरिनामकाश्वोपेत ! "गिर्वणः" गीर्भिर्वननीयेन्द्र ! "त्वया" त्वयि "वेधसः" परिचारकाः "आ भूषन्ति" * आभवन्ति, "मत्स्व" सोमेन मादय आत्मानम् किञ्च "तम्" त्वा वयम् "ईमहे" याचामहे । किं वाच्यम् ? इत्यत्राह—"सुतेषु" सोमेषु अभिषुतेषु सत्सु "तव" "श्रवांसि" अन्नानि † "उपमानि" उपमानभूतानि, हे "उक्थ्य" प्रशस्य ! ‡ तव प्रसादात् सन्त्विति ॥

"सुशिप्रिन्"-"सुशिप्र"—इति पाठौ ॥ २ ॥ १९

३र ४ ५र २ ३ ४र
॥ माधुच्छन्दसम् ¶ ॥ त्वामिदा । होयि । ह्वियोन

५ ५ २ १ २ १ २ ३ ५ १
राईए । आपायिप्यन्वा । आयिन्भूर्णा२ ३ ४ याः । स

२ १र २र १ २ ३र २ ३र २
इन्द्रस्तोमवाहसः । इहाऽऽधा । औहो ३ ४ वाहायि ।

१ २ ३र २ ३र २ १र २
उपास्वासा । औहो३४वाहा । रमागा२३हा३४३यि ॥(१)

३ ४ ५ र २ ३ ४र ५ ५ २ १ २ १ २
उपस्वसा । हो । रमागहीईए । उपास्वसा । रामा

३ ५ १ र २ १ २
गा २ ३ ४ ही । मघ्वासुशिप्रिन्हरिवः । तमायिमाहा ।

* 'खाधां कुर्वन्ति'—इति वि० ।

† 'श्रवांसि—अन्नानि पयांसि वा'—इति वि० ।

‡ 'उक्था—उक्थैः सम्भजनीयैः'—इति वि० ।

¶ 'माधुच्छन्दसं मामाच्छावाकस्य'—इति वि० ।

औहो३४वाहायि। त्वयाभूषा। औहो३ ४ वाहा। ति
वेधा२३सा३४३ः ॥(२) त्वयाभूषा। हो। तिवेधसा६ए।
त्वयाभूषा। तिवेधा२३४साः। तवश्रवाꣳस्युपमा। नि
यूक्थाया। औहो २ ३४वाहायि। तुतायिषूवा। औ
हो३४वाहायि। द्रुगिर्वा२३णा ३ ४ ३ः। ओ२३ ४ ५ई।
डा (३) ॥ ४ * ॥ [१]

॥ मानवोत्तरम् ॥ होवायि। त्वामिदाह्योनरः। हो
वायि। आपीप्यन्वज्रिन्भूर्णयः। साइन्द्रस्तो। मावा
हसा३१ः। इहा२२३४श्रूधायि। उपास्वा२३सा३। रा२
मा२३४औहोवा। गा२३४ही ॥(१) होवायि। उपस्व
सरमागहि। होवायि। ऊपस्वसरमागहि। मात्स्वासु
शि। प्रायिन्हरिवा३१ः। तमार्२यिमा२३४हायि। त्वया

* ऊ० गा० २प्र० १अ० ४सा०।

२　१　३　५र र　३　५
भूर३षा३। ता२यिवे२३४औहोवा। धा२ ३ ४ साः ॥(२)
१　र २र१　२र१ २　१　र र
होवायि। त्वयाभूषन्तिवेधसः। होवायि। त्वायाभूष
र　१२र　१ ३ २　३　२
न्तिवेधसः। तावश्वा। साउपमा३१। नियू२श्या२३४
५　२ १　२　१　२　५र र　३
या। सुतायिषू२३वा३यि। द्रा२गा२३४औहोवा। वा२
५
३४णाः (३)॥ ८ *॥ [ २ ] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयाध्यायस्य
चतुर्थः खण्डः† ॥ ४ ॥

---

पञ्चमखण्डे‡—
प्रथमतृचे—प्रथमा ।

२ ३ २ ३ १ २ ३ १ २　३ १ २
यस्तेमदोवरेण्यस्तेनापवस्वान्धसा ।
२　१ २　३ २
देवावीरघशꣳसहा ॥ १ ¶ ॥

---

* ऊ० गा० १८प्र० २ख० ८सा० ।

† 'उक्तं माध्यन्दिनं सवनम्'—इति वि० ।

‡ 'तृतीयसवनमभिधीयते'—इति वि० ।

¶ छ० आ० ५, २, ४, ३ ( २भा० १४ पृ० )=ऋ० वे० ८, १, २१, ४ ।

हे सोम! "ते" तव "देवावीः" देवकामः "अघशंसहा" राक्षसानां हन्ता "वरेण्यः" सर्व्वैर्वरणीयः "मदः" मदकरः "यः" रसः विद्यते, "तेन" "अन्धसा" अदनीयेन "पवस्व" चर ॥ १ ॥

अथ द्वितीया।

१ २३ १२३ २३ २ ३१ २ ३१ २
जघ्निर्वृत्रममित्रियᳶ सस्निर्वाजन्दिवेदिवे।

१ २ ३१ २
गोषातिरश्वसा असि ॥ २ * ॥

हे सोम! त्वम् "अमित्रियं" अमित्रभवं † "वृत्रं" शत्रुं "जघ्निः असि" हन्ता भवसि। किञ्च "दिवे दिवे" प्रतिदिनं "वाजं" ‡ सङ्ग्रामं "सस्निः" सम्भक्ताऽसि ¶। अपिच "गोषातिः" गवां सातिर्दातासि, "अश्वसाः" अश्वानां दाता चासि।

"गोषातिः"-"गोषाउ"—इति पाठौ ॥ २ ॥

---

* ऋ० वे० ८, १, २१, ५।

† 'अमित्रियम्—अमित्रकर्मकर्त्तारम्'—इति वि०।

‡ 'वाजमिति द्वितीयैकवचनम्, षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम्; वाजस्य अन्नस्य'—इति वि०।

¶ 'सस्निः—साधनस्वभावः'—इति वि०।

अथ तृतीया ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
सम्मिश्लोअरुषोभुवःसूपस्थाभिर्न्नधेनुभिः ।
१ २ ३ २उ ३ २
सीदञ्छ्येनोनयोनिमा ॥ ३ * ॥ १५ †

हे सोम ! त्वं "सूपस्थाभिः" शोभनोपस्थानाभिः "धेनुभिः" गोभिः [ गोविकारैः पयोभिरित्यर्थः ] "सम्मिश्लः" सम्मिश्रितः "श्येनः न" यथा श्येनः शीघ्रमागत्य स्थानमासीदति तद्वत् "योनिं" स्वकीयं स्थानम् "आसीदन्", "न" [—इति सम्प्रत्यर्थे ] इदानीम् "अरुषः भुवः" आरोचमानो भव ॥

"भुवः"-"भवः"—इति वा पाठौ ॥ ३ ॥ १५

अथ द्वितीयतृचे—प्रथमा ।

३ २ ३ २ ३ २उ ३ १ २ ३ १ २
अयम्पूषारयिर्भगस्सोमःपुनानोअर्षति ।
२ ३ १ २ ३ १ २ ३क २र ३ १ २ ३ २
पतिर्विश्वस्यभूमनोव्यख्यद्रोदसीउभे ॥ १ ‡ ॥

"पूषा" पोषकः सर्वेषां "भगः" भजनीयः "रयिः" धनहेतुः "अयं" सोमः "पुनानः" पवित्रे पूयमानः सन् "अर्षति" कलश-

---

* ऋ० वे० ८, १, २२, १ ।  † 'उष्णा गायत्री'—इति वि० ।

‡ ऋ० आ० ६, ३, १, २ ( २भा० १५३पृ० )=ऋ० वे० ७, ५, २, २ ।

मभिगच्छति । तथा "विश्वस्य" सर्वस्य "भूमन:" भूतजातस्य "पति:" पालयिता "सोम:" "उभे रोदसी" द्यावापृथिव्यौ "व्यख्यत्" स्वतेजसा प्रकाशयति । अनेन लोकद्वयवर्त्तित्वं सूचितम् ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ २ २ ३ १ २ ३ १ २
समुप्रियाअनूषतगावोमदायघृष्वय: ।
१ २ ३ १र २र ३ १ २
सोमास:कृण्वतेपथ:पवमानासइन्दव: ॥ २ * ॥

"प्रिया:" प्रियतमा: "घृष्वय:" अत्यन्तदीप्ता:, [ यद्वा 'अहं प्रथमत: स्तौमि', 'अहं पुरस्तात् स्तौमि'—इति परस्परं स्पर्द्ध-माना: ] "गाव:" स्तुति-लक्षणा वाच: † "मदाय" सोमस्य मदार्थं "समनूषत" संस्तुवन्ति ; "उ" प्रसिद्धौ ‡ [ यद्वा गावो धेनव: सोमस्य मदाय शब्दायन्ते ] । तत: "पवमानास:" पूयमाना: "इन्दव:" दीप्ता: "सोमास:" सोमा: पथः मार्गान् "कृण्वते" क्षरणार्थं कुर्वन्ति ॥ २ ॥

---

* ऋ० वे० ७, ५, २, ३ ।

† 'गाव:—० ० ०गोसम्भवानि क्षीराणि उदकानि वा'—इति वि० ।

‡ 'उ—इति पदपूरण:'—इति वि० ।

अथ तृतीया ।

१ २र ३ १र २र३ १ २ ३ १ २
यओजिष्ठस्तमाभरपवमानश्रवाय्यम् ।
१ २र ३ २ ३ १ २ २उ ३ १ २
यःपञ्चचर्षणीरभिरयिंयेनवनामहे ॥ ३ * ॥ १६ †

"ओजिष्ठः" ओजस्वितमः "यः" तृतीयो रसोऽस्ति तं "श्रवाय्यं" श्रवणीयं रसम् "आभर" अस्मभ्यमाहर । किञ्च "यः" रसः "पञ्च चर्षणीः" ‡ पञ्चजनान् निषादपञ्चमान् चतुरो-वर्णान् "अभि तिष्ठति" । अपिच "येन" रसेन वयं "रयिं" धनं च "वनामहे" सम्भजामहे ¶ [ यद्वा येन त्वां रयिं याचा-महे ] तमाभर ॥ ३ ॥ १६

५ ३र २ ४ ५ १र
॥ गौरीवितम् § ॥ अयम् । पूषा ३ । रयिर्भगाः । सो
र र १ २ ४
मःपुनानोअर्षता२३यि । पातिर्विश्वा३१ २ ३ । स्वभूप्म
१ २ ४ ५ ४ ५
नाः । वायव्यद्रो३१२३ । दसोवा । ऊ५भो६हायि ।(३)

॥ ८ ‖ ॥ [१]

---

* ऋ० वे० ७, ५, २, ४ । † "ज्योतिष्टोमौ ककुबुष्णिहौ"—इति वि० ।

‡ 'पञ्चचर्षणीः—चर्षणयोमनुष्याः । चत्वारोमहर्त्विजः, पञ्चमो यजमानः ।

¶ 'रयिं—धनं । येन वनामहे—येन सोमेन ऊतेन रयिं धनं लभामः । वनति र्यद्यपि स्तुत्यर्थे तथाप्यत्र लाभार्थे द्रष्टव्यः—इति वि० ।

§ 'महागौरीवितम्'—इति ख० पु० । ‖ ऊ० गा० १२प्र० १ख० ८सा० ।

४ ३ ४र५र २ ३ ४ ५
॥ तृतीयंक्रौञ्चम् ॥ अयम्पूषा। हो। रयिर्भगा ६

५ १ १ ३ २ ३ ५ १
ए। सोमा २:पुना२। नत्रा३४५। षा२३४ती। पतिर्वि

२१र ३१११११ २ १ २ १र २
श्वस्यभूमना२३४५:। वियख्या२३द्रो। दसीऊ२३भा३४

३४ ५ र २ ३ ४र ५ ५ १
३यि ॥(१) समुप्रियाः। हो। अनूषता ६ ए। गावो २

१ ३ २ २ ५ १र र २ र ३
मदा२। यथा३४५। था२३४याः। सोमासःकृण्वतेप

२ २ १ २ १ २ ३ ४र
था ऽ१:। पवमा२३ना। सइन्दा२२वा३४३: ॥(२) यओ

५ र २ ३ ४र ५ ५ १ १ ३ २
जिष्ठाः। हो। तमाभरा६ए। पावा ३माना२। अवा

३ ५ १ २ २२ २ २ १
३४५। यी२३४याम्। यःपञ्चचर्षणीरभीऽ१। रयिंया२

२ १र २ १
३यिना। वनामा२३हा ३ ४ ३ यि। ओ२३४५ई। डा।(३)

॥ ८ * ॥ [२]

५ ३र २ ४ ५ १र
॥ गौरीवितम्† ॥ अयम्। पूषा३। रयिर्भगाः। सो

र र १ २ ४
मःपुनानोअर्षता२३यि। पातिर्विश्वा३१२३। स्यभूमनाः।

---

* ऊ० गा० २प्र० १अ० ९सा०। † 'महागौरीवितम्'—इति ख० पु०।

१ २ ४ ५ ४ ५
वायख्युद्रो ३ १ २ ३। दसोवा। ऊ ५ भो ६ हायि ॥(१)
५ ३ २ ४ र ५ १र र र
समु। प्रियाः३ः। अनूषता। गावोमदायघृष्वया२३ः।
२ २ ४ १ र २
सोमासःक्रा३१२३। णवताप्र्यिपथाः। पावमाना३१२३।
४ ५ ४ ५ ५ र ३ २ ४ र
सत्रोवा। दा५वो६हायि ॥(२) यत्रो। जिष्ठा३ः। तमा
५ १ र र १ २
भरा। पवमानश्रवायियार३म्। याःपञ्चचा ३ १ २ ३।
४ १ र २ ४ ५ ५
षणा५यिरभायि। रायिंयेना३१२३। वनोवा। मा५
५
वो६हायि(३) ॥ ९ * ॥ [३]

३ २ २ ४र ५ २ ४
॥ श्यावाश्वम् ॥ अया३१म्। पूङ्षा। रयिः। भा३गः।
१ १ र २ १ १ र
एहिया। सो। मःपुनानो। अ। षता२रयि। ऐहि
१ २ ४ ५ २र १
या२। पतिर्विश्वास्या३भू३। मा२३४नाः। ऐहा२रयि।
र १ २ ४ २ ५
एहिया२। वियख्यद्रोदा३सी३। ऊ३४५भो६हायि ॥(१)
३ २ ४र ५र २ ४ ५ १
समू३१। प्रो३याः। अनू। षा३त। एहिया। गा।

० ऊ० गा० ७प्र० १अ० ९सा०।

र र २ १ १र र र १
वोमदाया । घृ । षया२ः । एहिया२ । सोमासःका

२ ४ ५ २र १र
एर्वा३ता३यि । पा२३४थाः । ऐहा२यि । एहिया२ ।

१र २ ४ २ ५ ३ २
पवमानासा३आ३यि । दा३४५वो६हायि ॥(२) यश्रो३

२ ४ ५र २ ४ ५ १
१ । जा३यिष्ठः । तमा । भा३र । एहिया । पा । व

र २र १ १र १ २
मानश्रा । वा । यिया२म् । एहिया२ । यःपञ्चचार्षा३

४ ५ २र १र
णी३ः । आ२३४भायि । ऐहा२यि । एहिया२ । रयिं

१र २ ४ २ ५
येनावा३ना३ । मा२३४५हो६हायि(३) ॥ १०* ॥ [४]

२ १ २र र १ र
॥ आसिताद्यम् ॥ अयम्पूषारयायिः । भगाः । सो

र र २ १ १र
मःपुनानोअर्षा२३तायि । पाता२यिश्वा२ । स्वभूमनाः ।

१ १ २ १ ५ ४ ५
वाया२ख्याद्रो२ । दसोवा३ओ२३४वा । ऊ५भो६हा

१ २ १र २ १ र र र
यि ॥(१) समुप्रियाअनू । षता । गावोमदायघृष्वा२३

२ १ १र १
याः । सोमा२साःका२ । एवतेपथाः । पावा२माना

* ऊ० गा० ११प्र० २अ० १०सा० ।

१ २ १ ५ ४ ५ १र
२। सओवा३ओ२३४वा। दा५वो६हायि ॥(२) यओ
२ १ र र २ १
जिष्ठस्तमा। भरा। पवमानश्रवाआ२३याम्। याःपा
१र १ १
२ञ्चाचा२। षणीरभायि। रायी२यायिना२। वओ
२ १ ५ ४ ५
वा३ओ२३४वा। मा५हो६हायि(३) ॥ २० * ॥ [५]

२ र र २ र १र २ १
॥ निषेधम् † ॥ अयम्पूषारा ३ यिर्भगाः। सोमाःपुना।
२र १ १ २ १ २ २ ३
नोअर्षता२थि। इहा३। पाता३यिर्वायिश्वा। हाहो
५ २ र १ २ १ २ १ २ ४ ५
२३४हा। स्यभूमा२३नाः। इहा ३। वाया ३ख्याद्रो।
२ ३ ५ ३ २ ४ २ र
हाहो२३४हा। दसी३ऊ५भा६५६यि ॥(१) समुप्रियाआ
२ र १र २ १ २ १ १ २ १
३नूषता। गावोमदा। यघृष्वया२ः। इहा ३। सो
२ ४ ५ २ ३ ५ २ र १ २ १ २
मा३साःकृ। हाहो२३४हा। ण्वतेपा२३थाः। इहा३।
१ २ ४ ५ २ ३ ५ ३ २ ४
पावा३माना। हाहो २३४ हा। सआ३यिन्दा५वा६
२ र २र १र २र १ २ र
५६ः ॥(२) यओजिष्ठस्ता३माभरा। पवामाना। श्रवा

* ऊ० गा० ११प्र० २अ० २०सा०। † 'निषेधः'—इति ख० पु०।

यिया२म् । इ्हा ३ । याःपा३श्वाचा । हाहो२३४हा ।

षणीरार३४भायि । इहा३ । रायी३यायिना । हाहो२३

४हार३ ४ हा । वना ३ मा ५ हा ६ ५ ६ यि । हे २ ३

४ ५(३) ॥ २ * ॥ [६]

॥ यज्ञायज्ञीयम् ॥ अयाऽ५म्नू । षा३रा३यिर्भागाः ।

सोमःपुना । नो३आर्षा३तायि । पता२यिर्वि । श्वस्था

२३भू । ऊम्मायि । मा३नाः । वायख्युद्रोदसी २ उभा

उ ॥(१) भायिसाम् । उप्रियाअनूषतगावोमदा । या

३घार्ष्वा३याः । सोमा२सः । क्रण्वा२३ता । ऊम्मायि ।

पा३थाः । पावमानासआ२यिन्दवाउ ॥(२) वायाः । ओ

जिष्ठस्तमाभरपवमाना । आ३वाआ३याम् । यःपा२श्च ।

---

* ऊ० गा० १३प्र० १ख० २सा० ।

२ १ २ २ १ र
चर्षा२३णा। ऊम्मायि। आ३भायि। रायिंयेनवना२

३ २ १ १ १
मद्दाउ। वा३४५(३) ॥ १३ * ॥ [७]

२ १ २र १र २र १ २ र १ २
॥ यद्वाहिष्ठीयम् ॥ अयम्पूषार यिर्भगः। अयम्पूषोवा।

१ र २ र
रयिर्भगाः। सोमःपू२३ना। नोअर्षतायि। पतिर्वा२३

२ १र २ १र २
यिश्वा। स्यभूमनाः। वियख्या२३द्रो। दसीऊ२३भा२

१ २१र २र १ २ १र
४३यि ॥(१) समुप्रियाअनूषत। समुप्रियोवा। अनूष

र र २ १ र र २
ता। गावोमा२३दा। यघृष्वयाः। सोमासा२३ःक्रा।

१र २ १ २ १
ण्वतेपथाः। पवमा२३ना। सइन्दा२३वा३४३ः ॥(२) य

र २ १ र २ र १ २ १र
ओजिष्ठस्तमाभर। यओजिष्ठोवा। तमाभरा। पवमा

२ १र २ १र
२३ना। अवायियाम्। यःपञ्चा२३चा। षणीरभायि।

२ १र २ १
रयिंया२३यिना। वनामा२३हा३४३यि। औ२३४५ई।

डा (३)॥ १४ † ॥ [८]

* ऊ० गा० १५प्र० १अ० १२सा०। † ऊ० गा० २२प्र० १अ० १०सा०।

॥ क्रौञ्चाद्यम् ॥ अयम्पूषौहो। रायिर्भगाः। सो

मःपुना३। नोआ३र्षा५ता६ ५ ६ यि। पतिविश्वौहो।

स्यभूमनाः। वियख्यद्रो३। दासी३ऊ५भा६५६यि ॥(१)

समुप्रियौहो। आनूषता। गावोमदा३। याघा३र्षा५

था६५६ः। सोमासःकौहो। एवातेपथाः। पवमाना३।

सा आ३यिन्द्रा५वा६५६ः ॥(२) यओजिष्ठौहो। तामाभ

रा। पवमाना३। आवा३आ५या६५६म्। यःपञ्चचौ

हो। षाणीरभायि। रयिंयेना३। वाना३मा५हा६५

६यि (३)॥ १७ * ॥ [९]

॥ ऐडकौत्सम् ॥ अय७ह्वोपू२३। षारयिर्भगाइया।

सोमःपुनानोअर्षति। पातिर्विश्व। स्यभूमार२३नाः। वा

या३ह्वा। ख्याद्रो३ह्वा। दसीऊर२३भा३४३यि ॥(१) स

---

* ऊ० गा० ११प्र० १अ० १७सा०।

२ ३१ ४र र ५ १र २र १ २१ २ १
मूह्विप्रोर३। याअनूषतईया। गावोमदायघृष्वय:। सो

र २ १र २ १ २ २ १ २ २
मास:क्र। एवतेपार२३था:। पावा३हा। माना३हा।

१ २ ३ र २र १ ४ र
सइन्दार२३वा३४३: ॥(२) यश्रोहीजार२३यि। इस्तमाभर

५ १ २र १र २ १ २ १र
इया। पवमानश्रवायियम्। या:पञ्च। षणीरा२३

२ १ २ २ १ २ २ १र
भायि। रायी३४हायि। यायिना३हायि। वनामा२

२ १
३हा३५३यि। औ२३४५ई। डा (३)॥ ५ * ॥ [१०]

२ र र २ र
॥ मधुश्चुन्निधनम् ॥ अयम्पूषारयिर्भगा३ए। सोम:पु

१ २ २ २ ऽ २ २ १
ना३नोअर्षता३यि। हा३हा। औ३हो३ वा। आयि

१ र २ २ १ ऽ २
ही२। पतिर्विश्वा३स्याभूमना३:। हा३हा। औ३हो

२ १ १ २ २ १ ऽ
३वा। आयिही२। वायख्यद्रो३। हा३हायि। औ

२ २ १ १र २ ५र र
३हो३वा। आयिही२। दसी। ऊ२भा२३४ औहो

२ र र र र ऽ१० २
वा ॥(१) समुप्रियाअनूषता३। गावोमदा३याघृष्वया३:।

---

* ऊ० गा० २०प्र० १ख० ५सा०।

हा३हा । औ३हो३वा । आयिही२ । सोमासःकृ३एवा
तिपथा३ः । हा३हा । औ३हो३वा । आयिही२ । पा
वमाना३ । हा३हायि । औ३हो३वा । आयिही२ ।
सइ । दा२वा२३४औहोवा ॥(२) यओजिष्ठस्तमाभरा
३ए । पवमाना३श्रावायिया३म् । हा३हा । औ३हो३
वा । आयिही२ । यःपञ्चचा३र्षणी३रभा३यि । हा३
हा । औ३हो३वा । आयिही२ । रायियेना३ । हा
३हायि । औ३हो३वा । आयिही२ । वना । मा२हा
२३४औहोवा । मधुश्चुतता२३४५ः(३) ॥ १८ * ॥ [११]

॥ कण्वबृहत् ॥ औहोअयम्पूषा३ए । रयायिर्भा१गा२
३४ः । हाहोयि । सोमःपुनानोअर्षति । पतायिर्वा१यि
श्वा२३४ । होहोस्यभूमा१ना२३४ः । हाहोयि । वियाख्या

* ऊ० गा० २०प्र० २ख० १८सा० ।

२र २ ३ ० १ ५
१द्रा२३४। हाहो। दसी३। ऊ२३४भायि। उऊवा

५ २र २ २ १ २
६हाउ। वा ॥(१) औहोसमुप्रियाइए। अनूषा१ता२

३र २ १ र २ र १र २
३४। हाहोयि। गावोमदायघृष्वयः। सोमासा१ःका२

३र२ १ २ ३र २ १
३४। हाहो। एवतायिपा१था२३४ः। हाहोयि। पवा

० ३र २ ३ २ १ ५
मा१ना२३४। हाहो। सआ३यि। दा२३४वाः। उ

५ २र र र २ १ २
ऊवा६हाउ। वा ॥(२) औहोयओजिष्ठाइए। तमाभा

३र २ १ २र र १ २
१रा२३४। हाहोयि। पावमानश्रवायियम्। यःपाञ्चा

३र २ १ २ ३र २
१चा२३४। हाहो। षणायिरा१भा२३४यि। हाहोयि

१ २ ३र २ ३ २ १
रयायिंया१यिना२३४। हाहो। वना३। मा२३४हायि।

५ ५
उऊवा६हाउ। वा(३) ॥ ८ * ॥ [१२] १६

अथ तृतीयतृचे—प्रथमा।

१ २ ३ १ २ ३ २उ
वृषामतीनाम्पवतेविचक्षणः

३ १ २ ३ १ २र ३ २
सोमोअह्नाम्प्रतरीतोषसान्दिवः।

* ऊ० गा० ११प्र० २अ० ६सा०।

३ १र २र ३ १ २ २
प्राणासिन्धूनाङ्कलशाꣳअचिक्रद

१ २ ३ २ २ ३ १ १ २ ३ १ २
दिन्द्रस्यहार्द्याविशन्मनीषिभिः ॥ १ * ॥

अयं "सोमः" "पवते" अभिषूयते। कीदृशः सोमः? "मतीनां" मतयः स्तोतारः तेषां "वृषा" वर्षकः, "कामानां" "विचक्षणः" विद्रष्टा, "अक्नाम्" उषसां "दिवः" द्युलोकस्य आदित्यस्य वा "प्रतरीता" प्रवर्द्धयिता किञ्च "सिन्धूनां" स्यन्दमानानाम् उदकानां "प्राणा" प्राणयिता चेष्टयिता [ अनितेः ( अदा० प० ) शानचि, "बहुलं छन्दसि ( २, ४, ७३ )"—इति शब्विकरणस्य लुक्, सुपां सुलुगित्याकारः ( ७, १, ३९ ) ] "कलशान्" "अचिक्रदत्" शब्दं करोति प्रवेष्टुम्। किं कुर्वन्? "इन्द्रस्य" "हार्दि" हृदयम् "आविशन्" प्रविशन् "मनीषिभिः" मनसईषितृभिः स्तुतिभिः स्तुत इति शेषः। व्यवहित मपि मनीषिभिरित्येतत् पवतइत्यनेन सम्बध्यते ॥

"अक्नाम्"-"अक्तः"—इति, "उषसाम्"-"उषसः"—इति, "प्राणा"-"क्राणा"—इति, "अचिक्रदत्"-"अवीवशत्"—इति च पाठाः ॥ १ ॥

---

* छ० आ० ६, १, २, ६ ( २भा० १८५ पृ० )=ऋ० वे० ७, ३, १५, ४।

अथ द्वितीया।

२ १ २ ३२ ३ १
मनीषिभिःपवतेपूर्व्यःकवि*र्नृ-

२र१२उ २ १ २
भिर्यतःपरिकोशाॅ अस्यिष्यदत्।

३ २ ३ १ २ ३ १ ३ २ ३ २ ३
त्रितस्यनामजनयन्मधुक्षर-

१ २ ३२ ३ १ २ ३१ २
न्निन्द्रस्यवायुॅसख्यायवर्द्धयन्॥ २†॥

अयं सोमः "मनीषिभिः" मेधाविभिः अध्वर्य्यादिभिः "पवते" पूयते। यद्वा अयं मनीषिभिर्धाराभिः "पवते" क्षरति। कीदृशोऽयम्? "पूर्व्यः" पुराणः "कविः" मेधावी "नृभिः" नेतृभिः अध्वर्य्यादिभिः "यतः" सन् "कोशान्" कलशान् प्राप्य "परि असिष्यदत्" परितः स्यन्दते स्रवति। "त्रितस्य" त्रिषु स्थानेषु लोकेषु विस्तृतस्य "इन्द्रस्य" यजमानस्य सम्बन्धि "नाम" नामकमुदकं "जनयन्" उत्पादयन् "मधु" मधुरं रसं "क्षरन्" क्षरति। किं कुर्वन्? इन्द्रस्य "सख्याय" सखित्वाय "वायु" "वर्द्धयन्" प्रवृद्धं कुर्वन्॥

"असिष्यदत्"-"अचिक्रदत्"—इति पाठौ, "युवा"-"वायोः"—इति च, "वर्द्धयन्"--कर्त्तवे"—इति च॥ २॥

---

* "पूव्यः कवि"—इति मु० पाठः। † ऋ० वे० ७, ३, १६, १।

अथ तृतीया।

३१ २३२३१२
अयम्पुनानउषसोअरोचय

३२१ २र ३२
दयꣳसिन्धुभ्योअभवदुलोककृत्।

३२उ ३१२ २ २३ २३
अयन्त्रिःसप्तदुदुहानआशिरꣳ

१ २ ३१२ ३१ २ २२
सोमोहृदेपवतेचारुमत्सरः॥ २ *॥ १७ †

"अयं" सोमः "पुनानः" पूयमानः "उषसः" "अरोचयत्" अदीपयत्। अयं "सिन्धुभ्यः" स्यन्दमानेभ्यः वसतीवरीभ्यः ‡ "अभवत्" सन्नद्धो भवति। "उ"—इति पूरणः। कीदृशो-ऽयम्? "लोककृत्" लोकानां कर्त्ता [वर्षकत्वाद्दीतोधारकत्वाच्चास्य लोककृत्त्वम्]। "अयं" सोमः "त्रिःसप्त" एकविंशतिं गाः ¶ ऋत्भुखेन "आशिरं" "दुदुहानः" दुहानः [दोहस्य प्रयोजकत्वात् कर्त्तोपचारः] "मत्सरः" मदकरः "चारु" रमणीयं "पवते" चरति। किमर्थम्? "हृदे" हृदयाय हृदय-गमनाय॥

"अरोचयत्"-"विरोचयत्"—इति पाठौ॥ २॥ १७

* ऋ० वे० ७, ३, १६, २। † 'साम साम'—इति वि०।

‡ 'समुद्रेभ्यो वा'—इत्यधिकं वि०।

¶ 'प्रतिसवनं सप्तसप्त गावः ० ०'—इति वि०।

१ र २
॥ यामम् ॥ आ२यि। इया। वृषामतायिना१म्य
४ २३५ १र र ७ र
वतार३यि। वा३यिचक्षणः। सोमोअक्राम्प्रतरीतोर २।
४ २र ३ ४ १र र २ ४ २
षा३सान्दिवः। प्राणासिन्धूना१ङ्कलशा२३। आ ३ चि
३ ५ १ ७ र २ ४
क्रदत्। इन्द्रस्यहार्द्दियाविशा२३न्। मना३यिषा५यिभा
१ र ७ र ४ २ ३ ५
६५६यिः ॥(१) मनीषिभायिःपवतेपू२३। वी३ यःकवि।
१ ७ र ४ २ ३ ५ १
नृभिर्य्यताःपरिकोशा२३। आ३सिष्यदत्। त्रितस्यना
७ ४ २ ३ ५ १ ७
मजनया२३न्। मा३धुक्षरन्। इन्द्रस्यवायुꣳसखियार
२ ४ १ ७
३। यवा३र्द्दी५या६५६न् ॥(२) अयम्पुनानउषसो। २३।
४ २र २ ५ १ २ ४ २र
आ३रोचयत्। अयꣳसिन्धूभ्यो१अभवा२३त्। ऊ२लो
३ ५ १ ७ ४ २र ३ ५
कक्कत्। अयन्त्रिस्साप्तदुदुहा२३। ना३आशिरम्। आ
१ र र ७ र २ ४
२यि। इया। सोमोहृदायिपवतेचा२३। रुमा३त्सा

पुरा६५६ः(३) ॥ १० * ॥ [१]

---

* ऊ० २प्र० १ख० १०सा०।

२ र १ २र १
॥ ऐडयामम् ॥ वृषामातो२३। नाम्यवाता२३ यि।
२ २ २र र १ २ १
ए३। विचक्षणए३। सामोआक्षा२३म्। प्रतरायिता२
२ २ र २र र १ २र
३। ए३। उषसान्दिवए३। प्राणासायिन्धू२३। नाक्र
१ २ २ २ १
नाम्नाऽ२३। ए३। अचिक्रदद्दे३। इन्द्रस्याह्वा२३।
२ र १ २ २ र २ र
दियावायिम्ना२३न्। ए३। मनीषिभिरे२४३॥(१) मनी
१ २ १ २ २
षायिभा२३यिः। पवतायिपू२३। ए३। वियःकविरे३।
२ १ २ १ २ २
नृभिर्याता२३ः। परिकोशाऽ२३। ए३। असिष्यदद्दे
२ १ २ १ २ २
३। त्रितस्याना२३। मजनाया२३न्। ए३। मधुक्ष
२ १ २ १ २
रन्तो३। इन्द्रस्यावा२३। युऽसखोया२३। ए३। यव
२ १ २ १ २
र्द्धयन्नो३४३॥(२) अयम्पूना२३। नउषासा२३ः। ए३।
२ र २ १ २र १
अरोचयद्दे३। अयऽसायिन्धू२३। भ्योअभावा२३ त्।
२ र २ १ २ १
ए३। उलोककृद्दे३। अयन्त्रायिःसा२३। मदुद्रुहा२३।

२ २ र २र र १ २ १
ए३। नञ्चाग्निरमे३। सोमोहाहाँ २ ३ यि। पवतायि

२ १
चा२३। ए३। हमत्सरए३४३। ओ २३४५ई। डा(३)॥

॥ ५ * ॥ [२]

४ २ ४ २ ४ ५
॥ यज्ञायज्ञीयम्। वृषाऽ५म। ता३यिना३पवतायि।

१ र र र र २ १ २ २
वायिचक्षणःसोमोअन्हाम्प्रतरीतो। षा३सान्दा३यिवाः।

१र १ र र र २ १
प्राणा२सिन्धूनाङ्कलशाँ२अचिक्र। ददा२३यिन्द्रा। ऊ

२ २ १र ३२
म्मायि। स्या ३ हा। दीयाविशन्मना २ यिषिभाउ॥(१)

१ २ १र रर र
भायिर्म्मा। नीषिभिःपवतेपूर्व्यःकविन्नृभिर्यतःपरिकोशाँ२।

२ १ २ २ १ १ र
आ३सायिष्या३दात्। त्रिता२स्यनामजनयन्मधुक्ष। दन्ना

२ १ २ २ १ र
२३यिन्द्रा। ऊम्मायि। स्या३वा। यू२सखियायवार

३ २ १ २ १ र र र
ईयाउ॥(२) याना। यम्पुनानउषसोअरोचयद्यः२सि

र २ १ २ १ १
न्धुभ्योअभवात्। ऊ३लोका ३ कृत्। अया२न्निःसप्तदुदु

---

* ऊ० गा० ९प्र० १ख० ५सा०।

२ २ २ १ २ २

ध्वानश्राप्ति। र्ं९सो२३मा:। ऊम्मायि। वा३ ईायि।

१ २र ३२ १ १ १ १

पावतेचारुमार्२त्सराउ। वा२३४५(३)॥ १७* ॥ [३] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य

पञ्चमः खण्डः ॥ ५ ॥

---

एवाहीति-षष्ठ खण्डे ‡—

प्रथमतृचे—प्रथमा।

३ १ २र ३ २ ३ १ २र३ २ ३ २

एवा ह्यसि वीरयुरेवा शूर उत स्थिरः।

३ २ ३ २ ३ १ २

एवा ते राध्यं मनः ॥ १ ¶ ॥

हे इन्द्र! त्वं "वीरयुः" वीरान् युद्ध-कर्मणि समर्थान् शत्रून् हन्तुं कामयमानः "एव असि" भवसि खलु। "हि" प्रसिद्धौ अतएव त्वं "शूरः" सामर्थ्यवान् "एव" भवसि। "उत" अपिच "स्थिरः" सङ्ग्रामे धैर्यवान् भवसि, एकत्र स्थित्वैव शत्रून् सम्प्रहरसीत्यर्थः। एवं सति "ते" तव "मनः" "राध्य"

---

* ऊ० गा० १६प्र० १ख० १७सा०।

‡ 'यज्ञायज्ञीयमग्निष्टोमसाम। एह्यूसाकमुक्थ्यम्। एवाह्यसि सामहीयवं द्वितीयमुक्थ्यम्'—इति वि० ब्रते ति शेषः।

¶ ऋ० शा० २, १, ४, १० (१भा० ४७५पृ०) ऋ० वे० ६, ६, २०, २।

स्तुतिभिः आराधनीयम् "एव"। यतोऽनेन मनसा त्वं शत्रुवधं सङ्ग्रामे धैर्यादिकं करोषीति तव मन एव सर्वैः स्तुत्यमित्यर्थः ॥ १ ॥

अथ द्वितीया।

३ २ ३ १ २　　३ १२　　३ १ २
एवारातिस्तुवीमघविश्वेभिर्धायिधातृभिः।

१ २　　३ १ २
अधाचिदिन्द्रनस्सचा ॥ २* ॥

हे "तुविमघ !" [तुविरिति बहु-नाम (निघ०२,१,१)] बहु-धन इन्द्र! "विश्वेभिः" सर्वैः "धातृभिः" कर्मधारकैः [यद्वा, देवानां हविर्दानेन पोषयितृभिः सर्वैः यजमानैः] तव "रातिः" गवाश्वादि-दानं "धायि" तैर्धार्यत एव [दधातेर्लुङि कर्मणि रूपम्]। "चित्" एवार्थे†। "अध"‡ अनन्तरमेव हे इन्द्र! एवंविधस्त्वं "नः" अस्माकं यष्टॄणामपि "सचा"¶ धनादि-दानेन कर्म-सहायो भव ॥

"इन्द्रनस्सचा"--"इन्द्रमेसचा"—इति पाठौ ॥ २ ॥

---

* ऋ० वे० ६, ६, २०,२।

†, ‡ 'अधा चित्—इति पद पूरणः'—इति वि०। सायणमते तु अधेत्यथ मथेत्यर्थे, "निपातस्य च (६,३,१३६)"—इति दीर्घे भवति "अधा"—इति।

¶ 'अथवा सचा सखा'—इत्यधिकं वि०।

अथ तृतीया।

२उ ३ १ २ ३१र २र
मोषुब्रह्मेवतन्द्रयुर्भुवोवाजानाम्पते।
१ २ ३ २ ३ १ २
मत्स्वासुतस्यगोमतः॥ २ *॥ १८

हे "वाजानाम्पते" अन्नानाम्पते! बलानां वा, हे इन्द्र! "तन्द्रयुः" † निष्कारणं निवृत्तकर्मवत्त्वादालस्ययुक्तः "ब्रह्मेव" ब्राह्मणइव त्वं "मा उ षु भुवः" ‡ सुष्ठु मा भव, सर्वदास्मत्-कर्मरतो भवेत्याश्वासनम् ¶। तदेवाह—"सुतस्य" अभिषुतस्य, ततः "गोमतः" गव्येन क्षीरेण दध्ना वा मिश्रणवतः सोमस्य पानेन "मत्स्व" माद्य हृष्टो भव॥ २॥ १८

५र र २ ४ ५र २र १
॥ उक्थामहीयवम्॥ एवाहो ३ असिवीरयूः। एवा
२ १ २ १ २र र १
प्र्रा१रा२ः। उता२३स्थिराः। आयिवातेरा। धिया
२ ५र र २ ४ ५र २ १
२३म्मनाउ। वाः३॥(१) एवारा३तिस्तुवीमघा। विश्वा

---

* ऋ० वे० ६, ६, २०, ४।

† "उ सु"—इति पदपूरणौ। मा इति प्रतिषेधः, तन्द्रयुरित्याख्यातेन सम्बन्धयितव्यः; मा तन्द्रयुः मालस्यं कुरु'—इति वि०।

‡ "भुवः वाजानां पते'—भुवर्लोकस्य अन्नानां धनानां चाधिपते भुवर्ग्रहणस्य प्रदर्शनार्थं सर्वेषां लोकानां पते'—इति वि०।

¶ अहह! अस्माद्धि ब्राह्मणानामालस्य-स्वभावो वर्णितः।

२ १ २ १ २र १
यिभा१यिद्वा२। यिधा २ ३ तृभायिः। आधाचिदायि।
२ ५र २ ४र ५
द्रना२३ःसचाउ। वा३ ॥(२) मोषुब्रा३ह्म वतन्द्रयूः।
२ १ २ १ २ १ २र १
भुवोवा१जा२। ना२३म्पतायि। मात्स्वासुता। स्वगो
२ २ र १॥१ १ १
२३मताउ। वा३। स्तौषे२३४५(३) ॥ ११ * ॥ [१]
५र र २ ४ ५र ४ ५ २र १र
॥ सौभरम् ॥ एवा३ह्वो३असिवीरयोवा। एवाधृ२
१ ७ १ ३ ५ १रर र र
राउता२३। ह्वो। स्था२३४यिराः। एवातेरा। धिया
१ २ १ ३ ५र र ५र ४ २ ४
३०ह्वा३यि। मा२ना२३४औहोवा ॥(१) एवा३रा ३ ति
५र ४ ५ २ १र १ ७ १ ३
स्तुवीमघोवा। विश्वे भा२यिद्वायिधा२३। ह्वो। तू२
५ १ र १ २ १ ३
३४भायिः। अधाचिदि। द्रना३ह्वा३यि। सा२चा२३४
५र र ५र ४ २ ४र ५ ४ ५ २ १र
औहोवा ॥(२) मोषू३ब्रा३ह्म वतन्द्रयोवा। भुवोवा२
१ १ ३ ५ १ र
जाना२३म्। ह्वो। पा२३४तायि। मत्स्वासुत। स्व

---

* ऊ० गा० २प्र० १ख० ११गा० ।

१ २   १ २   ५र र   ३ ११ १ १
गो३द्वा३यि । मा२ता २ ३ ४ औहोवा । ऊ २ ३ ४ ५

(३) ॥ २ * ॥ [२] १८

द्वितीयतृचे—प्रथमा ।

२ ३ १ २   ३ १ २ ३ १ २
इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसङ्गिरः ।

३ १ २   ३ २ ३ १ २ ३   १ २ ३ १ २
रथीतमꣳरथीनांवाजानाꣳसत्पतिम्पतिम् ॥ १† ॥

"विश्वाः" सर्वाः "गिरः" अस्मदीयाः स्तुतयः "इन्द्रम्" "अवीवृधन्" वर्द्धितवत्यः [ वृधेर्णिचि चङि "उर्ऋत् ( ७, ४, ७ )" —इत्यनुवृत्तौ "नित्यं छन्दसि ( ७, ४, ८ )"—इति ऋकारस्य ऋकार-विधानात् लघूपधगुणाभावः, निपातस्वरः (८, १ २८ )] कीदृशमिन्द्रम् ? "समुद्रव्यचसं" समुद्रवद् व्याप्तवन्तं, "रथीनां" रथ-युक्तानां योद्धॄणां मध्ये "रथीतमम्" अतिशयेन रथ-युक्तं, "वाजानाम्" अन्नानां "पतिं" स्वामिनं, "सत्पतिं" सतां सन्मार्ग-वर्त्तिनां पालकं ["पत्यावैश्वर्ये ( ६,२, १८ )"—इति पूर्वपदप्रकृतिस्वरत्वम् ] ॥ १ ॥

---

* ऊ० गा० २१प्र० १ध० २सा० ।

† ऋ० सा० ४, २, १, २ ( १भा० ६९७ पृ० )=ऋ० वे० १, १, २१, १ ।

अथ द्वितीया ।

३ १ २ ३ १ २ १ २
सख्येतइन्द्रवाजिनोमाभेमशवसस्पते ।
२ ३ १ २र ३ १ २ ३ १ २
त्वामभिप्रनोनुमोजेतारमपराजितम् ॥ २ * ॥

हे "शवसस्पते" † बलस्य पालकेन्द्र ! "ते" तव "सख्ये" अनुग्रहप्रयुक्ते सखित्वे वर्त्तमाना वयं "वाजिनः" अन्नवन्तः भूत्वा "मा भेम" शत्रुभ्यो भीतिं प्राप्ता मा भूम । अतः "त्वाम्" अभयहेतुम् "अभि प्र नोनुमः" सर्वतः प्रकर्षेण स्तुमः [ णु स्तुतौ ( अदा०, प० ), "णोनः ( ६, १, ६५ )"—इति नत्वम्, यङोलुक् ( २, ४, ७४ ), प्रत्ययलक्षणेन ( १, १, ६२ ), "सन्यङोः ( ६, १, ९ )"—इति द्विर्भावः, "गुणो यङ्लुकोः ( ७, ४, ८२ )"—इत्यभ्यासस्य गुणः, प्रत्ययलक्षणेन धातुसञ्ज्ञायां ( ३, १, ३२ ) लटोमस् ( ३, ४, ७८ ), अदादिवद्भावात् शपोलुक् ( २, ४, ७२ ) ] । कीदृशं त्वाम् ? "जेतारं" युद्धेषु जयशीलं अपराजितं क्वापि पराजय-रहितम् ॥

"प्रनोनुमः"-"प्रणोनुमः"—इति पाठौ ॥ २ ॥

---

* ऋ० वे० १, १, २१, २ ।

† 'अन्नस्य यशसोवाधिपते' - इति वि० ।

अथ तृतीया।

२ १र २र २ २ ३ १ १र ३ १ २
पूर्वीरिन्द्रस्यरातयोनविदस्यन्त्यूतयः।

३ १र २र ३ १ २ ३ २ ३ १ २ ३ २
यदावाजस्यगोमतस्तोतृभ्योमंहतेमघम् ॥ २ * ॥ १९†

॥ इति द्वितीयस्यार्द्धः प्रपाठकः ॥

"इन्द्रस्य" सम्बन्धिन्यः "रातयः" धन-दानानि "पूर्वीः" अनादि-काल-सिद्धाः, अस्येन्द्रस्य सर्वदा यष्टृभ्यो धनदानमेव स्वभाव इत्यर्थः; एवं सति इदानीन्तनोऽपि यजमानः "स्तोतृभ्यः" ऋत्विग्भ्यः "गोमतः" गो-सहितस्य "वाजस्य" अन्नस्य पर्याप्तं "मघं" धनं "यदा" "मंहते" दक्षिणारूपेण ददाति, तदानीं "रातयः" बहु-धन-दान-पूर्वकाणीन्द्रस्यात्म-विषयाणि रक्षणानि "न वि दस्यन्ति" विशेषेण नोपक्षीयन्ते। [ "यदा"-"यदि"—इति पाठौ। "मघ°", "रेक्णः", "रिक्थं" —इत्यादिष्वष्टाविंशति-सङ्ख्याकेषु धननामसु ( निघ० २, १० ) मघशब्दः पठितः। "दाति"-"दाशति"—इत्यादिषु दशसु दानकर्मसु "मंहते"—इति पठितम् ( निघ० ३, २०, १० )। पूर्वीः—पुरु-शब्दस्य "वोतोगुणवचनात् ( ४, १, ४४ )"—इति ङीष्, आद्यस्योकारस्य दीर्घश्छान्दसः, जसि "दीर्घाज्जसिच ( ६, १, १०५ )"—इति निषेधं बाधित्वा "वा छन्दसि ( ६, १, १०६ )"—इति पूर्वसवर्णदीर्घत्वम्, ङीषः प्रत्ययस्वरेणोदात्त-

* ऋ० वे० १, १, ११, ३।  † 'आशादहृक्शुष्म्यम्'—इति वि०।

त्वम्। मंहते—शपः पित्वादनुदात्तत्वम्, तिङश्च ल-सार्वधातुक-स्वरेण, 'तिङतिङः (८, १, २८)"—इति निघातो न भवति "निपातर्यद्यदिहन्त (८,१,३०)"—इति निषेधात्॥३॥१९

॥ आष्टादंष्ट्राद्यम्॥ इन्द्रं विश्वाअवीवृधन्। ऐया हायि। समुद्राऽ१व्या२। चसाङ्गा१यिरा२३ः। ऐया २३हायि। रथायिता१मा२म्। रथायिना२३म्। ऐया २३हायि। वाजानां१ऽसा२त्। पतायिम्या१ती२३म्। ऐया२३हा३४३यि॥(१) सख्ये तइन्द्रवाजिनः। ऐयाहा यि। माभायिमा१आ२। वसास्या१ता२३यि। ऐया२ ३हायि। तुवामा१भी२। प्रनोनू१मा२३ः। ऐया २३ हायि। जेतारा१मा२। पराजा१यिता२३म्। ऐया२ ३हा३४३यि॥(२) पूर्वीरिन्द्रस्यरातयः। ऐयाहायि। न वायिदा१स्या२। तियूता१या२३ः। ऐया २३ हायि। यदावा१जा२। स्यगोमा१ता२३ः। ऐया २३ हायि।

र १ २ १ २ १र २
स्तोतृभ्योऽ१मा २। हतायिमा१घा२३म्। ऐया२३हा३४
१
३यि। ओ२३४५ई। डा(३) ॥ १२ * ॥ [१]

१ २ १ २र र १र २र १र
॥ आष्ट्रादंष्ट्रोत्तरम् ॥ इन्द्रं विश्वा अवीवृधन्नै यादौ।
२ २ १ २ १ १र
होइवा। समुद्रव्यचसम्। गायिरा२३। ऐया२३त्।
१ र २ १ २ १ १र
औ२३होवा। रथायितमꣳर। थायिना२३म्। ऐया
१ र २ १रर २र १ २ १
२३त्। औ२३होवा। वाजानाꣳसत्पतिम्। पाती २
१र १ र २ २ १र २
३म। ऐया२३त्। औ२३होवा२३४३ ॥(१) सख्ये तइन्द्र
र १ २ १र२र१र २ २ १र र २ १
वाजिनऐयादौ। होइवा माभेमशवसः। पाता२ ३
१र १ र २ १र २ १ २ र १
यि। ऐया२३त्। औ२३होवा। त्वामभिप्रनो। नूमा
१र १ र २ १र र २ १ २र १
२३ः। ऐया२३त्। औ२३होवा। जेतारमपरा। जा
१र १ र २ २र १र
यिता२३त्। ऐया२३। औ२३होवा३४३ ॥(२) पूर्वीरि
२ र १ २ १र २र १र २ २ १ २ र १
न्द्रस्यरातयऐयादौ। होइवा। नविदस्यन्त्यू। ता

* ऊ० गा० २प्र० १अ० १२सा० ।

१र १ र २ १र र २ र
यार३ः। ऐयार३त्। औ२३होवा। यदावाजस्यगो।

१ १र १ र २ र १ २र १
माता२३ः। ऐया२३त्। औ२३होवा। स्तोतृभ्योमꣳ

२र १ १र १ र २
हते। माघा२३म्। ऐया२३त्। औ२३होवा३ ४ ३।

१
औ२३४५ई। डा(३)॥ ११ *॥ [२]

५ २ ४र ५ ४र ५ २ १ २
॥ कालेयम् † ॥ इन्द्र वा३यिश्वाअवीवृधान्। समुद्र

१ २ २ २ १ २ १ ५
व्या। चसङ्गिरा२३ः। रथा३यि। ता२ ३ ४। मꣳर।

२ २ १र ३र २ २ ५ ४
था३यिनाम्। वाजानाꣳसौ। वा३४३औ३४वा। पता

५ र २ ४ ५ ४र ५ ३र २
५ यिम्पतायिम् ॥(१) सख्येता३इन्द्रवाजिनः। माभा

२ १ २ ३ २ १ २ १
यिमशा। वसस्पता२३यि। तुवा३म्। आ२३४। भि

५र २ २ १र ३ २ २ ५ ४
प्रनो। नू३माः। जेतारमौ। वा३४३औ३४वा। परा

५ र २ ४ ५ ४र ५ २ १ २
५ जिताम् ॥(२) पूर्वीरा३यिन्द्रस्यरातयाः। नवायिद

१ २ ३र २ १ २ १ ५र
स्या। तियूतया२३ः। यदा३। वा२३४। जस्यगो।

* ऊ० गा० ७प्र० १अ० ११सा०। † 'महाकालेयम्'—इति ख० पु०।

मा२ताः । स्तोतभ्योमौ । वा२३४३ओ२३४वा । हृता३यि

मघाम् । होपूइ । डा(३) ॥ २ * ॥ [३]

॥ नार्मेधम् ॥ इन्द्र विश्वाअवीवृधा३ने । स । मू । द्र

व्या । चसाङ्गा३यिरा: । रथा३यिता२३४माम् । रथा

यिनाम् । औहौहो२३४वा । वा२३४जा हायि । ना९

सात्पाता । औहौहो२३४वा । पा२३४तीम् । एह्निया

६हा ॥(१) सख्ये तइन्द्रवाजिना३ए । मा । आयि । म ।

भा । वसास्या३तायि । तुवा३मा२३४भौ । प्रनोनूमा ।

औहौहो२३४वा । जा२३४यितहायि । रमापारौ । औ

हौहो२३४वा । जा२३४यिताम् । एह्निया ६ हा ॥(२)

पूर्वीरिन्द्रस्यरातया३ए । न । वायि । द । स्या । ति

यूता३याः । यदा२वा२३४जा । स्यगोमाता । औहौ

---

*ऊ० गा० ११प्र० १अ० ३सा० ।

५   १   ५   १र १   २   १र
होऽ२३४वा। स्तोऽ२३४तृह्वायि। ध्योमाऽ१ह्वाता। औ

१   ५   १   ५र   ५   ४
हौहोऽ२३४वा। माऽ२३४घाम। एहियाईह्वा। होऽ५ई।

डा(३) ॥ २ * ॥ [४] १९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य

षष्ठः खण्डः † ॥ ६ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ३ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-

श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-

चार्य्येण विरचिते माधवीये सामवेदार्थ-

प्रकाशे उत्तराग्रन्थे तृतीयोऽध्यायः ‡ ॥

---

* ऊ० गा० २१प्र० २श्र० ३सा०। † 'इति द्वितीयमर्द्धः'—इति वि०।

‡ "अत द्वितीयप्रपाठकस्यार्द्धः समाप्तः"—इत्येव मूल-पद-विवरणादि-सम्मतः, न तु "तृतीयो" नापि "अध्यायः"—इति।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥ २ ॥

## ॥ अथ चतुर्थोऽध्याय आरभ्यते* ॥

तत्र,

प्रथम-खण्डे—

एते असृग्रमिति प्रथमतृचे—प्रथमा ।

२ १ २   ३ १ २   ३ २ ३ १ २ ३ १ २
एते असृग्रमिन्दवस्तिरःपवित्रमाशवः ।

१ २ ३ १   २र
विश्वान्यभिसौभगा ॥ १† ॥

"तिरः पवित्रं"‡ तिर्यग् गच्छन्तं दशापवित्रं प्रति "आशवः" शीघ्रगामिनः "एते" पवमाना "इन्दवः", सोमाः "विश्वानि" सर्व्वाणि "सौभगा" सौभगानि धनानि ¶ "अभि" लक्ष्य "असृग्रम्" ऋत्विग्भिः सृज्यन्ते ॥ १ ॥

---

* 'इदानीं तृतीयमध्यायमारभ्यते'—इति वि० ।

† ऋ० वे० ७, १, १४, १ ।

‡ 'तिरः=अधः'—इति वि० ।

¶ 'विश्वानि अभिसौभगा—विश्वानि सर्वाण्यभिसौभाग्यानि'—इति वि० ।

अथ द्वितीया ।

२ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
विघ्नन्तोदुरितापुरुसुगातोकायवाजिनः ।

१ २ ३ २ ३ १ २
त्मनाकृण्वन्तोअर्वतः ॥ २* ॥

"वाजिनः" बलवन्तः† सोमाः "पुरु" बहूनि "दुरिता" दुरितानि "वि घ्नन्तः" विशेषेण नाशयन्तः "तोकाय" अस्माकं पुत्राय‡ "सुगा" अतिसुखरूपाणि धनानि¶ "अर्वतः" अश्वांश्च "त्मना" आत्मना स्वयमेव "कृण्वन्तः" ददत इत्यर्थः । ऋत्विग्भिः सृज्यन्त इति पूर्वेण सम्बन्धः ॥

"त्मना"-"तना"इति—इति पाठौ, "अर्वतः"-"अर्वते"—इति च ॥ २ ॥

अथ तृतीया ।

३ २ ३ १ २ ३ २ ३क २र ३ १
कृण्वन्तोवरिवोगवेभ्यर्षन्तिसुष्टुतिम् ।

१ २ ३ १ २ ३ १ २
इडामस्मभ्यꣳसंयतम् ॥ ३ § ॥ १

* ऋ० वे० ७, १, २४, २ ।

† 'वाजिनः—अन्नवन्तः'—इति वि० ।

‡, ¶ 'सुगातोकाय—सुखाय पुत्रपौत्राय'—इति वि० ।

§ ऋ० वे० ७, १, २५, ३ ।

सोमाः अस्माकं "गवे" "अस्मभ्यं" च "संयन्त" यदस्मात् संयच्छति। तद् "वरिवः" धनम् "इडाम्" अन्नञ्च "कृण्वन्तः" कुर्वन्तः "सुष्टुतिम्" अस्मदीयां शोभनां स्तुतिम् * "अभ्यर्षन्ति" आभिमुख्येन गच्छन्ति॥ ३॥ १

अथ द्वितीयतृचे—प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १र २र
राजामेधाभिरीयतेपवमानोमनावधि।

३ १ २ ३ १ २
अन्तरिक्षेणयातवे॥ १ †॥

"मनो अधि" मनुष्ये यागं कुर्वाणे सति‡। यद्वा मनावधि मनुर्मन्तव्यो यज्ञस्तस्मिन् "पवमानः" पूयमानः पुनानो वा "राजा" [ राज-शब्देन सोमोऽभिधीयते "सोमं राजानमकृण्वन् (य० मा० २८, ७२)"—इत्यादिषु दृष्टत्वात्, स राजा ] सोमः "मेधाभिः" स्तुतिभिः¶ सह "ईयते" गच्छति। कुत्र? "अन्तरिक्षेण" आकाशमार्गेण द्रोणकलशं प्रति "यातवे" यातुम्। द्रोणाभिगमन-कालेहि स्तोतृभिः स्तूयते खलु॥ १॥

---

* 'सुष्टुतिं—सुखेन स्तुतिम्'—इति वि०।

† ऋ० वे० ७, २,४, १।

‡ 'मनौ अधि—मनुष्ये यजमाने निमित्तभूते'—इति वि०।

¶ 'मेधाभिः ईयते—ऋत्विग्यजमानानां प्रजाभिः'—इति वि०।

अथ द्वितीया ।

१ २ ३ २ ३ १ २ ३ १ २र

आनस्सोमसहोजुवोरूपन्नवर्च्चसेभर ।

३ २ ३ १ २

सुष्वाणोदेववीतये ॥ २ * ॥

हे "सोम !" "देववीतये" देवानां पानाय देवानां कामाय वा † "सुष्वाणः" अभिषुतो वा त्वं "सहः" शत्रुभिर्भवन-समर्थं बलं "जुवः" [ जु—इति गत्यर्थः ‡ ] शत्रून् प्रति शीघ्र-गमनं ¶ यद्वा सर्वतो गमनशीलं बलं । किञ्च [ "न"—इति चार्थे §] "वर्च्चसे" [वर्च्च दीप्तौ (भ्वा०, आ०) दीप्त्यै सर्वत्र प्रका-शनाय रूपञ्च "नः" अस्मभ्यम् "आ भर" आहर प्रयच्छ ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ २ ३ २ ३ १ २

आनइन्दोशातग्विनङ्गवाम्पोषꣳस्वश्व्यम ।

२ ३ १ २ ३ १ २

वहाभगत्तिमूतये ॥ ३ ‖ ॥ २

---

* ऋ० वे० ७, २, ४, २ ।

† 'देववीतये ० ००—देवानां दानाय भक्षणाय वा'—इति वि० ।

‡ निघण्टौ गतिकर्म्मसु पञ्चोत्तरशततमत्वेन पठितम् ( २, १४ ) ।

¶, § 'जुवः—रूपम् । न—न शब्द उपमार्थीयः रूपमित्र'—इति वि० ।

‖ ऋ० वे० ७, २, ४, २ ।

हे "इन्दो" पात्रेषु चरणशील ! दीपनशील ! वा हे सोम ! "शतग्विनं"* शतसहस्रसङ्ख्याकाभिः गोभिः युक्तं "गवां पोषं" गवादीनां पुष्टिवर्द्धनं "स्वश्व्यं" शोभनाश्व-सङ्घ-सहितं "भगत्तिं" भगदत्तिं भजनीय-धन-दानञ्च † "ऊतये" रक्षणाय "नः" अस्माकम् "आवह" प्रापय । गवादीश्च तेषां वृद्धिं प्रयच्छे-त्यर्थः ॥ ३ ॥ २

तन्त्वानृम्णानीति पञ्चर्चं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१　२　३　२　३　१　२　　३१२　३　२　३　२
तन्त्वानृम्णानिबिभ्रतꣳसधस्थेषुमहोदिवः ।

१　२　　३　१　२
चारुꣳसुकृत्ययेमहे ॥ १ ‡ ॥

"महोदिवः" महतोद्युलोकस्य¶ "सधस्थेषु" सहस्थानेषु स्थितं, "नृम्णानि" धनानि § "बिभ्रन्तं" अस्मदर्थं धारयन्तं "चारुं" कल्याणं ‖ हे सोम ! "तं" तादृशं पवमान-लक्षणं "त्वा" त्वां "सुकृत्यया" शोभन-क्रियया "ईमहे" धनानि याचामहे** ॥ १ ॥

* 'शतग्विनं—शतसङ्ख्यातम्'—इति वि० ।

† 'भगत्तिं—शोभनानुमतिप्रदात्रीम्'—इति वि० ।

‡ ऋ० वे० ७, १, ५, १ ।

¶ 'महोदिवः—सकाशात्'—इति वि० ।

§ 'नृम्णानि—धनानि बलानि वा'—इति वि० ।

‖ 'चारुं—शोभनम्'—इति वि० ।

** "ईमहे"—इति याच्ञाकर्मसु निघण्टौ प्रथमं पदम् (३, १९) ।

अथ द्वितीया।

१ २ ३क २र ३ १ २ ३ १ २
संवृक्तधृष्णुमुक्थ्यम्महामहिव्रतम्मदम्।
३ २ ३र ३ १ २
शतम्पुरोरुरुक्षणिम्॥ २* ॥

हे सोम! "संवृक्तधृष्णुं" संवृक्ताः सञ्छिन्नाः धृष्णवो धर्षणशीलाः शत्रवो येनासौ संवृक्तधृष्णुः, तम् †, "उक्थ्यं" उक्थार्हं प्रशस्यम्, ‡ "महामहिव्रतं" महीय-बहु-कर्माणं, ¶ "मदं" मदकरं "शतं" बहूनि "पुरः" शत्रूणां पुराणि "रुरुक्षणिं" विनाशयन्तम्; त्वां धनानाम् ईमहे इति § सम्बन्धः॥ २॥

अथ तृतीया।

१ २ ३ २ ३क२र ३ १ २ ३ २
अतस्त्वारयिरभ्ययद्राजानꣳसुक्रतोदिवः।
३ १ २ ३ १ २
सुपर्णोअव्यथीभरत्॥ ३ ‖ ॥

---

* ऋ० वे० ७, १, ५, १।

† 'संवृक्तधृष्णुम्—अतिशयेन संवर्त्तकं, धृष्णुं धारणात्मकम्'—इति वि०।

‡ 'उक्थ्यम्—उक्थ्यानि स्तोत्राणि यत्र विद्यन्ते स उक्थ्यः, तम् उक्थ्यं सोमम्'—इति वि०।

¶ 'महामहिव्रतं—महेति महान्तं व्रतमन्नं कर्म्म वा यत्र, स महिव्रतः, तं महिव्रतम्'—इति वि०। महदर्थशब्दद्वयश्रुतेरतिमहत्त्वं गम्यत इति भावः।

§ पूर्वर्च्चि श्रुतम्।

‖ ऋ० वे० ७, १, ५, २। "रयिमभिराजः"—इति च तत्र पाठः।

हे "सुक्रतो" शोभनकर्म्मन् * पवमान सोम! "रयिः" रयिम् धनम्प्रति "अभि अयत्" † अभिगमयति "राजानं" ‡ "त्वा" त्वाम् "अतः दिवः" अमुष्मात् द्युलोकात् "अव्यथी" व्यथा-रहितः "सुपर्णः" श्येनवत् ¶ "भरत्" आहरत्। तथाच श्रूयते—'आदाय श्येनोऽभरत् सोमम् (ता० ब्रा०)'—इति॥

"अव्यथी"-"अव्यथिः"—इति पाठौ॥ ३॥

अथ चतुर्थी।

१ २ २ १२ ३ १ २र ३१ २

अधा हिन्वान इन्द्रियं ज्यायो महित्वमानशे।

२ १ २र

अभिष्टिकृद्विचर्षणिः॥ ४ §॥

"अधा" अथ "विचर्षणिः" कर्मणां विद्रष्टा ‖ "अभिष्टि-कृत्" यजमानानाम् अभीष्ट-फलस्य कर्त्ता सोमः ** "इन्द्रियं" स्वकीयं फलं †† "हिन्वानः" प्रेरयन् "ज्यायः" प्रशस्ततरं "महित्वं" महत्वम् "आनशे" प्राप्नोति ‡‡॥ ४॥

---

* 'सुक्रतो—सुक्रतु' शोभनकर्म'—इति वि०।

† 'अयत्—आनयन्'—इति वि०।

‡ 'राजानं—सोमम्'—इति वि०।

¶ 'सुपर्णः—पक्षीभूत्वा'—इति वि०।

§ ऋ० वे० ७, १, ५, ४।

‖ 'विचर्षणिः—विविधानां पुरुषाणां स्वामी'—इति वि०।

** 'अभिष्टिकृत्—अभिष्टिः यजमानः तं यः करोति स अभिष्टिकृत्'—इति वि०।

†† 'इन्द्रियम्—इन्द्रस्य रूपं सोमम्'—इति वि०।

‡‡ 'आनशे—अप्राप्याप्तौ'—इति वि०।

अथ पञ्चमी ।

१र २ ३१ २ ३ १ २र ३ १ २
विश्वस्मा इत्स्वर्दृशे साधारणꣳरजस्तुरम् ।
३ २ ३ २ ३ १ २
गोपामृतस्य विर्भरत् ॥ ५ * ॥ ३

"रजस्तुरम्" † उदकस्य प्रेरकम् "ऋतस्य" यज्ञस्य "गोपां" गोपयितारं‡ "विश्वस्मै" सर्वस्मै "स्वर्दृशे" देवाय ¶ "साधारणम् इत्" समानम् § आवसन्तं सोमं "विः" पक्षी ‖ श्येनो "भरत्" स्वर्गादाहरत् ॥ ५ ॥ ३

अथ तृचात्मके चतुर्थसूक्ते—

प्रथमा ।

३ १ २ ३ १ २ ३ १ २ ३ १ २
इषे पवस्व धारया मृज्यमानो मनीषिभिः ।
१ २ ३ १ २र
इन्दो रुचाभि गा इहि ॥ १ * * ॥

---

* ऋ० वे० ७, १, ५, ५ । "विश्वस्मा ई स्व०"—इति ख० पु० पाठः । "विश्व-स्मादस्व०"—इति मु० पाठः ।

† 'रजस्तुरं—रजः-संयुक्तम्'—इति वि० ।

‡ 'गोपां—गतयाध्यानसंयुतम्'—इति वि० ।

¶ 'स्वर्दृशे—स्वः स्वर्गलोकस्य, दृशे दर्शनाय'—इति वि० ।

§ 'इत्—इति पदपूरणः'—इति वि० ।

‖ 'विः—भक्षणीयम्'—इति वि० ।

* * छ० आ० ६, १, २, ९ ( २ भा० ६४ पृ० ) = ऋ० वे० ७, १, ३८, ३ ।

हे "इन्दो" सोम ! "मनीषिभिः" ऋत्विग्भिः "सृज्यमानः" शोध्यमानः त्वम् "इषे" अस्माकमन्नाय "धारया" "पवस्व" क्षर । "रुचा" रोचमानेनान्धसा "गाः" पशून् "अभीहि" अभिगच्छ ॥ १ ॥

अथ द्वितीया ।

२ १ २र ३ २ ३ १ २
पुनानोवरिवस्कृध्यूर्ज्जञ्जनायगिर्वणः ।
१ २ ३ २ ३ १ २
हरेसृजानआशिरम् ॥ २ * ॥

हे "गिर्वणः" गीर्भिर्वननीय ! "हरे" हरितवर्ण सोम ! "आशिरं" † क्षीरं प्रति "सृजानः" विसृज्यमानः "पुनानः" पूयमानः त्वं "जनाय" ‡ जनार्थं "वरिवः" ¶ धनम् "ऊर्जम्" § अन्नञ्च "कृधि" कुरु ॥ २ ॥

अथ तृतीया ।

२ ३ २ ३ १ २० ३१ २ ३ २
पुनानोदेववीतयइन्द्रस्ययाहिनिष्कृतम् ।
२ ३ ३ १ २ ३२
द्युतानोवाजिभिर्हितः ॥ ३ ‖ ॥ ४

---

* ऋ० वे० ७, १, ३८, ४ ।

† 'आशिरं—क्षीरं दधि वा'—इति वि० ।

‡ 'जनाय—यजमानार्थम्'—इति वि० ।

¶ 'वरिवः—वरिष्ठम्'—इति वि० ।

§ 'ऊर्जम्—अन्नं यशो बलं वा'—इति वि० ।

‖ ऋ० वे० ७, १, ३८, ५ ।

हे सोम ! "वाजिभिः" हविर्लक्षणान्नयुक्तैर्यजमानैः सह* "द्युतानः" दीप्यमानः "देववीतये" यज्ञार्थं "पुनानः" पूयमानः "हितः" हितकरः † त्वम् "इन्द्रस्य" "निष्कृतं" स्थानं "याहि" गच्छ ॥

"हितः"-"यतः"—इति पाठौ ॥ ३ ॥ ४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थस्याध्यायस्य

प्रथमः खण्डः ‡ ॥ १ ॥

---

द्वितीय-खण्डे¶—

प्रथमतृचे—प्रथमा ।

३　२　३　१　२र　　३　२　३　१　२　३　१　२

अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।

१　२　३क　२र

हव्यवाड्जुह्वास्यः ॥ १ § ॥

---

* 'वाजिभिः—वाजमन्नञ्च पुरोडाशादि-लक्षणं, तद्येषामस्ति ते वाजिनः इति यजमानाः तैर्वाजिभिः ; अथवा वाजसनेयैः वाजिभिः अध्वर्युभिः'—इति वि० ।

† 'हितः—निहितः स्थापित इत्यर्थः—इति वि० ।

‡ 'बहिष्पवमानमुक्तम्'—इति वि० ।

¶ 'सप्तदशस्तौमिकं भेदमाह । इदानीमाज्यानि । आग्नेयम्—इति वि० ।

§ ऋ० वे० १, १२, ६ ।

"अग्निः" आहवनीयाख्यः तस्मिन् प्रक्षिप्यमाणेन "अग्निना" निर्मन्थन-प्रणीतेन वा सह "समिध्यते" सम्यग् दीप्यते*। कीदृशोऽग्निः? "कविः" मेधावी "गृहपतिः" यजमान-गृहस्य पालकः "युवा" नित्य-तरुणः "हव्यवाट्" हविषोवोढा [ वहतेः "वहश्च (३, २, ६४)"—इति ण्वि-प्रत्ययः; णित्त्वादुपधा-वृद्धिः (७, २, ११५) 'गतिकारकोपपदात् कृत् (६,२,१३९)"—इत्युत्तर-पद-प्रकृति-स्वरत्वम् ] "जुह्वास्यः" जुहूरूपेण मुखेन युक्तः† [ हूयते अनयेति जुहूः "हुवः श्लुवच्च (उ०, २, ६१)"—इति क्विप्; तत्सन्नियोगाद्द् (३, २, १७८ वा०) दीर्घश्च; श्लुवद्भावात् द्विर्भावः; चुत्व-जश्त्वे; प्रातिपदिक-स्वरेणान्तो-दात्तः (फि०१, १); जुहूरास्यं यस्येति बहुव्रीहौ पूर्वपद-प्रकृति-स्वरत्वेन स एव शिष्यते (८, २, १); शेष-निपातः; यणादेशे "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (८, २, ४)"—इत्या-कारः स्वरितः ]॥ १ ॥

अथ द्वितीया।

१ २र ३ १ २ ३ १ २ ३ १ २
यस्त्वामग्ने हविष्पतिर्दूतन्देवसपर्य्यति।
१ २ ३ १ २
तस्यस्मप्राविताभव ॥ २ ‡ ॥

---

*'अग्निनाग्निः समिध्यते—अग्नीनां वैवेत्याद्योन्याकरोति। तेन निर्मथ्याग्निना अग्निः समिध्यते सवनीयः'—इति वि०।

† 'जुह्वास्यः—जुह्वते आस्ये यस्य जुह्वास्यः। अथ जुहोति क्रिया यस्य आस्ये क्रियते। अथवा जुहूनामा स्रुक् आस्यं मतो यस्य स जुह्वास्यः'—इति वि०।

‡ ऋ० वे० १, १, १२, २।

हे "अग्ने !" "देव !" "यः" "हविष्पतिः" यजमानः "दूतं" "त्वाम्" "सपर्यति" * परिचरति । तस्य यजमानस्य "प्राविता" "भव स्म" अवश्यं रक्षको भव । [ हूयत इति हविः "अर्चि-शुचि (उ०,२,१०७)"—इत्यादिना इसिः, प्रत्यय-स्वरेण इकार उदात्तः ( ३, १, ३ ), हविषः पतिः हविष्पतिः, "नित्यं समासेऽनुत्तरपदस्थस्य ( ८, ३, ४५ )"—इति षत्वम्, "पत्यावैश्वर्ये ( ६, २, १८ )"—इति पूर्वपद-प्रकृतिस्वरत्वम् । सपर्यति—सपर-शब्दात् "कण्ड्वादिभ्यो यक् ( ३, १, २७ )"—इति यक्, धातुप्रकरणात् गुणप्रतिषेधार्थत्वात् यकः कित्त्वाच्च सपरशब्दस्य धातुत्वात्ततोविहितस्य यक आर्द्धधातुकत्वे सति "अतोलोपः(६,४,४८)"—इति लोपः, "सनाद्यन्ता धातवः (३,१,३२)"—इति धातुसञ्ज्ञायां तिप्, "कर्त्तरि शप् (३,१,६८)", तस्मिन् पूर्वस्य "अतोगुणे ( ६, १, ९६ )"—इति पररूपत्वम्, यकः प्रत्यय-स्वरेणोदात्तत्वम् ( ३, १, ३ ), शपा सह एकादेशस्य "एकादेशउदात्त० ( ८, २, ५ )"—इत्युदात्तत्वम्, "तिङतिङः ( ८, १, २८ )"—इति निघातो न भवति "यद्वृत्तान्नित्यम् ( ८, १, ६६ )"—इति प्रतिषेधात् ] ॥ २ ॥

अथ तृतीया ।

२ ३१ २ ३ १ २ ३ १ २ ३ १ २
योअग्निन्देववीतये हविष्मा ँ आविवासति ।
१ २
तस्मैपावकम्मृडय ॥ ३ † ॥ ५

---

* "सपर्यति"—इति परिचरणकर्मसु तृतीयं नैघण्टुकम् ( ३, ५ ) ।

† ऋ० वे० १, १, १२, ९ ।

"हविष्मान्" हविर्युक्तो "यः" यजमानः "देववीतये" देवानां हविर्लक्षणहेतुयागार्थम् "अग्निम्" "आविवासति" अग्नेः समीपे विशेषेणागत्य परिचर्यां करोति *। हे "पावक" अग्ने! "तस्मै" † "मृडय" तं यजमानं सुखय। [देववीतये—'वी गति-प्रजन-कान्त्यसन-खादनेषु (अदा०, उभ०)'—इत्यस्मादशनार्थात् क्तिन्, देवानां वीति र्यस्मिन् यागे स देववीतिः, "बहुव्रीहौ पूर्वपद-प्रकृतिस्वरत्वम्, "नब्विषयस्यानिसन्तस्य (फि०, २, ३)"—इति पर्य्युदासाद्धविः-शब्दोदात्तः, मतुपः सर्वानुदात्तत्वात् स एव शिष्यते। आविवासति—'वा गति-गन्धनयोः (अदा० प०)'—अस्मादन्तर्भावित-ण्यर्थादागमयितुमिच्छतीत्यर्थे सन्, आङ्पूर्वानेच्छा; परिचर्यायां पर्यवस्यतीति विवासति-शब्दः परिचर्यार्थे निघण्टौ (३, ५, १०) पठितः, द्विर्भावः, अभ्यासस्य ह्रस्वः (७, ४, ५९), "सन्यतः (७, ४, ७९)"—इति इत्वम्, "ञ्नित्यादिर्नित्यम् (६, १, १९७)"—इत्याद्युदात्तत्वम्, "तिङ्ङतिङः (८, १, २८)"—इति निघातो न भवति "यद्वृत्तान्नित्यम् (८, १, ६६)"—इति प्रतिषेधात्, "तिङि चोदात्तवति (८, १, ७१)"—इत्याङो "सहसुपेत्यत्र (२, १, ४) सहेति योगविभागादाङस्तिङा सह समासे समासान्तोदात्तत्वे प्राप्ते (८, १, २२३) "परादिश्छन्दसि बहुलम् (६, २, १९९)"—इत्युत्तर-पदाद्युदात्तत्वम्। तस्मै—"क्रियाग्रहणं कर्त्तव्यम् (२, ३, १३ वा०)"—इति सम्प्रदानत्वाच्चतुर्थी॥ ३॥ ५

---

* 'आविवासति—दीपयति'—इति वि०।

† 'तस्मै पावक—चतुर्थ्येषा द्वितीया-स्थाने भवति, तं पावकम्'—इति वि०।

अथ द्वितीयतृचे*—प्रथमा ।

३ १ २ ३१२३१२ ३ १ २
मित्रꣳहुवेपूतदक्षंवरुणञ्चरिशादसम् ।
१ २ ३ २ ३ १ २
धियङ्घृताचीꣳसाधन्ता ॥ १ † ॥

अहमस्मिन् कर्म्मणि हविः-प्रदानाय "पूतदक्षं"‡ पवित्रबलं "मित्रं" "हुवे" आह्वयामि [ ह्वयतेः "बहुलञ्छन्दसि ( २, ४, ७३ )"—इति शपोलुकि सति "ह्वः सम्प्रसारणम् ( ६, १, ३२ )"—इत्यनुवृत्तौ 'बहुलं छन्दसि ( ६, १, ३४ )"—इति सम्प्रसारणे उवङादेशः, "तिङतिङः ( ८, १, २८ )"—इति निघातः ]। तथा "रिशादसं" रिशानां हिंसकानाम् अदसमत्तारम्¶ "वरुणञ्च" हुवे। कीदृशौ मित्रावरुणौ ? "घृताचीं"§ घृतमुदकमञ्चति भूमिं प्रापयति या धी येन कर्म्मणा तां घृताचीं "धियम्" "साधन्ता" साधयन्तौ ॥ [ 'राध साध संसिद्धौ

---

* 'मैत्रावरुणमाज्यम्'—इति वि० ।

† य० वे० ३३, ५७ = ऋ० वे० १, १, ४, २ ।

‡ 'पूतदक्षं'—पूतं मेध्यं, दक्षं शीघ्रम्'—इति वि० ।

¶ रिशादसं—शत्रूणां हिंसकम्'—इति वि० ।

§ 'घृताचीं—'घृतमुदकं तस्य प्रदानसमर्थाम्'—इति वि० ।

‖ महीधरस्त्वेवमिमां व्याचष्टे—'द्वे मधुच्छन्दोदृष्टे गायत्र्यौ आद्या त्रिकोक्तदेवत्या। मित्रं वरुणञ्चाहं हुवे आह्वयामि। कीदृशम्? पूतदक्षम् पूतं पवित्रं सदाचारं दक्षयति धन-पुत्रादिभिर्वर्द्धयति पूतदक्षस्तम् दक्षवृद्धौ शीघ्रार्थे इत्यस्मात् कर्मण्यण्। रिशादसम् रिशन्ति हि सन्ति रिशा दुष्टाः तान् समन्तादस्यति नाशयति रिशादसः तम्। रिश हिंसायाम् दस उपक्षये। द्वयोर्विशेषणे। कीदृशा

(दि०,प०)'—इत्यस्मादन्तर्भावितण्यर्थाल्लटः श्नादेशे (६,१, १६१), श्नं बाधित्वा व्यत्ययेन (३,१,८५) शप्, अदुपदेशत्वात् उपरि शतृ-प्रत्ययस्य ल-सार्वधातुकानुदात्तत्वम्, द्वितीयाद्विवचनस्य शपश्च "अनुदात्तौ सुप्पितौ (३,१,४)"—इत्यनुदात्तत्वे, "धातोः (६, १, १६२)"—इति धातुस्वर एव शिष्यते, "सुपां सु-लुक्० (७, १, ३९)"—इत्यादिना विभक्तेराकारादेशः ॥१॥

अथ द्वितीया।

३ १ २
ऋतेनमित्रावरुणावृतावृधावृतस्पृशा।
१ २ ३ १ २
क्रतुम्बृहन्तमाशाथे ॥ २ * ॥

हे "मित्रावरुणौ!" [ मित्रश्च वरुणश्चेति मित्रावरुणौ "देवता द्वन्द्वे च (६, ३, २६)"—इति पूर्वपदस्यानङादेशः, तादृशौ ] युवां "क्रतु" प्रवर्त्तमानमिमं सोमयागम् "आशाथे" आनशाथे व्याप्नुवन्तौ [ "छन्दसि लुङ्-लङ्-लिटः (३, ४, ६)" —इति वर्त्तमाने लिट्, नुड़भावश्छान्दसः ]। केन? "ऋतेन" अवश्यभावितया सत्येन फलेन अस्मभ्यं फलं दातुमित्यर्थः। कीदृशौ युवाम्? "ऋतावृधौ" [ 'ऋतमित्युदक-नाम (निघ० १, १२, ६), सत्यं वा यज्ञं वा'—इति यास्कः† ] उदकादीना-

---

नुभौ? धियं कर्म साधन्ता साधयन्तौ। कीदृशीं धियम्? घृताचीं घृतमच्यते हूयते यत्र ताम्'—इति।

* ऋ० वे० १, १, ४, २।

† 'ऋतमित्युदकनाम'—इत्यंशस्तु द्वितीय-पञ्चविंशे, 'सत्यं वा यज्ञं वा'—इति तु चतुर्थानविंशे इति विवेकः।

मन्यतमस्य वर्द्धयितारौ*। अतएव 'ऋतस्पृशा' उदकादीन् स्पृशन्तौ†। कीदृशं क्रतुम्? "बृहन्तम्" अङ्गैरुपाङ्गैश्चातिप्रौढ़म् ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १ २र ३ १ २३१ २
कवीनोमित्रावरुणातुविजाताउरुक्षया ।
१ २ ३ १ २
दक्षन्दधातेअपसम् ॥ ३ ‡ ॥ ६

"मित्रावरुणा" मित्रावरुणौ एतौ देवौ "नः" अस्माकं "दक्षं" बलम् "अपसं"¶ कर्म च "दधाते" पोषयतः, कीदृशौ? "कवी" मेधाविनौ, "तुवि-जाता" तुविजातौ बहूनामुपकारकतया समुत्पन्नौ, "उरुक्षया" बहु निवासौ [ मित्रावरुणौ—मित्र-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः ( फि० १, १ ), वरुण-शब्दो नित्स्वरेणाद्युदात्तः ( ६, १, १९७ )। तुविजातौ—बहूनामुपकारकतया तत्सम्बन्धित्वेन जाता विति षष्ठीसमासे समासान्तोदात्तत्वम् ( ८, १, २२३ ), चतुर्थीसमासे हि "क्ते च ( ६, २, ४५)"—इति क्वचित् पूर्वपदप्रकृतिस्वरः स्यात्। उरूणां बहूनां क्षयौ उरुक्षयौ, 'क्षि निवास-गत्योः ( तु० प० )'—इति धातोः क्षियन्त्यस्मिन्निति क्षय इत्यधिकरणे एव अच्-प्रत्ययान्तस्य "चितः

* 'ऋतावृधौ—ऋतमन्नं तद् वर्द्धयतः'—इति वि० ।

† 'अग्निष्टोमादिकम्'—इति वि० ।

‡ ऋ० वे० १, १, ४, ४ ।

¶ 'अपसं—धनम्'—इति वि० ।

(६, १, १६३)"—इत्यन्तोदात्तत्वे प्राप्ते "चयो निवासे (६, १, २०१)"—इत्याद्युदात्तत्वं विहितम्, समासे तु "समासस्य (८, १, २२३)"—इत्यन्तोदात्तत्वं बाधित्वा कृदुत्तरप्रकृति-स्वरेण (६, २, १३९) प्राप्तमुत्तरपदाद्युदात्तत्वम् यद्यपि थाथादि-स्वरेणान्तोदात्तत्वेन बाध्यते तथापि "परादिश्छन्दसि बहुलम् (६, २, १९९)"—इत्युत्तरपदाद्युदात्तत्वं द्रष्टव्यम्। दक्षः—दक्षतेरुत्साहकर्मणो जित्त्वादाद्युदात्तः (६, १, १९७)। आप्यते फलमनेनेत्यपः कर्म, "आपः कर्माख्यायां ह्रस्वो नुट् च वा (उ० ४, १०९ दी० वृ०)"—इत्यसन्तस्य अपसस्पारे इत्यादौ नित्त्वा (६, १, १९७) दाद्युदात्तस्यापस्-शब्दस्यात्र व्यत्ययेन प्रत्ययाद्युदात्तत्वम् (३, १, ३)] ॥ २ ॥ ६

अथ तृतीयर्चे*—प्रथमा।

१ २ १ २ २र ३ १ २र
इन्द्रेणसꣳहिदृक्षसेसञ्जग्मानोअबिभ्युषा।
३ १२ ३ १ २
मन्दूसमानवर्चसा ॥ १ † ॥

हे मरुद्गण! त्वम् "इन्द्रेण" "सञ्जग्मानः" सङ्गच्छमानः "सं दृक्षसे हि" सम्यग् दृश्येथाः खलु, अवश्यमस्माभिर्द्रष्टव्य-

* 'ऐन्द्रमाज्यम्'—इति वि०।

† ऋ० वे० १, ६, १२, ७।

मित्यर्थः *। कीदृशेनेन्द्रेण ? “अबिभ्युषा” भीति-रहितेन, कीदृशाविन्द्रमरुद्गणौ ? “मन्दू” नित्य-प्रमुदितौ, † “समान-वर्चसा” तुल्य-दीप्ती। [‘पुरा कदाचित् वृत्र-वध-दशायाम् इन्द्रस्य सखायः सर्वे देवा वृत्र-श्वासेनापसारितास्तदानीमिन्द्रस्य वृत्र-सम्बन्धि-सकल-सेना-जयार्थं मरुद्भिः सङ्गमो भूतः’—सोऽयमर्थो “वृत्रस्य त्वश्वसथाय (छ० आ० ४, १, ४, २; ६५६ पृ०)”—इति मन्त्रे सङ्गृहीतः; ‘इन्द्रो वै वृत्रं हनिष्यन्’—इति ब्राह्मणे (ता०) प्रपञ्चितश्च; इन्द्रशब्दः परमैश्वर्यवत्त्वं मरुद्गणस्याभिधत्ते, तदानीमिन्द्रस्य सम्बोधनं बहिरेवाध्याहर्त्तव्यम्। तथाचैवमृक् यास्केनैवं व्याख्याता—“इन्द्रेण हि सन्दृक्षसे सङ्क्रममाणोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्, समानवर्चसेत्येतेन व्याख्यातम् (४, १२)”—इति। सन्दृक्षसे—सम्पश्येथाः “दृशेश्चेति वक्तव्यम् (७, १, ७ वा०)”—इत्यात्मनेपदम्, दृशेः “लिङर्थे लेट् (३, ४, ७)”—इति प्रार्थनायां लेट्, थासस्से (३, ४, ८०), “लेटोऽडाटौ (३, ४, ९४)”—इत्यडागमः, “सिब्बहुलं लेटि (३, १, ३४)”—इति सिप्, “सञ्ज्ञापूर्वको विधिरनित्यः (प० शे० ९३)”—इति गुणाभावः, व्रश्चादिना (८, २, ३६) षत्वम्, “षढोः कः सि (८, २, ४१)”

* ‘इन्द्रेण सं हि दृक्षसे मरुद्गण’ इति वाक्यशेषः। अथवा व्यत्ययेन व्याख्या क्रियते—मरुद्गणेन दृश्यसे इन्द्रः। अथवा आदित्य इन्द्रोऽभिधीयते, मरुद्गणा रश्मिगणाः सह दृश्यते। अथवा इन्द्रेण आदित्येन सङ्गममानः सङ्क्रममाणः’—इति वि०।

† ‘मन्दू—मदन-स्वभावेन’—इति वि०।

—इति कत्वम्, "आदेश-प्रत्यययोः (८, ३, ५९)"—इति सिपः षत्वम्; बहुल-ग्रहणात् सिपः परस्तात्त्ववपि भवति, सिपा व्यवधानात् षश्चादेशो न भवति, शपः पित्त्वादनुदात्तत्वम् (३, १, ४), उत्तरस्य ल-सार्वधातुकानुदात्तत्वम् (६, १, १८६), धातुस्वर एव शिष्यते (६, १, १६२), हि-शब्द-योगात् "तिङ्-तिङः (८, १, २८)"—इति निघातो न भवति "हि च (८, १, ३४)"—इति प्रतिषेधात्। सञ्जग्मानः—गमेः सम्पूर्वात् छन्दसि लुङ्लङ्लिटः (३, ४, ६)"—इति वर्त्तमाने लिट्, "समोगम्यृच्छि० (१, ३, २९)"—इत्यात्मनेपद-विधानात् लिटः कानजादेशः (३, २, १०६), द्विर्भावः (६, १, ८), हलादि-शेषः (७, ४, ६०), अभ्यासस्य चुत्वम् (७, ४, ६२), "गमहन० (६, ४, ९८)"—इत्युपधा-लोपः, कानचश्चित्त्वादन्तोदात्तत्वम्, गति-समासे (२, २, १८), कृदुत्तरपदप्रकृतिस्वरत्वम् (६, २, १३९)। अबिभ्युषा—'ञि भी भये (जु०, प०); पूर्ववल्लिट् (३, ४, ६), "शेषात् कर्त्तरि० (१, ३, ७८)" —इति परस्मैपदम्, "क्वसुश्च (३, २, १०७)"—इति लिटः क्वसुरादेशः, तस्य कित्त्वाद् गुणाभावः (१, १, ५), अभ्यासस्य ह्रस्व-जश्त्वे (७, ४, ५९)—(८, ४, ५४) क्रादिनियमात् प्राप्तइट् (७, २, १३) "वस्वेकाजाद्घसाम् (७, २, ६७)"—इति नियमात् निवर्त्तते नञ्समासे तृतीयैकवचने भत्वाद "वसोः सम्प्रसारणम् (६, १, १३१)"—इति वकारस्य उकारादेशः, "सम्प्रसारणाच्च (६, १, १०८)"—इति पूर्वरूपत्वं बाधित्वा "एरनेकाच (६, ४, ८२)"—इति यणादेशः, अव्यय-

पूर्वपदप्रकृतिस्वरत्वम् ( ६, २, १६८ ), पूर्वेण सह संहितायां मोकारस्य "एङः पदान्तादति ( ६, १, १०९ )"—इति पर-रूपत्वे प्राप्ते "प्रकृत्यान्तः पादमव्यपरे ( ६, १, ११५ )"—इति प्रकृतिभावः। मन्द—'मद स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु' ( भ्वा०, आ०, ), "इदितो नुम् धातोः ( ७, १, ५८ )"—इति नुमागमः, कुरित्यनुवृत्तौ "खरु-शङ्कु-पीयु-नीलङ्गु-लिगु ( उ० १, ३६ )"—इत्यत्राविभक्तिक-निर्देशाद्धन्तेर्हिङ्कुरितिवद्वाहुलकादपि कुरित्युक्तम्, प्रत्ययस्वरेणान्तोदात्तः ( ३, १, ३ ), [illegible]वचने सौ "प्रथमयोः पूर्वसवर्णः (६, १, १०४), [illegible] च "सुपां सु लुक्० (७, १, ३९)"—इत्यादिना पू[illegible]म्, समानं वर्णो ययोरिति वा यस्येति बहुव्रीहिः, [illegible]सुपां सु-लुक्० ( ७, १, ३९ )"—इत्याकारः, समान[illegible]दिकान्तो-दात्तत्वम् ( फि० १, १ ), बहुव्रीहौ पूर्वपद-प्रकृति-स्वरेण ( ८, २, १ ), तदेवावशिष्यते ॥ १ ॥

अथ द्वितीया।

१ २र ३ २उ ३ १ २ ३ १ २ ३ २
आदहस्वधामनुपुनर्गर्भत्वमेरिरे।
१ २ ३ १ २ ३ १ २
दधानानामयज्ञियम् ॥ २ * ॥

अहेत्यवधारणार्थः† ]। "आत् अह" वर्षर्त्तोरनन्तरमेव "स्वधामनु" इतःपरं जनिष्यमाणमन्नमुदकं वा अनुलक्ष्य महतो

---

* ऋ० वे० १, १, २२, ४।

† "अहइति च ह इति च विनिग्रहार्थौ यौ पूर्वेण सम्प्रयुज्येते। अयमहेदं करो त्वयमिदं ह करिष्यतीति"—इति निरु० १, ५

देवाः "पुनः गर्भत्वम् आ ईरिरे" मेघ-मध्ये जातस्य गर्भाकारं प्रेरितवन्तः* [ प्रतिसंवत्सर मेवं कुर्वन्तीति दर्शयितुं पुनः-शब्दः प्रयुक्तः]। कीदृशा मरुतः? "यज्ञियं" यज्ञार्हं "नाम" "दधानाः" धारयन्तः। [ सप्तसु गणेषु मरुतामीदृक् वातानामीदृक् चेत्यादीनि यज्ञ-योग्यानि नामान्यन्यत्राम्नातानि। "अन्धः" —इत्यादिष्वष्टाविंशति-सङ्ख्याकेष्वन्ननामसु "ऊर्क्" (१५), "रसः" (१६), "स्वधा" (१७)—इति पठितम्; (निघ० २, ७) "अर्णः"—इत्यादिष्वेकशत-सङ्ख्याकेषूदक-नामसु च "तेजः" (८६), "स्वधा" (८७), "अक्षरम्" (८८)—इति पठितम् (निघ० १, १२)। "आत्"-"अह"-निपातावाद्युदात्तौ (फि० ४, १२)। स्वधा—स्वं लोकं दधाति पुष्णातीति स्वधा, "आतोऽनुपसर्गे कः (३, २, ३), कृदुत्तरप्रकृतिस्वरत्वम् (६, २, १३९)। अनु-पुनः-शब्दौ निपातावाद्युदात्तौ (फि०, ४, १२)। गर्भस्य भावो गर्भत्वं प्रत्ययस्वरः (३, १, ३)। एरिरे—अन्तर्भावितण्यर्थात् 'ईण् गतौ (अदा०, प०)'—इत्यस्मादनुदात्तेतः परस्य लिटो झस्य इरेच्, चित्त्वादन्तोदात्तः (६, १, १६३), "सह सुपा (२, १, ४)"—इत्यत्र "सुपा" योगविभागादाङा सह तिङः "समासस्य (८, १, २२३)"—इत्यन्तोदात्तत्वम्, "इजादेश्च गुरुमतोऽनृच्छः (३, १, ३६)"—इत्याम् न भवति मन्त्रत्वात् † अह-शब्द-योगान्निघाताभावः "तु-पश्य-

* 'आदित्य-रश्मय उत्पद्यन्ते, सविता सह गच्छन्ति, तैः पुनरस्तमिते सवितरि गर्भत्वं यान्ति'—इति वि०।

† "कास्प्रत्ययादाममन्त्रे लिटि (३, १, ३५)"—इति सूत्रादिह 'अमन्त्रे'—इत्यनुवृत्तेरिति भावः।

प्रशस्ताहैः पूजायात् (८,१,३८)"—इति निषेधात्। दधानाः— शानचश्चित्वादन्तोदात्तत्वे प्राप्ते ( ६, १, १६२ ) "अभ्यस्तानामादिः ( ६, १, १८९ )"—इत्याद्युदात्तत्वत्। यज्ञमर्हति यज्ञियम्, "यज्ञर्त्विग्भ्यां घ-खञौ ( ५, १, ७१ )"—इति घ-प्रत्ययः "आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम् ( ७,१,२ )"— इतीयादेशः प्रत्ययस्वरेण इकार उदात्तः (३, १, ३ )] ॥ २ ॥

अथ तृतीया।

३ १ २　　　२ २ ३ १ २　　　२ १ २
वीड़ु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः।
१ २　　२ २ ३ १ २
अविन्द उस्रिया अनु ॥ ३ * ॥ ७

अस्ति किञ्चिदुपाख्यानम्—'पणिभिर्देवलोकाद् गावोऽपहृताः अन्धकारे प्रक्षिप्ताः ताश्चेन्द्रो मरुद्भिः सहाजयत'—इति। एतच्च बहृचानुक्रमणिकायां सूचितम्—"पणिभिरसुरैर्निगूढा गा अन्वेष्टुं सरमादेत मुनीन्द्रेण प्रेषिता ता ऋग्भिः पणयोऽमित्रीयन्तः प्रोचुः"—इति। मन्त्रान्तरेऽपि दृष्टान्ततया सूचितम्— "निरुद्धा आपः पणिनेव गावः"—इति] तदेव उपाख्यान मभिप्रेत्योच्यते—हे "इन्द्र!" "वीडु चित्"† दृढमपि दुर्गमस्थानम् "आरुजत्नुभिः" ‡ अभिभञ्जद्भिः "वह्निभिः" वोढृभिः अन्यत्र

* ऋ० वे० १, १, ११, ५।

† 'चित्—इति पदपूरणः। वीडु अन्तरिक्षे स्थितः'—इति वि०।

‡ 'अन्तरिक्षे स्थिता जगच्छोषयन्ति आरुजत्नवः'—इति वि०।

¶ 'दहनात्मकै रश्मिभिः—इति वि०।

नेतुं समर्थः मरुद्भिः सहितस्त्वं "गुहा चित्" गुहायामपि स्थापिता "उस्रियाः" गाः "अन्वविन्दः †" अन्विष्य लब्धवानसि । [ "ओजः" (१), "पाजः"(२)—इत्यादिष्वष्टाविंशति-सङ्ख्याकेषु बल-नामसु "दक्षः"(१३) "वीळु"(१४) "च्यौत्नम्" (१५)—इति पठितम् । ( ८, ९ ) नव-सङ्ख्याकेषु गो-नामसु "अघ्न्या"(१), "उस्रा" (२), "उस्रिया" (३)—इति पठितम् निघ० (२, ११ )। वीडु—प्रातिपदिक-स्वरः ( फि० १, १ )। चित्—आदिरुदात्तः । आरुजत्नुभिः—'रुजो भङ्गे ( तु० प० ) इत्यस्मादौणादिकः कत्नुच् प्रत्ययः, किच्चाद् (१, १, ५) गुणाभावः, चित्त्वादन्तोदात्तत्वम् ( ६, १, १६ ) समासे कृदुत्तर-पदप्रकृतिस्वरत्वञ्च (६,२, १६० )। गुहा—सप्तम्यां डादेशः (७, १, ३९), "ग्रामादीनाञ्च ( फि०, २, १५ )"—इत्याद्युदात्तः । वह्निभिः—"वहि-श्रि-यु-श्रु-ग्ला-हा-त्वरिभ्यो निः (उ०४, ५१)"—इति नि-प्रत्ययः, नित्त्वादाद्युदात्तः । अविन्दः—'शेमुचादीनाम् (७, १, १९ )"—इति नुमागमः, लुङ्-लङ्-लृङ्क्ष्वडुदात्तः ( ६, ४, ७१ )। वसन्तीति उस्रियाः वसेः कर्त्तरि यक् प्रत्ययः, षत्वाभावश्च बाहुलकादूहनीयः ( ३, १, ८५ ), उक्तं हि 'यत्र पदार्थविशेष मुक्तं प्रत्ययतः प्रकृतेश्च तदूह्यम् ( ३, १, ८५ भा० )'—इति, इकारः प्रत्ययस्वरेणान्तोदात्तः ( ३, १ ३ )॥ २ ॥ ७

---

० 'उस्रियाः—आदित्यरश्मयः—इति वि०।

† 'अविन्दः विदन्नानि ( चदा० प० )—इत्यस्येदं रूपम्'—इति, 'अनु—आनुपूर्व्येण' इति च वि० ।

अथ चतुर्थे तृचे* प्रथमा।

१ २ ३ १ २ ३ १ ३ १ २र ३ २ ३ २
ताहुवेययोरिदम्पप्ने विश्वम्पुराकृतम्।

३ १ २र
इन्द्राग्नीनमर्द्धतः॥ १†॥

"ता" तौ तादृशौ "इन्द्राग्नी" "हुवे" आह्वये। "ययोः" इन्द्राग्न्योः "पुरा" पूर्वस्मिन् काले "कृतं" "विश्वं" सर्वम् "इदं" पूर्वावृत्तं कीर्त्तितं वीर्यं "पप्ने" पन्यते ऋषिभिः स्तूयते;—ता-विन्द्राग्नी हुवे इत्यन्वयः। तौ चेन्द्राग्नी न "मर्द्धतः" [ मर्द्धतिः हिंसाकर्मा ( निघ०२, १९, १४ ) ] स्तोतॄन् अहिंस्रः। अतो ऽस्मान् आहुतौ रक्षतामिति भावः॥ १॥

अथ द्वितीया।

३ १ २ ३ १२ १ २ ३ १ २
उग्राविघनिनामृधइन्द्राग्नीहवामहे।

१ २ ३ १ २
तानोमृड़ातईदृशे॥ २‡॥

"उग्रा" उग्रौ उद्गूर्ण-बलौ अतएव "मृधः" शत्रून् "विघनिता" विघनितौ विशेषेण हतवन्तौ "इन्द्राग्नी" "हवामहे" आह्वयामहे। तौ चेन्द्राग्नी "ईदृशे" अस्मिन् सङ्ग्रामे "नः"

* 'ऐन्द्राग्नमाज्यम्'—इति वि०।

† ऋ० वे० ४, ८, २७, ४।

‡ ऋ० वे० ४, ८, २७, ५।

अस्मान् "मृडातः" सुखयताम् [ यद्वा मृड़ातिः उपदयाकर्मा; नोऽस्माकं मृडातः उपदयां कुरुताम् ] ॥ २ ॥

अथ तृतीया ।

३ ३ २ १ २र ३ १ २र
हथोवृत्राण्यार्याहथोदासानिसत्पती ।
३ २उ ३ २ ३ १ २
हथोविश्वाअपद्विषः ॥ ३* ॥ ८

हे इन्द्राग्नी! "आर्या" आर्यैः कर्मानुष्ठातृभिः कृतानि "वृत्राणि" उपद्रवजातानि "हथः" हिंस्थः। तथा "सत्पती" सतां पालयितारौ सन्तौ "दासानि" दासाः कर्महीना:† शत्रवः, तैः कृतानि चोपद्रवजातानि हथः। अपि च "विश्वाः" सर्वाः "द्विषः" द्वेष्ट्रीः शत्रुभूताः प्रजाः "अप हथः" विनाशयथः अतोऽस्माकमप्येव मेव कुरुता मिति भावः ॥

"हथः"-"हनः"—इति पाठौ ॥ ३ ॥ ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य द्वितीयः खण्डः‡ ॥ ४ ॥

---

* ऋ० वे० ४, ८, २८, १ ।

† 'दासानि—यादादीनि रक्षः-पिशाचादीनि'—इति वि० ।

‡ 'उक्तं प्रातःसवनम्'—इति वि० ।

अथ तृतीयखण्डे*

प्रथमतृचे—प्रथमा ।

३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
अभिसोमासआयवःपवन्तेमद्यम्मदम् ।
३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
समुद्रस्याधिविष्टपेमनीषिणोमत्सरासोमदच्युतः ॥ १† ॥

"आयवः" गमन-शीलाः "सोमासः" सोमाः "मद्यं" मद-करं मदम् आत्मीयं रसम् "अभिपवन्ते" अभितो निर्गमयन्ति । कुत्रेत्युच्यते "समुद्रस्य" अन्तरिक्षस्य "अधिविष्टपे" अधिकं समुच्छ्रिते पवित्रे यद्वा समुद्रस्य यस्मात् समुद्द्रवन्ति रसास्तस्य कलशस्य "अधि" उपरि "विष्टपे" स्थाने पवित्रे निर्गमयन्ति । कीदृशाः ? "मनीषिणः" मनस ईषितारो "मत्सासः" मदकराः "मदच्युतः" मदस्राविणः ॥

"विष्टपे"-"विष्टपि"—इति पाठौ, "मदच्युतः"-"स्वर्विदः" इति च ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २र ३ २ ३ १ २ ३ १ ३ १ ३ २
तरत्समुद्रम्पवमानऊर्म्मिणाराजादेवऋतम्बृहत् ।
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ २
अर्षामित्रस्यवरुणस्यधर्म्मणाप्रहिन्वानऋतम्बृहत् ॥२‡॥

* 'इदानीं माध्यन्दिनं सवनमुच्यते। तत्रोच्यन्ते—गायत्री-त्रैष्टुभादीनि सामानि, तासां नामत आर्षेयमुक्तम्'—इति वि०।

† छ० आ० ६, १, २, ८ ( २भा० ६६पृ० )=ऋ० वे० ७, ५, १४, ३।

‡ ऋ० वे० ७, ५, १५, २। "समुद्रियः"—इति च तत्र पाठः ।

"पवमानः" पूयमानः "देवः" द्योतमानः "बृहत्" अत्यन्तम् * "ऋतम्" सत्यभूतः † "राजा" सोमः "समुद्रम्" अन्तरिक्षं कलशं वा "ऊर्मिणा" धारया ‡ "तरत्" तरति "हिन्वानः" प्रेर्यमाणः। "ऋतम्बृहत्" अत्यन्तं सत्यभूतः स सोमः "मित्रस्य वरुणस्य" मित्रावरुणयोः "धर्मणा" धारणार्थं "प्र अर्षा" प्रार्षति प्रकर्षेण गच्छति ¶॥

"अर्षा"-"अर्षन्"—इति पाठौ॥ २॥

अथ अध्यास्यारूपा तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ २र
नृभिर्येमाणोहर्यतोविचक्षणोराजादेवःसमुद्र्यः॥ ३ §॥ ९

"नृभिः" कर्म-नेतृभिः ऋत्विग्भिः "येमानः" नियम्यमानः "हर्यतः" स्पृहणीयो "विचक्षणः" विद्रष्टा "देवः" दीप्यमानः "समुद्र्यः" अन्तरिक्षे भवः ‖ "राजा" सोमः इन्द्रार्थं पवते इति शेषः॥

"येमाणः"-"येमानः" इति पाठौ॥ २॥ ९

---

* 'बृहत्—महत् अथवा बृहत्साम'—इति वि०।

† 'ऋतं—सत्यम् अन्नम् प्रजापतिः यज्ञं वा'—इति वि०।

‡ 'ऊर्मिणा—उदकसङ्घातेन'—इति वि०।

¶ 'अर्षा—द्रष्टा'—इति वि०।

§ ऋ० श्रा० ६, १, ४, ३ (२भा० ११२पृ०)=ऋ० वे० ७, ४, १७, ४।

‖ "समुद्रः"—इत्यन्तरिक्ष-नामसु पञ्चदशं नैघण्टुकम् (१, ३)। 'समुद्र्यः—समुद्रात्मकः'—इति वि०।

॥ पौरुमद्गम् ॥ अभिसोमासआयवः। औहोवा।
एहिया। हाउ। पवन्तेमा २दियम्मदम्। समुद्रा १
स्या २। धायिविष्टपाइयि। मानीषा२३४यिणाः। मत्सा।
रासौवा३ओ२३४वा। हा३हायि। मदा५च्युताः ॥(१)
मत्सरासोमदच्युतः। औहोवा। एहिया। हाउ। म
त्सरासो २मदच्युतः। तरात्सा१मू २। द्राम्यवमा३। ना
ऊर्म्मा२३४यिणा। राजा। दायिवौवा३ओ२३४वा। हा
३हायि। ऋता५म्बृहात् ॥(२) राजादेवऋतम्बृहत्। औ
होवा। एहिया। हाउ। राजादेवा २ऋतम्बृहत्। अ
र्षामा१यिन्वा २। स्यावरुणा३। स्याधर्म्मा२३४णा। प्र
हायि। न्यानौवा३ओ२३४वा। हा३हायि। ऋता५म्बृ
हात्। हो५इ। डा(३) ॥ १४ * ॥ [१]

* ऊ० गा० २प्र० १अ० १४सा०।

२र र र र र
॥ उभयतःस्तोभं गौतमम्॥ हावभिसोमासआयवो
१ २र १ ७ ३र २
हाउ। पावन्तेम। दियाम्मदा२३४म्। हाहोयि। स
१ र २१र र २ ३र २ १
मुद्रस्याधिविष्टपे। मानीषिणा३४ः। हाहोयि। मात्स
२ ३र २ २ १ ५ ४ ५
रासा३४ः। हाहो३। मदो२३४वा। च्यु५तोई हायि॥(१)
२र र र र १ २र १ ७
हाउमत्सरासोमदच्युतोहाउ। मात्सरासः। मदाच्यु
३र २ १ २ १ २र १ र
ता२३४ः। हाहोयि। तरत्समुद्रम्पवमा। नाऊर्म्मि
२ ३र २ १ र २ ३र २
णा३४। हाहोयि। राजादायिवा३४ः। हाहो३यि।
२ १ ५ ४ ५ २र र र र
ऋतो२३४वा। बृ५हो ६ हायि॥(२) हाउराजादेवऋत
१ र २र १ ७ ३र र
म्बृहद्धाउ। राजादेवः। ऋताम्बृहा२३४त्। हाहोयि।
१ र २ १ २ १ २ १ २ ३र २ १
अर्षामित्रस्यवरुण। स्याधर्मणा ३४। हाहोयि। प्रा
२ ३र २ २ १ ५ ४
चिन्वाना३४ः। हाहो३यि। ऋतो२३४वा। बृ५ हो ६
५
हायि(३)॥ १५ *॥ [२]

* ऊ० गा० २५० १च० २५सा०।

२ १ ४र ५र
॥ द्विहिङ्कारं वामदेव्यम् ॥ अभिसो२३मासआयवाः।

१ र र २३र २ १
पा ऽवन्ते मघम्मद ँ समुद्रस्याधिविष्टपा ऽयिमनी होइ। ऊ

१ २ १ र २३र २ १
म्मा २। पा२३यिणः। मत्सरासोमदौ होइ। ऊम्मा २।

२ १ २ ४ ५ २ १ ४र ५
ऽच्युता। औ३होवा ॥(१) मत्सरा २ ३ सोमदच्युताः।

१ र र २३र २ १
मात्सरासोमदच्युतम्त्सरत्समुद्रस्यवमा ऽनऔ होइ। ऊम्मा

२ १र र र २३र २ १
२। मा२३यिणा। राजादेवा ऽक्रतौ होइ। ऊम्मा २।

१ ४ ५ २र १र ४ ५
बृहात्। औ२३होवा ॥(२) राजादा २ ३ यिवक्रतम्बृ

१ र र र २३र २
हात्। रा ऽजादेवक्रतम्बृहादर्षामित्रस्यवरुणा ऽस्यधौ होइ।

१ १ २ १ र २३र २ १
ऊम्मा २। मा२३णा। प्रच्छिन्वाना ऽक्रतौ होइ। ऊम्मा

१ ४ ५ ४
२। बृहात्। औ२३होवा। हो५ई। डा(३)॥ ७* ॥[३]

१ २ १ र २
॥ गायत्रपार्श्वम् ॥ आभी। सोमासआ३१उवा२३।

१ २र १ २१ २ १ २१र२र १
या२३४वाः। पवन्ते मद्दियम्मद ँ समुद्राधिविष्टपेमनीषि

* ऊ०गा० ४प्र० २ख० ७सा०।

३ ११११ २ १ २ २ २ १ ४ १
णा२३४५ः। मत्सारा१सारः। मदा३। ऊ२३वा३। च्यू
१११ १ २ १ २ १
ता२३४५ः॥(१) मात्सा। रासोमदा३१उवा२३। च्यू
५ ० १२ २ १ १ २ १ २ १ १२ २ १
२३४ताः। मत्सरासोमदच्युतस्तरत्समुद्रम्पवमानऊर्म्मि
२ ११११ २२ १ २ २ २ १ ४
णा२३४५। राजादा१यिवारः। ऋता३म्। ऊ२३वा
१ ११११ २२ १ २ २
३। बृहा२३४५त्॥(२) राजा। दायिवऋता३१उवा२
५ १२ २ २२ १ २ १ २ १ २ २ १ १ २
३। बृ२३४हात्। राजादेवऋतम्बृहद्यमित्रस्यवरुण
१ २ ११११ २ १ २ २ २ १
स्यधर्म्मणा२३४५। प्रहायिन्वा१नारः। ऋता३म्। ऊ
४ १ ११११
२३वा३। बृहा२३४५त(३)॥ ८*॥ [४]

५ २ ४२ ५ ४२ ५ १ २२
॥ पौरुहन्मनम्॥ अभिसो३मास आयवाः। पावन्ते
१ १ १ २ २ १
म। दियाम्मा१दा२म्। मादा२म्। सामुद्रस्या। धा
२ १ २ १ २ ३ ५
यि। विष्टपा३यि। विष्टपा३यि। मानीषा२३४यिणाः।
१ २२ १ २ ३ ५ ४
मात्सरासो। मादच्यु२३४ताः। मदा ५ च्युताः॥(१)

* ऊ० गा० ४प्र० १ख० ८सा०।

५ २र १ २ १ १ २

मत्सरासः । मदाच्यु१ता२ः । च्यूता२ः । तारत्समु ।

१ २ १ २ १ २ ३ ५ १

द्राम् । पवमा३ । पवमा३ । नाऊर्मा२३४यिणा । रा

२र र १ २ ३ ५ ४ ५र र

जादेवाः । आर्त्तम्बृ२३४हात् । ऋतापृम्बृहात् ॥(२) राजा

२ ४५ ४ ५ १ र २र १ २ २

दा३यिवऋतम्बृहात् । राजादेवः । ऋतांबृ१हा२त् । आ

र २ १ २ १ २ १ २ ३

र्षामित्र । स्या । वरुणा३ । वरुणा३ । स्याधर्मा२३

५ १ २ र १ २३ ५ ४

४णा । प्राहिन्वानाः । आर्त्तंबृ२३४हात् । ऋतापृम्बृहा

४

त् । होपुइ । डा(३) ॥ ८ * ॥ [५]

५ २ ४र ५ ४र ५ १ २र

॥ दैगतम् ॥ अभिसो३मासआयवाः । पावन्ते म ।

१ २ ३ २ ३ २ २ १ र

दियाम्मा१दा२म् । समू३ । हौ३हो३वा । द्रस्याधिवि

र २ १ १ ३ ५र र

ष्टपेमानी१षिणा२ः । मत्सा२३ । रा२सा२३४औहोवा ।

२ १ ३ १ १ १ १ ५ २ ४र ५ ४ ५

ए३ । मदा२च्युता२३४५ः ॥(१) मत्सरा३सोमदच्युताः ।

१ २र १ २ ३ २ ३ २ २

मात्सरासः । मदाच्यू१ता२ः । तरा३त् । हौ३हो३वा ।

* ऊ० गा० ४प्र० २ख० ८सा० ।

समुद्रस्यवमानाऊ१र्मिणा२। राजा२३। दा२यिवा२३४औहोवा। ए३। ऋता२म्बृहा२३४५त् ॥(२) राजा दा३यिवऋतंबृहात्। राजादेवः। ऋतांबृ१हा२त्। अर्षा३। हौ३। हो३वा। मित्रस्यवरुणस्याधर्माणा२। प्रहा२३यि। न्वा२ना२३४औहोवा। ए३। ऋता२म्ब हा२३४५त्(३) ॥ १० * ॥ [६]

॥ हारायणम् ॥ अभिसोमौहो२यिसआयवाः। पावन्तेमद्यम्मदम्। समूद्रा३स्या। धिविष्टपायि। मना३हायि। षायिणा२ः। मत्सरासोमदोवा३ओ२३४वा। च्यूपूनो६हायि ॥(१) मत्सरासोहो२यिमदच्युताः। मात्सरासोमदच्युतः। तरात्सा३मू। द्रपवमा। नऊ३हा। मायिणा२। राजादेवऋतोवा३ओ२३४वा। बृ

* ऊ० गा० ४प्र० २अ० १०वा०।

५ १ २र र १ र र
५होईहायि ॥(२) राजादेवौहो२ऋतंबृहात्। राजादे

२ २ १ २
वऋतंबृहत्। ऋर्षामा ३ यिना। स्यवद्णा। स्यधाइ

२ १ १ र २ १ ५ ४
हा। मार्णा२। प्रहिन्वानऋतोबा३ऋो२३४वा। बृ५हो

५
ईहायि(३) ॥ ११ * ॥ [७]

२ र ३
॥ अच्छिद्रम् ॥ अभितोमा। सञ्चा२१उवा२३। या

५ १ २र१ २१३११११ २ र
२३४वाः। पवन्तेमद्दियन्मदा२३४५म्। पवन्तेमा। हि

५ २ १ र २१ररर
या३१उवा२३। मा२३४दाम्। समुद्रस्याधिविष्टपेमनी

१३११११ २ १ र२
षिणा२३४५ः। समुद्रस्या। धिवि। ष्टा। पेमना३१उ

५ २ १रर२ १ ३११११
वा२३यि। षी२३४णाः। मत्सरासोमदच्युता२३४५ः।

२ र ५ २
मत्सरासाः। मदा३१उवा२३। च्यु२३४ताः ॥(१) मत्स

र ५ २ १रर
रासाः। मदा३१उवा२३। च्यु२३४ताः। मत्सरासो

२ १३११११ २ २
मदच्युता२३४५ः। मत्सरासाः। मदा३१उवा२३। च्यु

* ऊ० गा० ४प्र० २अ० ११सा०।

५ १ २ १ २र र १ ३ १ १ १ १ २
२३४ता:। तरत्समुद्रम्पवमानऊर्मिणा२३४५। तरत्स
१ २ १ ५
मू। द्रम्पव। मा। नऊ२आउवा२३। मो२३४णा।
१र र २र१ २ १ २ २र र र
राजादेवऋतंबृहा१त्। राजादेवा:। ऋता२१उवा२३।
५ २र र र १ २ १ २ २र र र
बृ२३४हात्। राजादेवऋतंबृहा१त्। राजादेवा:। ऋ
५
ता२१उवा२३। बृ२३४हात्। राजादेवऋतंबृहा१त्।
१र २ १ २
राजादेवा:। ऋता२१उवा२३। बृहात्। अर्षामित्रस्य
१ २ १ ३ १ १ १ १ र र १ २
वरुणस्यधर्मणा२३४५। अर्षामित्रा। स्यवरु। णा। स्य
५ १ २र १ २ १ २
धा२१उवा२३। मा२३४णा। प्रहिन्वानऋतंबृहा१त्।
२ र ५
प्रहिन्वाना:। ऋता२१उवा२३। बृ२३४हात्(३) ॥१२*॥[८]

२ र र १ ५ १
॥ रौरवम्॥ अभिसोमासआ२आया२३४वा:। पाव
र र र ३ २ १ २
न्तेमद्यम्मदँसमुद्रस्याधिविष्टपेमनीषिणा:। ओहा
२ १ २र २ १ २ २
२उवा। मत्सरासोमदा२३हायि। ओहा२उवा। च्यु

---

* ज० गा० ४प्र० २ख० १२सा०।

२ २ ४ ५ २ २२ १ ५
ता। औ ३ होवा ॥(१) मत्सरासोमाइदच्यु २३४ताः।
१ २२ २ ३ २ १
मा ऽत्सरासोमदच्युतस्तरत्समुद्रम्पवमानऊर्म्मि णा। औ
२ २ १२२२ २ १ २ २
हा३उवा। राजादेवऋता२३ॅहायि। औहा ३ उवा।
१ ४ ५ २२ २ २ १ ५
बृहात्। औ २ ३ होवा ॥(२) राजादेवआऋतंब २३४हा
१ २२ २ ३ ३
त्। राजादेवऋतंबृहदर्षामित्रस्यवरुणस्यधर्मणा।
१ २ २ १ २ २ १
औहा३उवा। प्राहिन्वानऋता२३ॅहायि। औहा३उ
२ १ ४ ५ ४
वा। बृहात्। औ२३होवा। होश्५इ। डा(३) ॥१२*॥[५]
१ २ २२ २ २२१२
॥ मानवोत्तरम् ॥ होवायि। अभिसोमासआयवः।
१ २ ७१ २ १
होवायि। पावन्तेमद्यम्मदम्। सामुद्रस्या। धायि
७ १ ७ २ ५ २ १
विष्टया३१यि। मनीरियिणा२३४यिणाः। मत्सारा २ ३
२ २ ३ ५२ २ २ ५ १
सा३ः। मारदा२३४औहोवा। च्यू२३४ताः ॥(१) होवा
२ १२२ २ १ २ १ २ २
यि। मत्सरासोमदच्युतः। होवायि। मात्सरासोम

* ज० गा० ७प्र० १ख० १२सा०।

१ ० २ १ ० २ ० ३
हच्युतः । जारतमनु । द्राम्यवमा३१ । नऊर्म्मी२३४यि
५ २र १ २ १ ३ ५र र
णा । राजाहा२३यिवाः । आर्त्ती २ ३ ४ औहोवा ।
३ ५ १ र र २र १ २ १ २ १
व २३४हात् ॥(२) होवायि । राजादेवक्रृतम्बृहत् । हो
र र ०र २ १ ० २
वायि । राजादेवक्रृतंबृहत् । आर्षामित्र । स्यावरुणा
० ३ ५ २ १ २ १ ३
३१ । स्यधार्म्मा२३४णा । प्रहायिन्वा२३ना३ः । आर्त्ती
५र र २ ५
२३४औहोवा । बृ२३४हात्(३) ॥ १४ * ॥ [१०]

१ २ १ र र र १ र
॥ आनूपमाध्यम्म् ॥ अभीअभी । सोमासा३आया
१ २र १ ० १
१वा२ः । पावन्ते म । दियाम्मा १ हा२म् । सामूर
१ १ र २ १र २ १ र २
द्रास्या२ । धिविष्टपेमनीषा२३यिणाः । मत्सारा ३ सा
१ ४ २ ५ १ २ १ २
३ः । मा२३दा३ । च्यू३४५तोई्वायि ॥(१) मत्सामत्सा ।
र र १ २ १ १ १ र २
रासोमा३दाच्यु १ता२ः । तारा२त्सामू२ । इपवमान
१र २ २र २ २ १ ४
ऊर्म्मा२३यिणा । राजाहा३यिवा३ः । आ २३ ता३म् ।

* ऊ० गा० ७प्र० २अ० १४सा० ।

२ ५ १२ २ १२ २ २ १ २
वृ३४५होईहायि ॥(२) राजाराजा। देवऋ३तांवृ१हा

१ २ २२ १ २ १ १
२त्। राजादेवः। ऋतांव१हा२त्। आर्षा२मायि

१ २१ २ १ २ २
त्रा२। स्यवरुणस्यधर्मा२३णा। प्रहायिन्वा३ना३ः।

१ ४ २ ५
आर२३त्तां३म्। वृ३४५होईहायि(३) ॥ १५ ॥[११]

४ ३ २ ४२ ५ २ २ २ १
॥ वाभ्रम् ॥ अभिसोमासआ। हा३हा३यि। या२

२ ५ १ १२ १ ७
३४। वायवोवा। पवाहो२। तेमाहो२। हायआ

१ २ २ १ २ ३२ २
दा२म्। सामुद्रस्या। धिवायिष्टापेमनाउवा३। ऊ

५ १ १ १ २
३४पा। षिणा२ः। मात्सा२रासा२ः। मद। च्यु

३ ५२ २ ४ ३२ ४२ ५ २ २ २
२ता२३४औहोवा ॥(१) मत्सरासोमदा। हा३हा३यि।

२ ५ १ १२
च्यू२३४। तश्चुतोवा। मत्साहो२यि। रासाहो२।

१ ७ १ २ १ २ ३ २
मादच्युता२ः। तारत्समु। द्रस्यावामा। नआउवा३।

२ ५ १ १ १ १
ऊ३४पा। मिणा२। राजा२दायिवा२ः। ऋतम्।

* ऊ० गा० ७प्र० २अ० १५सा०।

३ ५र र ३र ४र र २ ४ ५ २ २
बृ२हा२३४औहोवा ॥(२) राजादेवऋतम् । हा३हा३यि ।

१ ५ १र १र २
बृ२३४ । हहृहोवा । राजाहो२यि । देवाहो२ । आ

७ १ र २ १ २ ५
तंबृहा२त् । आर्षामित्र । स्वधाउवा३ । ऊ२४पा ।

१ १ १ १ ३
मणा२ । प्राहा२यिन्वाना२ः । ऋतम । बृ२हा२३४

५र र २ ५
औहोवा । ऊ२२३४पा(३) ॥ १६ ॥ [१२]

५ ४ २ ४ ५र ४ ५ १
॥ अभीवर्त्तम् ॥ अभा३यिसो३माऽस्आयवोवा । पा

२र १ २ १ ३
वन्त्ते म । दियाम्मा१दा३स् । सामुद्र्या३१२३४ । धि

४ ५र २ १ २ १ २ ३ २
विष्टपे । मनायिषा१यिणा२ः । म२पारा१सा२ः । मदा

१ ३ १ १ १ १
३ । च्यू२३४५ । ता२३४५ः(१) ॥ १६* ॥ [१३]

५ २ ४र ५ ४ ५ २ १ २र १
॥ कालेयम् † ॥ मत्सरा३सोमदच्यूताः । मत्सारासो ।

२ ३ २ १ २ ३ २ १ २ ४र ५र
मदच्यूता२३ः । तरत्समू३ । द्रा२३४म् । पवमानऊ ।

---

* ऊ० गा० ७प्र० २आ० १६सा० । † "महाकालेयम्"—इति वि० ।

२ २ १२ ३ २ २ ४
मा३यिणा। राजादेवौ। वा२४३वा। ऋतापुम्व्रृहात्।

५
वोपुई। डा(२)॥ १७*॥ [१४]

५ २ ४२ ५ ४२ ५ १ १२
॥ गौङ्गवम्॥ अभिसो३मासआयवाः। पावा२। ते

३ २ ४ ५ २ १ २
मद्दिया३म्। मादाम्। समुद्रस्याधिविष्टा२३पा २ यि।

३ २ ४ ५ २ १ २ २ ३ २ ४
मना३यिषायिणाः। समुद्रस्याधिविष्टये। मना३यिषा

५ १ २२ १ २ २ १ ५
यिणाः। मात्सरा। सा। औ२हो। मदो२३४वा।

४ ५ ५ २ ४२ ५ ४ ५ १
च्यूपुतोइहायि॥(१) मत्सरा३सोमदच्युताः। मात्सा २।

१२ २ ३ २ ४ ५ १ २ १ १ ३ २
रासोमदा३। च्यूताः। तरत्समुद्रम्पवा२३मा३। नऊ

४ ५ १ २ १ २ १ २ ४ ५ १
३र्मीयिणा। तरत्समुद्रम्पवमा। नऊ३र्मीयिणा। रा

२ २२ १ २ २ १ ५ ४ ५
जादे। वा। औ२हो। ऋतो२३४वा। बृपुवोइहा

५२ २ २ ४ ५२ ५ १ १२ ३
यि॥(२) राजादा३यिवऋतंबृहात्। राजा २। देवऋ

२ ४ ५ १२ २ १ २ १ १ ३ २
ता३म्। बृहात्। अर्षामित्रस्यवरुण२३णा२। स्यधा२

---

* ऊ० गा० ७प्र० २आ० १७गा०।

४ ५ १ २ १ २ १ ३ २ ४ ५ १ २र
र्मीणा। अर्षाभिन्नस्यवरूण। स्यधा३र्मीणा। प्राद्विन्वा।

१ २ २ १ ५ ४ ५
ना। औ३हो। ऋतोर३४वा। बृ५हो६हायि(३)॥१८*॥[१५]

२ र १ २
॥ भारद्वाजम्॥ अभिसोमा। सआया१ वा२ः।

१ २र १ २ १ २र
पावन्ते मद्यमदम्। समूद्रा१स्या२। धायिविष्टपे। म

१ २ १ २ १ ३ ५२
नायिषार्यिणा२ः। मत्सारा१सा२३ः। मा२दा२३४औ

र ३ ५
होवा। च्यू२३४ताः(१)॥१५†॥[१६]

२ र १ २ ३ २ ४ ५
॥ मैधातिथम्॥ अभिसोमोहायि। सआ३याबाः।

१ २ २ १ २ १ २
पवन्ता२होऽ१यि। माऔ३हो। दायाउवा। मादाउ

१ र २ २ १ २ १
वा। समुद्रस्याधिविष्टपाऔ३हो। मानाउवा। षा

२ १ र २ २ १ २र १ ३र
यिणाउवा। मत्सरासाऔ३हो। मदा। औहो। वा

५ ४ ५ २ र १ २ ३
हो२३४वा। च्यूपूतो६हायि॥(१) मत्सरासोहायि। म

२ ४ ५ १ २ २ १ २
दा३च्यूताः। मत्सरा२होऽ१यि। साऔ३हो। मादा

* ऊ० गा० ८प्र० २ अ० १८सा०। † ऊ० गा० ६प्र० २ अ० १५सा०।

उवा । च्यूताउवा । तरत्समुद्रम्पवमाऔ२हो । ना
आउवा । मायिणाउवा । राजादेवाऔ२हो । ऋता ।
औहो । वाहो२३४वा । बृ५होइहायि ॥(२) राजादेवो
हायि । ऋता२म्बहात् । राजादा२होश्यि । वाऔ२
हो । आत्तीउवा । बृहाउवा । अर्षामित्रस्यवरुणा
औ२हो । स्याधाउवा । माणाउवा । प्रहिन्वानाऔ२
हो । ऋता । औहो । वाहो२३४वा । ब५होइहा
यि(२) ॥ ६* ॥ [१७]

॥ उत्सेधम्† ॥ अभिसोमासआयवः । पव । तेमा
३४औहोवा । दियम्मदा२म् । हा३१उवा२३ । ऊ३४
पा । समूद्रया । औहोवाहायि । धायिविष्टपायि ।
मनीषायिणाः । हा३१उवा२३ । ऊ३४पा । मत्सादरा

* ऊ० गा० ९प्र० २ख० ६सा० । † "उत्सेधः"—इति ख० पु० ।

सः । औहोवायि । मदाइच्यूऽताई५ईः ॥(१) मत्सरा
सोमदच्युतः । मत्स । रासा३४औहोवा । मदच्युताऽ
रः । हाइ१उवा२३ । ऊ२४पा । तरा३त्समु । औहो
वाहायि । द्रापवमा । नऊर्म्मायिणा । हा३१उवा२३ ।
ऊ२४पा । राजा३देवः । औहोवाहायि । ऋता३म्बृ५
हाई५ईत् ॥(२) राजादेवऋतंबृहत् । राजा । देवा
३४औहोवा । ऋतंबृहाऽरत् । हा३१उवा२३ । ऊ२४
पा । अर्षा३मित्रा । औहोवाहायि । स्यावरुणा । स्य
धर्म्मणा । हा३१उवा२३ । ऊ२४पा । प्रहा३यिन्वानः ।
औहोवाहायि । ऋता३म्ब५हा ई५ईत् । औ२३
४५(३) ॥ २ * ॥ [१८]

॥ सदोविशीयम् ॥ अभिसोमासआयवओहाओहा२

* ऊ० गा० १२प्र० १ खं० ३सा० ।

ए। औहोऔहो३वा। पवस्व मदियन्मदम्। ओ३हा।
समुद्रस्याधिविष्टपेमनीषिणः। ओ३हा। मत्सारा१सा
२ः। ओ३हा। ओ३हा३ए। औ३होयि। औ३हो
३वा। मद। च्यू२ता२३४औहोवा॥(१) मत्सरासो
मदच्युतओहाओहा३ए। औहोऔहो३वा। मत्सरा
सोमदच्युतः। ओ३हा। तरत्समुद्रम्पवमानऊर्म्मिणा।
ओ३हा। राजादा१यिवा२ः। ओ३हा। ओ३हा३ए।
औ३होयि। औ३हो३वा। ऋतम्। बृ२हा२३४औ
होवा॥(२) राजादेवऋतंबृहदोहाओहा ३ ए। औहो
औहो३वा। राजादेवऋतंबृहत्। ओ३हा। अर्षा।
मित्रस्यवरुणस्यधर्म्मणा। ओ३हा। प्रहायिन्वा१ना२ः।
ओ३हा। ओ३हा३ए। औ३होयि। औ३हो ३ वा।

हाइयिहौयि । न्यानाइहो । ऋतम् । व२हा२३४औ
होवा । जनित्रा२३४५म्(३) ॥ ८ * ॥ [२०]

॥ दैर्घश्रवसम् ॥ अभिसोमासआयवओहा । ओहा३
ए । पवन्तेमदियम्मदम् । ओ३हा । ओ२हा३ए२३४ ।
समू३४द्रस्या । धायिविष्ठ । पेमानीषिणाः । ओ२हा ।
ओ२हा२ए२३४ । मत्सा३४रासा३ः । मदो २ ३ ४ वा ।
च्यू५तो६हायि ॥(१) मत्सरासोमदच्युतओहाओहा३ए ।
मत्सरासोमदच्यूतः । ओ३हा । ओ२हा३ए३४ । तरा
३४त्समू । द्राम्पव । मानाऊर्म्मिणा । ओ३हा । ओ
३हा३ए३४ । राजाजा२३४दे वा३ः । ऋतो२३४वा । वृ६
५हो६ हायि ॥(२) राजादेवऋतंबृहदोहाओहा३ए । रा
जादेवऋतंबृहात् । ओ२हा । ओ२हा३ए३४ । अर्षा

* ऊ० गा० १४प्र० १अ० ९गा० ।

३४मित्रा । स्यावरु । णस्याधर्म्मणा । ओइहा । औ

इहाइए३४ । प्रहा३४यिन्वानाइ: । ऋतौ२३४वा । बृ

५हो६हायि(३) ॥ ५ * ॥ [२१]

॥ सन्तनि ॥ अभीहाउ । सोमासआ२१उवा २३ ।

या२३४वा: । पवन्ते मद्यिम्मद॰ᳪ॑ समुद्रस्याधिविष्टपेमनी

षिणा२३४५: । मत्साहाउ । रासोमदा२१उवा २३ ।

श्च्यू२३४ता: ॥(१) मत्सरासोमदश्च्युतोमत्सरासोमदश्च्युत

स्तरत्समुद्रम्पवमानऊर्म्मिणा२३४५ । राजाहाउ । दा

यिवऋता२१उवा२३ । बृ२३४हात् ॥(२) राजादेवऋतं

बृहद्राजादेवऋतंबृहदभिमित्रस्यवरुणस्यधर्म्मणा२३४५ ।

प्रहायिहाउ । ज्वानऋता२१उवा२३ । बृ२३४हात्(३) ॥

॥ ७ † ॥ [२२]

* ऊ० गा० १४प्र० २ख० ७सा० । † ऊ० गा० १४प्र० २ख० ७सा० ।

२ १ र र २ र १ २ १ र २र १र
॥ आष्टादंष्ट्रोत्तरम्॥ अभिसोमासआयवऐयाहौ।
२ २ १ २र १ २ १ २र
होइवा। पवन्तेमद्यम्। मादा२३म्। ऐया२३त्।
१ र २ १ र २ १ र २ र १ १र
औ२३होवा। समुद्रस्याधिविष्टपेमनी। षायिणा२३ः। ऐया
१ र २ १र र २ १
२३त्। औ२३होवा। मत्सरासोमद। च्यूता२३ः।
१र १ र २ १
ऐया२३त्। औ२३होवा३४३। ओ२३४५ई। डा ३)॥

॥ २ * ॥ [२२]

२ र र र
॥ आभीशवोत्तरम्॥ अभिसोमासआयवए। ए। पव
र १ ७ २ ३ ५ २ २ १ र
न्तेमा३दायम्मादम्। सा२३४म्। हा३हा। द्रस्याधि
र २ २ ३ ५ २ २ १ र
विष्टपेमानी३षिणाः। मा२३४त्सा। हा३हायि। रासो
२१ ५ ४ ५ २ र र
मदो२३४वा। च्यू५तो६हायि॥(१) मत्सरासोमदच्युत
र १र १ ७ २ ३ ५ २
ए। ए। मत्सरासो३मादच्यूतः। ता२३४रात्। हा३
२ १ र २ २ ३ ५ २
हायि। समुद्रस्यवमानाऊ३र्म्मिणा। रा२३४जा। हा

* ज० गा० १६प्र० २ख० २सा०।

२ १ २१ ५ ४ ५
३ हायि । हायिवक्क्रतो२३४वा । बृ५हो ई हायि ॥(२)

२र र र २ र र १ २
राजाऽ२ वक्रतंबृहद् । ए । राजाऽ२ वा२आत्तंबृहात् ।

३ ५ २ २ १ ० २
आ२३४र्षा । हा ३ हायि । मित्रस्यवरुणस्याधर्म्मणा ।

३ ५ २ २ १ २१ ५ ४
प्रा२३४हायि । हा२हायि । न्वानक्कृतो२३४वा । बृ५

५
होई हायि(३) ॥ ३ * ॥ [२३]

५ २ ४र ५र ४५ १
॥ आष्कारनिधनम् † ॥ अभिसो३मा स२आयवाः । पः

२र १ २ १ २१ २
वन्त म । दिया२३म्मदाउ । वा२२ । समुद्रस्या । धि

३२१ २१र ५ १ २ १५र २
विष्टपायि । मनीषा२३४यिणाः । मा२३त्सा । रासोम ।

१ ५ २ ४र ५४ ५ १ २र
श्च्यु२३४५ताई५६ः ॥(१)मत्सरा३सोम२श्च्युताः । मात्सरा

१ २ १२१ २ ३२
सः । मदा२३च्युताउ । वा २ ३ । तरत्सम् । द्रम्यव

१ २१र ५ १ २ १र २ १
मा । नजर्म्मा२३४यिणा । रा२३जा । देवक्क । तंबृ

५र र २ ४ ५४५ १ र
२३४५हाई५६त् ॥(२) राजादा३यिवक्क्रऽतंबृहात् । राजा

* ऊ० गा० १६प्र० १ख० २सा० । † "आष्कारणिधनं काण्वम्"—इति ख० पु० ।

२र १ २ १र २ १ २ २
देवः। ऋतार३बृहाउ। वा३२। अर्षामिचा। स्वव

२ १ २ १ ५ २ २ १र २ १
हणा। स्वधर्म्मा२३४णा। प्रा२३हायि। न्वानऋ। तं

३ १ १ १ १
बृ२३४५हाई५६त्। आ२३४५५(३)॥ २*॥ [२४]

१ र २ ३ ५
॥मानवाद्यम्॥ अभिसोमा। सआया२३४वाः। २।

१ २५ १ २ १ २ र
पावन्ते म। दियाम्मा१हा २म्। सम्। ऊ। द्रस्वा।

१ ० २ २ ३ ५ १२र१
धायिविष्टपा३यि। मनार्यिषा२३४यिणाः। मत्सरासा

१ २ ५र र ३ ५ २
२३ः। मा२दा२३४औहोवा। च्यू२३ ४ ताः॥(१) मत्स

र ३ ५ २ ३ ५ १ २र
रासाः। मदच्यू२३४ताः। मदाच्यू२३४ताः। मात्सरा

१ ३ १ २ १ ० २
सः। मदाच्यु१ता रः। त। रत्। समु। द्राम्यवमा

१ ३ ५ १र२र२१ १ ०
३। नजा२कर्मा२३४यिणा। राजादे वा२३ः। आ२र्त्ता

५र र ३ ५ २ र र
२३४औहोवा। बृ२३४हात्॥(२) राजादे वाः। ऋतं

३ ५ २ ३ ५ १ र २र १ २
बृ२३४हात्। ऋतांबृ२३४हात्। राजादे वः। ऋतांब

---

* ऊ० गा० १८प्र० २ख० २सा०।

१ २ १ १ २ १
१हा२त्। अ। धा। मित्र। स्य। वरुणा३। स्वधा
३ ३ १ २ र १ १ ३ ५र र
३म्मा२३४णा। प्रहिन्वाना२३ः। आ२त्ता२३४औहोवा।
३ ५
वृ२३४हात्(३) ॥ १० * ॥ [२५]

१ २र १ २र १ २
॥ महावैष्टम्भम् ॥ अभिसोमोहायि। सआयवोवा।
१ २र १ २ १ २ २
पावन्तोम। दियाम्मा१दा२३म्। होवा३हायि समु
१ र २१र २१ २ १२ २
द्रस्याधिविष्टपे। मनायिषा १ यिणा२३ः। होवा३हा
२ २ १ २ २ १
यि। मत्सारा१सा२३ः †। होवा३हायि। मद। च्यूर
३ ५र र १ २र १ २ १ २
ता२३४औहोवा ॥(१) मत्सरासोहायि। मदच्युतोवा।
१ २र १ २ १ २ २ १
मात्सरासः। मदाच्यू१ता२३ः। होवा३हायि। तर
२ १ २र १ २ १ २ २
त्समुद्रम्पवमा। नऊर्म्मा१यिणा२३। होवा३हायि।
१र २ १ २ २ १ ३
राजादा१यिवा२३ः। होवा३हायि। ऋतम्। वृ२हा२
५र र १र र २र१ २ १ १ १
३४औहोवा ॥(२) राजादेवोहायि। ऋतंबृहोवा। रा

* ऊ० गा० १८प्र० २ख० १०सा० ॥ † "मत्सारासा१२"—इति ख० पु० पाठः।

र २र १ २ १ २ २ १ र १
जादेवः । ऋतांबृ१हा२३त् । होवा३हायि । अर्षामि
१ २ १ २ १ २ १ २ २ १
त्मावरुण । स्वधाम्मा१णा२३ । होवा३हायि । प्रहा
२ १ २ २ १ २
यिन्वा१ना२३ । हौंवा३हायि । ऋतम् । बृ२हा२३४
५र र
औहोवा(३) ॥ १० * ॥ [२६] ९

अथ द्वितीयऋचे—प्रथमा ।

३ १ २र ३ १ २र
तिस्रोवाचईरयतिप्रवह्निः
३ १ २ ३ १ २र २ २
ऋतस्यधीतिम्ब्रह्मणोमनीषाम् ।
१ २ ३ १ २ ३ १ २ ३
गावोयन्तिगोपतिम्पृच्छमानाः
१ २ ३ १ २ ३ २
सोमंयन्तिमतयोवावशानाः ॥ १† ॥

"वह्निः" वोढा यजमानः "तिस्रोवाचः" ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति । तथा "ऋतस्य" यज्ञस्य "धीतिं" धारयित्रीं "ब्रह्मणः" परिवृढस्य सोमस्य "मनीषां" मनस ईशित्रीं कल्याणीं वाचं प्रेरयति । किञ्च "गोपतिं" वृषभं यथा गावोऽभिगच्छन्ति तद्वत् गवां स्वामिनं सोमं "गावः"

* क० गा० २२प्र० २अ० १०सा० ।

† क० आ० ६, १, ४, २ (२भा० ११२पृ०) = ऋ० वे० ७, ४, १७, ४ ।

"पृच्छमानाः" पृच्छन्त्यः सत्यः यन्ति स्व-पयसा मिश्रयितुम् अभिगच्छन्ति। तथा "वावशानाः" कामयमानाः "मतयः" स्तोतारश्च "सोमं" "यन्ति" स्तोतुमभिगच्छन्ति ॥ १ ॥

अथ द्वितीया।

१ २ १ २ ३ १ २ ३ २३
सोमङ्गावोधेनवोवावशानाः

३ १ २ ३ १ २ ३ १ २
सोमंविप्रामतिभिः पृच्छमानाः।

१ २ ३ १ २ ३१ २ ३
सोमःसुतऋच्यतेपूयमानः

१ २ ३ २ ३ २ ३ १ २
सोमेअर्कास्त्रिष्टुभःसन्नवन्ते ॥ २* ॥

"धेनवः" † प्रीणयित्र्यो "गावः" "सोमं" "वावशानाः" कामयमाना भवन्ति, "विप्राः" मेधाविनः स्तोतारः ‡ "सोमं" "मतिभिः" स्तुतिभिः ¶ "पृच्छमानाः" पृच्छन्तो भवन्ति "सुतः" अभिषुतः "सोमः" "पूयमानः" ऋत्विग्भिः "ऋच्यते"

---

* ऋ० वे० ७, ४, १७, ५।

† 'आदित्यरश्मयो धेनवः'—इति वि०।

‡ 'विप्राः—ब्राह्मणाः . . . अथवा विप्रा आदित्यरश्मयः'—इति वि०।

¶ 'मतिभिः—प्रज्ञाभिः'—इति वि०।

चरति *। तथा "त्रिष्टुभः" त्रिष्टुब्रूपाः † "अर्काः" अस्माभिः क्रियमाणा एते मन्त्राः "सोमे" "सन्नवन्ते" सङ्गच्छन्ते॥

"सोमस्सुतऋच्यतेपूयमानः"—इति छन्दोगाः, "सोमःसुतः पूयतेअज्यमानः"—इति बह्वृचाः॥ २॥

अथ तृतीया।

३ १ २　　　　३ १ २ ३
एवानःसोमपरिषिच्यमान

१ २　३ १ २　　३ २
आपवस्वपूयमानःस्वस्ति।

२ ३ १ २　３ १र २र
इन्द्रमाविशबृहतामदेन

३२ ३ १ २ ३ ２३ १ २
वर्द्धयावाचञ्जनयापुरन्धिम्॥ ३‡॥ १०

हे "सोम!" "परिषिच्यमानः" परितः पात्रेषु सिच्यमानः पूयमानः त्वं "नः एवा" अस्माकमेव "स्वस्ति" ¶ अविनाशम् आ पवस्व प्रापय। किञ्च "बृहता" महता "मदेन" मदकर-रसेन अहम् "इन्द्रम्" "आविश" प्रविश। तथा "वर्द्धया" "वाचं" स्तुति-लक्षणां § प्रसिद्धां कुरु। किञ्च

* 'ऋच्यते—ऋच् गतौ। गच्छति'—इति वि०।

† 'त्रिष्टुप्छन्दस्काः अथवा त्रिष्टुभः तथीं विद्यां स्तोभयन्तः'—इति वि०।

‡ ऋ० वे० ७, ४, १८, १। "रवेण"—इति च तत्र पाठः।

¶ 'स्वस्ति—क्षेमं कुरु'—इति वि०।

§ 'वाचम्—ऋग्यजुःसामलक्षणाम्'—इति वि०।

"पुरन्धिं" बहुधियं प्रज्ञानं * "जनया" † अस्मभ्यमुत्पादय । वाक्यभेदादनिघातः ‡ ॥ ३ ॥ १०

॥ सङ्कोशम् ॥ होयि । हो । हा३होयि । तिस्रो
वाचाः । ई३रय । तिप्रवह्नीः । ऋतस्यधायि । ती३
म्ब्रह्म । णोमनीषाम् । गावोयन्तायि । गो३ पतिम् ।
पृच्छमानाः । सोमंयन्तायि । मतयः । वा३४३ । वा
३४३ । वा३ऽ५ना६५६ः ॥(२) सोमङ्गावो । धे३नवः ।
वावशानाः । सोमंविप्राः । मतिभिः । पृच्छमानाः ।
सोमःसुताः । ऋच्यते । पूयमानाः । सोमेअर्काः ।
त्रिष्टुभः । सा३४३म् । ना३वाऽ५ता६५६यि ॥(२) एवा

---

* 'पुरन्धिं'—पुष्टिम्'—इति वि० ।

† 'इह मन्त्रे एवेत्यादौ बहुत्र छान्दसं दीर्घत्वम् । तथाच—"एवा"—इत्यत्र "निपातस्य च ( ६, ३, १३६ )"—इति दीर्घः, "वर्द्धया"—"जनया"—इत्यनयोस्तु "द्व्यचोऽतस्तिङः ( ६, ३, १३५ )"—इत्यत्र "तिङः"—इति, योगविभागाद्दीर्घः ।

‡ "तिङ्ङतिङः ( ८, १, २८ )"—इति प्राप्तो निघातः "छन्दस्यनेकमपि साकाङ्क्षम् ( ८, १, ३५ )"—इति तदभावइत्यर्थः ।

२ १　　२ ३ ४ ५　　२र १　　२ १
न:सो । मा३परि । षिच्यमानाः । आपवस्वा । पू३य

र　२ ३ ४ ५　२ १ र　　२ १　२ ३ ४ ५
मा । नःसुवस्ती । इन्द्रमावायि । शा३वृ्ह । तामदेना ।

१　　२ १　२ १ र　२ १
होयि । हो । हा३होयि । वर्द्धयावा । चा३ख्लन ।

२　२ ४
या३४३ । पू३रा५धा६५६यिम्(३) ॥ १७ * ॥ [१] १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थस्याध्यायस्य
तृतीयः खण्डः † ॥ ३ ॥

---

अथ चतुर्थखण्डे, ‡ प्रगाथरूपे—
प्रथमसूक्ते—प्रथमा ।

१　२र　३ २र ३ १　२र ३ २
यद्याव इन्द्र ते शतꣳ शतं भूमीरुत स्युः ।

१ २　३ २ ३　२ ३　२ ३ २ ३ १ २ ३ १ २
नत्वा वज्रिन्त्सहस्रꣳ सूर्या अनु न जातमष्ट रोदसी ॥ १ § ॥

---

* उ० गा० २प्र० १अ० १७सा० ।　　† 'उक्तो माध्यन्दिनः'—इति वि० ।

‡ 'इदानीं पृष्ठान्युच्यन्ते । रथन्तरं, बृहत्, विरूपं, वैराजं, शाक्वरं, रैवतञ्चेति पृष्ठः षडहः, तस्य पृष्ठानि सधर्मकानि भवन्ति'—इति वि० । 'रथघोषं, दुन्दुभ्याघ्ननं, उपवाजनम्, उरोऽग्निकल्पतम्, आर्याघोषः, गवां घोषः इति पृष्ठधर्मा यथासङ्ख्यं पृष्ठे षडहे अहन्यहनि गौरीवितं यावत्'—इति च वि० ।

§ छ० आ० ३, २, ४, ९ (१ भा० ५०२ पृ० )=ऋ० वे० ६, ५, ८, ५ ।

हे "इन्द्र !" "ते" तव प्रतिमानार्थं "यद्" यदि "द्यावः" द्युलोकाः "शतं" शत-सङ्ख्याकाः "स्युः" तथापि नाश्नुवन्ति। "उत" अपिच "भूमीः" भूम्यः "ते" तव मूर्त्ति-प्रतिविम्बाय "शतं" स्युः तथापि "न" अश्नुवन्ति। हे "वज्रिन्" "त्वा" त्वाम् "सहस्रं" "सूर्याः" अगणिता अपि सूर्याः "न" "अनु" भवन्ति न प्रकाशयन्तीत्यर्थः। "न तत्र सूर्यो भाति (इ०उप०)" —इति श्रुतेः। किं बहुना जातं पूर्वमुत्पन्नं किञ्चित् त्वामनु "नाष्ट" नाश्नुते तथा "रोदसी" द्यावापृथिव्यौ नाश्नुवाते सर्वेभ्योऽतिरिच्यसे इत्यर्थः। "ज्यायान् पृथिव्या ज्यायानन्तरिक्षाद् दिवो ज्यायानेभ्यो लोकेभ्यः"—इति (छ० उप०) श्रुतेः ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २र २ १ २ ३ १ २

आपप्राथमहिनावृष्ण्यावृषन्विश्वाशविष्ठशवसा ।

३ १ २ ३ १ २ ३१ २र ३ १ २ ३ १ २

अस्माँ अवमघवन्गोमतिव्रजेवज्रिञ्चित्राभिरूतिभिः ॥ २* ॥११

हे "वृषन्" अभिमतवर्षकेन्द्र ! त्वम् "आ पप्राथ" आ पूरयसि व्याप्नोषि। कानि? "विश्वा" सर्व्वाणि "वृष्ण्या" वर्षकाणि बलानि शत्रु-सम्बन्धीनि। केन साधनेन? "महिना" महता "शवसा" बलेन स्वीयेन अथवा वृष्ण्येत्येतच्छवो विशेषणम्। तथा सति अभिमतवर्षकेण महता बलेन अस्मदीयानि बलानि पूरयसीत्यर्थः। अथ तथाकृत्वा हे "शविष्ठ" बल-

* ऋ० वे० ६, ५, ६, १।

२३। हो[illegible]२[illegible]यि। अस्माअवमघवन्गो। मतायि

आ१जा२३यि। [illegible]यि। वज्रायिञ्चा१यिन्ना २३।

हौवा ३ हायि। [illegible]२ यिभा २ ३ ४ औहोवा॥

॥ १८ * ॥ [१] [illegible]

[illegible] द्वितीय[illegible]—प्रथमा।

[illegible]बर्हिषः।

पवित्रस्यप्रस्त्रवणेषु[illegible]स्तोतार[illegible]आसते॥ १‡ ॥

हे "वृत्रहन्" इन्द्र! "त्वा" [illegible] "व" वयं खलु "सुत-वन्तः" "आपः न" आप इव प्रवणमाभिगच्छामः। "पवित्रस्य" सोमानां प्रस्त्रवणेषु "वृक्तबर्हिषः" तीर्णबर्हिषः स्तोतारश्च त्वां पर्युपासते॥ १॥

---

* ऊ० गा० २२प्र० १ख० १९सा०।

† 'वामदेव्यं मैत्रावरुणं साम, वैरूपं ब्राह्मणाच्छंसि, रौरवमच्छावाकं साम'—इति वि०।

‡ ऋ० सा० ३, २, २, ९ ( १ भा० ५४० पृ० ) = ऋ० वे० ६, २, ७, १।

अथ द्वितीया ।

१ २  ३ १उ २ १ २ [illegible]

स्वरन्तित्वासुतेनरोवसो[illegible]थिनः ।

३ २ ३ १ [illegible] ३ १ २

कदासुतं[illegible]रोवव९्सगः ॥ २* ॥

हे "वसो" वासयितरिन्द्र ! † "त्वा" त्वां "सुते" अभिषुते सोमे "निरेके" निर्गमे ‡ "[illegible]" ¶ "नरः" नेतारः "स्वरन्ति" शब्दायन्ते § । [illegible] प्रति "तृषाणः" तृष्यन् "स्वब्दीव" [illegible]भूत-[illegible] इव ॥ "वंसगः" वननीय-गमनो** वृषभः [illegible] कुर्वन् "कदा" "ओकः" स्थानम् "आगमत्" आगच्छेत् ॥

---

* ऋ० वे० ६, २, [illegible] 'गमदिन्द्र''—इति मु० पाठः सायण-सम्मतश्च ।

† 'वसो निरेके—हे वसो ! [illegible] !'—इति वि० ।

‡ 'निरेके—दानवति यज्ञे । [illegible]निरेक इत्येकं पदम्, तथा सा षष्ठी क्रियते—वसुनः वन्यस्य निरेके'—[illegible]

¶ 'उक्थिनः—उक्थानि सामा[illegible]'—इति वि० ।

§ 'स्वरन्ति सामभिः'—इति वि० ।

‖ 'स्वब्दी इन्द्रः । शोभन-शब्द[illegible] हरिधारण'—इति वि० ।

** 'वंसगः—वननीयगः'—इति वि० ।

अथ तृतीया।

२ ३ २र २र २ १ २

कण्वेभि[illegible]धृषदाजन्दर्षि सहस्त्रिणम्।

३ १ २ ३ १र २र

पिशङ्गरूपम्मघ[illegible]मक्षूगोमन्तमीमहे ॥ ३ * ॥ १२

हे "धृष्णो" ध[illegible] "कण्वेभिः" कण्वान् मेधाविनः स्तोतृन् अनुशिष्य [ वि[illegible] (३, १, ८५) ] "सहस्त्रिणं सहस्र-सङ्ख्याकं "वाजम्" [illegible]" प्रयच्छसि। हे "मघवन्" धनवन्! "विचर्षणे" वि[illegible] ‡ "धृषत्" धृष्टं "पिशङ्ग-रूपं" [illegible] "गोमन्तम्" [illegible] "मक्षू" शीघ्रम् ‖ "ईमहे" [illegible] ॥ ३ ॥ १२

२ १ २ २ र १ २

॥ महावैष्टम्भम् ॥ वय[illegible]। सुतावन्तोवा।

१ र २ १ २ १ २ २ १

आपोनइ। क्तवार्हा१यिषा२३। [illegible]वा३हायि। पवि

---

* ऋ० वे० ६, २, ७, ३।

† 'धृष्णो—धारणशील!'—इति वि[illegible]

‡ 'विचर्षणे—विविधाकर्षणय[illegible] विचर्षणिः, अथवा विश्वस्य द्रष्टा'—इति वि०।

¶ 'पिशङ्गरूपं—[illegible]'—इति वि०।

§ 'गोमन्तं'—[illegible]—इति वि०।

‖ 'मक्षू—[illegible]'—इति वि०। "निपातस्य च ( ६, ३, १३३ )"—इति दीर्घः।

न्नस्यप्रस्रवणे। पुवान्नी१हा२३न्। होवा३हायि। परा
यिस्तो१ता२३। होवा३हा। रम्रा। सा२ता२३४औ
होवा॥(१) स्वरन्तित्वोहायि। सुतेनरोवा। वासोनि
रे। ककुभ्या१यिना२३ः। होवा३हायि। कदासुत
न्तृषाणओ। कआगा१मा२३ः। होवा३हायि। इन्द्र।
स्वा१ब्दी२३। होवा३हा। वव। सा२गा२३४। औ
होवा॥(२) कण्वेभिर्द्धोहा। धृष्णुवाधृषोवा। वाजन्द
र्षि। सहास्रा१यिणा२३म्। होवा३हायि। पिशङ्ग
रूपम्मघवन्। विचार्षा१णा२३यि। होवा३हायि। मक्षू
गो१मा२३। होवा३हा। नमो। मा२हा२३४ओहो
वा। दी२३४शाः(३)॥ १८*॥ [१]

॥ अभिनिधनङ्काण्वम्॥ औहोहोहायि। आयिही।

* ऋ० मा० ६म० १ख० १८सा०।

वायाम् । घार२३४त्वा । सूतावार२३४न्ताः । आपोनार
३४वृ । क्तावर्हिषाः । ऐहोयि । आर२३४यिही । पा
विचार२३४स्या । प्रास्तावार२३४णे । षूवृत्रहान् । ऐहोयि ।
आर२३४यिही । पारिस्तोर२३४ता । रआर३ऽसा५ता ६ ५ ६
यि ॥(१) औहोहोहायि । आयिही । स्वारा । तार
३४यित्वा । सूतेनार२३४राः । वासोनार२३४यिरे । का
उक्थिनाः । ऐहोयि । आर२३४यिही । कादासूर२३४
ताम् । तार्षाणार२३४ओ । काआगमाः । ऐहोयि ।
आर२३४यिही । आयिन्द्रास्वार२३४ब्दी । ववा३ऽसा५गा
६५६ः ॥(२) औहोहायि । आयिही । काण्वे । भार
३४यिर्द्वा । ष्णावाधार२३४र्षात् । वाजन्दार२३४षी । सा
हस्त्रिणाम् । ऐहोयि । आर२३४यिही । पायिप्रङ्गार२३

४हु। पन्मांघार२३४वान्। वीचर्षणायि। ऐहोयि। आ

२३४यिही। मासूगो२३४मा। तमा३यिमा५हा६५६

यि। आ२३४भो(३)॥ ८ *॥ [२]

॥ अभीवर्त्तम् † ॥ वया३ङ्का३त्वासुतावन्तोवा। आपो

नवु। क्तवार्हा१यिषा२:। पाविनस्था३१२३ ४। प्रस्तव

णो। पुवार्चा१हा२न्। परायिस्तो१ता२। रआ३।

सा२३४५। ता२३४यि॥(१) स्वरा३न्ता३यित्वासुतेनरोवा।

वासोनिरे। ककुक्या१यिना२:। कादासुना३१२३४म्।

त्रिषाणाओ। कआगा१मा२:। इन्द्राखा१न्दीरे। ववा

३। सा२३४५। गा२३४५:॥(२) कण्व३भा३यिधष्णवा

धृषोवा। वाजन्दषि। सहासा१यिणा२म्। पायिप्रङ्क

हू३१२३४। पमघवन्। विचार्षा१णा२यि। मत्तगो१

---

* ऊ० गा० ४प्र० १ख० ८था०। † "अभीवर्त्तः"—इति ख० पु०।

३ २　　　१　　　　३ १ १ १ १
मारं । तमाइयि । मार३४५ । हार३४५यि(३) ॥ ६* ॥ [३]

१२

अथ प्रगाथरूपे तृतीयसूक्ते †—प्रथमा ।

३ २ ३ १ २　　३ २ ३ १ २　　३ २
तरणिरित्सिषासति वाजम्पुरन्ध्यायुजा ।

२ ३ १ २　　३ १ २　३ २ ३ १ २र ३ १ २
आव इन्द्रम्पुरुहूतन्नमे गिरा नेमिन्तष्टेव सुद्रुवम् ॥ १‡ ॥

"तरणिरित्" युद्धादौ कर्मणि त्वरितएव पुमान् "पुरन्ध्या" महत्या धिया "युजा" सहायभूतया "वाजम्" अन्नं "सिषासति" सम्भजते, "पुरुहूतं" बहुभिराहुतम् "इन्द्रम्" "गिरा" स्तुत्या हे यजमानाः "वः" युष्मदर्थम् अहम् "आ नमे" आनतमभिमुखं कुर्वे। तत्र दृष्टान्तः—"नेमिं" चक्रस्य वलयम् "सुद्रुवं" शोभनदारुं "तष्टेव" यथा वर्द्धकिः दारु-नेमिमानमयते तद्वदित्यर्थः ॥ १ ॥

* ऊ० गा० ९प्र० १अ० ६सा० ।

† 'रौरवमच्छावाकं साम'—इति वि० ।

‡ ऋ० आ० ३, १, ५, ६ ( १ भा० ४९२ पृ० ) = य० वे० ११, २१ = ऋ० वे० ५, ३, २०, ५ ।

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २ २२ ३ १ २
नदुष्टुतिर्द्रविणोदेषुशस्यतेनस्रेधन्तꣳरयिर्नशत्।
३ २ ३ १ २ ३ २ ३ १ २ ३ १२ २२ ३ २
सुशक्तिरिन्मघवन्तुभ्यम्मावतेदेष्णंयत्पार्येदिवि॥ २* ॥१३

"द्रविणोदेषु" धनदातृषु पुरुषेषु "दुष्टुतिः" असमीचीना स्तुतिः "न शस्यते" नाभिधीयते। किन्तु "स्रेधन्तं" हिंसन्तं धनदातृविषय-स्तुत्यादि-कर्माण्यकुर्वन्तमित्यर्थः, एवम्भूतं जनं "रयिः" धनं "न नशत्" न व्याप्नोति। तथा हे "मघवन्" धनवन्निन्द्र! "पार्ये दिवि" सौत्ये दिवसे† "मावते" मत्सदृशाय स्तोत्रे "देष्णं" दातव्यं "यत्" धनमस्ति तत् "तुभ्यं" त्वत्तः सकाशात् "सुशक्तिरित्" शोभन-स्तुतिकएव स्तोता लभत इति शेषः॥

"नदुष्टुतिर्द्रविणोदेषुशस्यते"—इति छन्दोगाः, "नदुष्टुती मर्त्योविन्दतेवसु"—इति बह्वृचाः॥ २॥ १३

२ १ ५ १
॥ रौरवम्॥ तरणिरित्साइषासार२३४तो। वाऽजम्पु
२ २ २ ३ २ १ २ १
रन्ध्यायुजावइन्द्रम्पूरुहूतन्नमार२यिगिरा। औहाइउवा।

---

* ऋ० वे० ५. ६, २२, १।

† 'पार्ये दिवि—पारणीये द्युलोके'—इति वि०।

नेमिन्तष्टे वसूर२हाइ । नेमिन्तष्टे वसा१२३उहाइ । श्रो
हा३उवा । ईवाम् । श्रौ२३होवा ॥(१) नेनिन्तष्टे वा
३सुह्र २३४वाम् । नायिमिन्तष्टे वसुह्र वन्नदुष्टू तिर्द विणो
देषुशार२स्यतायि । श्रोहा३उवा । नस्वे धन्ता९रया२३
यिर्हायि । श्रोहा३उवा । नशात् । श्रौ२३होवा ॥(२)
नस्वे धन्त९रा३यिर्ना२३४शात् । नाऽस्वे धन्त९रयिर्न्नशत्सु
शक्तिरिन्मघवन्तुभ्यम्मा२वतायि । श्रोहा३उवा । ईष्णं
यत्पारियार२३यिहायि । श्रोहा३उवा । दिवा । श्रौ३
होवा । हो५ई । डा(३) ॥ १८ * ॥ [१] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थस्याध्यायस्य
चतुर्थः खण्डः † ॥ ४ ॥

---

* ऊ० गा० २प्र० १ख० १८सा० ।

† 'उक्तं माध्यन्दिनं सवनम्'—इति वि० ।

अथ पञ्चमे खण्डे*—

प्रथमतृचे—प्रथमा।

३ २उ  ३ १ २ ३ १ २  ३१२
तिस्रोवाचउदीरतेगावोमिमन्तिधेनवः।
१ २  ३१ २
हरिरेतिकनिक्रदत्॥ १† ॥

"तिस्रोवाचः" ऋगादिभेदेन "उदीरते" प्रोद्गायन्ति ऋत्विजः। "धेनवः" आशिरेण प्रीणयित्र्यो "गावः" "मिमन्ति" शब्दायन्ति दोहार्थम्, "हरिः" हरितवर्णः सोमश्च "कनिक्रदत्" शब्दं कुर्वन् "एति" गच्छति द्रोणकलशम्॥ १ ॥

अथ द्वितीया।

२ १२ २२  ३२ ३ १२३ १२
अभिब्रह्मीरनूषतयह्वीर्ऋतस्यमातरः।
३ १ २  ३ १  २२
मर्ज्जयन्तीर्दिवःशिशुम्॥ २‡ ॥

"ब्रह्मीः" ब्राह्मण-प्रेरिताः¶ "यह्वीः" महत्यः ['यह्वः'—इति महन्नाम (निघ०३, ३, १३)] "ऋतस्य" यज्ञस्य "मातरः"

---

* 'इदानीं तृतीयसवनमारभते'—इति वि०। 'प्राष्ठौहं साम'—इति वि०।

† ऋ० ब्रा० ५, २, ४, ५ (२ आ० १६) = ऋ० वे० ६, ८, २३, ४।

‡ ऋ० वे० ६, ८, २३, ५।

¶ 'ब्रह्मीः—ब्रह्मणा या याः स्तुवन्ति ता ब्रह्मीः'—इति वि०।

निर्मातरः स्तुतयः* "दिवः" द्युलोकात्† "शिशु" शिशु-स्थानीयं सोमम्‡ "मर्जयन्तीः" पावयन्तीः "अभ्यनूषत" स्तवन्ति [तृतीयस्यामितोदिवि सोमआसीदित्यादि श्रुतेः द्यु-शिशुत्वं तस्य]॥

"मर्जयन्तीः"-"मर्म्मृज्यन्ते"—इति पाठौ॥ २॥

अथ तृतीया।

३ १ २ ३२ ३ २ ३ १ २ ३ १ २
रायःसमुद्राꣳश्चतुरोस्मभ्यꣳसोमविश्वतः।

१ २ ३ १ २
आपवस्वसहस्रिणः॥ ३ ¶॥ १४

"रायः" धनस्य सम्बन्धिनश्च "चतुरः समुद्रान्" मणि-मुक्तादि-धन-पूर्णानित्यर्थः। तादृशान् समुद्रान् "अस्मभ्यम्" अर्थाय हे "सोम!" "विश्वतः" सर्वतः "आ पवस्व"। तथा "सहस्रिणः" § अपरिमितान् कामान् आपवस्व प्रयच्छ [चतुःसमुद्रस्य धन-विशेष-प्राप्ते तन्मध्यगत-धन-भूमि-स्वामित्वमन्तरेणा सम्भवात् चतुस्समुद्र-सहित-भूमण्डल-स्वामित्वमेवाशास्ते यजमानः]॥ ३॥ १४

---

* 'मातरः—धेनवः आदित्यरश्मयो वा आपो वा'—इति वि०।

† 'दिवः—द्युलोकात् सकाशात्'—इति वि०।

‡ 'शिशुं' शंसनीयं सोमम्'—इति वि०।

¶ ऋ० वे० ६, ८, २३, ६।

§ 'सहस्रिणः—सहस्रसम्मिताः'—इति वि०।

॥ पाष्ठौहम् ॥ तिस्रोवाचा२उदीरताथि । गावो
मिमन्तिधेनवः । हरिरा२३यितो । कनौ२ । ऊवायि ।
होइवा३ । क्रा२दा२३४औहोवा ॥(१) अभिब्रह्मा२यि
रनूषता । यह्वीर्ऋतस्यमातरः । मर्ज्जया२३न्तोः । दिवौ
२ । ऊवायि । होइवा३ । आ२यिश्रा२३४औहोवा ॥(२)
रायःसमू२द्राँ्श्चतुराः । अस्मभ्यँ्सोमविश्वतः । आ
पवा२३स्वा । सहौ२ । ऊवायि । होइवा । स्वा२यि
णा२३४औहोवा । हाऔवा । ओवा२३४५ ॥ २०* ॥ [१]

॥ क्षुल्लकवैष्टम्भम् ॥ तिस्रो५वा । चा३उदीरताथि ।
गावोमिम । तिधायिता१वा२३ः । होवा३हायि । हरा
यिरा१यितो२३ । होवा३हायि । कनि । क्रा२दा२३४
औहोवा ॥(१) अभा५यिब्र । ह्मा३यिरनूषता । याह्वी

* ऊ० गा० २प्र० १ख० २०सा० ।

२ १ २ १ ३ २ १ २
र्कृत। स्यमाता१रा२३:। होवा३हायि। मर्ज्जाया१

१ २ २ १ २ ५र
न्तौ२३:। होवा३हायि। दिव:। आ२यिआ२३४औ

र ४र ३ ४ २र ३ ५ १
होवा॥(२) राया५:सम्। ऊ३द्राꣳस्वतुरा:। आस्म

२ र १ २ १ २ २ १र
भ्यꣳसो। मवायिस्वा१ता२३:। होवा३हायि। आपा

२ १ २ २ १ ३ ५र
वा१स्वा२३। होवा३हायि। सह। स्वा२यिणा२३४औ

र ३ ५
होवा। दी२३४या:(३)॥ १६ *॥ [२]

१ र २र १
॥ साꣳहितम॥ तिस्रोवाचउत्। आ२यिरतायि।

२र १ २ १ १ २
गावो२। मा२३यिमा। तिधा२यिनावा:। हा२३रौ:।

१ ० २ ५
आ२यितायि। कना२३। हाउवा३। क्रा२३४दात्॥(१)

२ १ २र १ २ १ २
अभिब्रह्मीर। नू२षता। यह्वा२यि:। आ२३र्त्ती।

१ १ २ १ ०
स्वमा२तारा:। मा२३र्ज्जा। या२न्तायि:। दिवा२

२ ५ २र १ २ र
३:। हाउवा३। आ२३४यिप्सूम्॥(२) राय:समुद्रान्।

---

* ऊ० गा० ७प्र० १ख० १६सा०।

चा२तुराः। अस्मा२। भ्यार२३ॐसो। मवा२यिश्वा

ताः। आर२३पा। वा२स्वा। सहा२३। हाउवा३।

स्वी२३४णाः(३) ॥ ७ * ॥ [३]

॥ ऐडसैन्धुक्षितम् ॥ निह्नोवाचो। हायि। उद्दी

रार२३तायि। गावोमिमन्तिधा१यिना२वाः। हरिरेती

२३४हायि। कानाश्यिहायि। कदात्। औ२३हो

वा ॥(१) अभिब्रह्मो। हायि। अनूषा२३ता। यह्वी

र्ऋतस्यमा१ता२राः। मर्ज्जयन्तो२३हायि। दायिवा३

हायि। शिशुम्। औ२३होवा ॥(२) रायःसमो। हा

यि। द्रा२ॐस्वतू२३राः। अस्मभ्य२ॐसोमावा१यिश्वा३ताः।

आपवस्वो२३४हायि। साहा३स्रा। स्रिणा। औ३हो

वा। हो५ई। डा(३) ॥ १९ † ॥ [४]

---

* ऊ० गा० ९प्र० १ख० ७सा०। † ऊ० गा० १५प्र० १ख० १९सा०।

॥ गायत्रौशनम् ॥ तिस्रोवाचाः । उदीरा२३ता
यि । गावोमिम । तिधेना२३वाः । हरायिरा३यिता३
यि । क्राना२३यिहा३४३यि । क्रा२३४दो६हायि ॥(१) अ
भिब्रह्मायिः । अनूषा२३ता । याक्रोर्ऋत । स्यमाता
२३राः । मर्ज्जाया३न्तीः३ । दायिवा२३हा३४३यि । श्रा
२३४यिश्रो६हायि ॥(२) रायःसमू । द्राᳫस्वतू२३राः ।
अस्मभ्यᳫसो । मविश्वा२३ताः । आपावा३स्वा३ । स्वाहा
२३हा३४३यि । स्रा२३४यिणो६हायि(३) ॥ १० * ॥ [५]

॥ वैरूपम् † ॥ तिस्रोवा२३४चाः । उदायिरा३ता३यि ।
गावोरमा२३४यिमा । तायिधे१नावा २ः । हरा२३यिः ।
एता३४औहोवा । कनिक्रदा२३४५त् ॥(१) अभिब्रा२३
४ह्मीः । अनूषा३ता३ । यक्रा२यिरा२३४र्त्ता । स्वामा

---

* ऊ० गा० २०प्र० १अ० १०सा० । † "गायत्रौ वैरूपम्"—इति ख० पु० ।

१ २ ५र र २ १ २
१तारा२ः । मज्जा२३ । यन्ता३४औहोवा । दिवःश्नि

३ १ १ १ १ २ १ ५ २र १ २ २ १
शू२३४५म् ॥(२) रायःसा२३४म् । द्रा७स्त्रातू३रा३ः । अ

२ ५ १ ७ १र २
स्मारभ्या२३४७सो । माविश्वाता२ः । आपा२३ । वस्रो

५र र २ १ २ २ १ १ १ १
३४औहोवा । सहस्त्रिणा२३४५ः(३) ॥ ११ * ॥ [६] १४

अथ द्वितीयखण्डे† —प्रथमा ।

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
सुतासोमधुमत्तमाःसोमाइन्द्रायमन्दिनः ।

३ १ २ ३ १ २ ३ १ २
पवित्रवन्तोअक्षरन्देवान्गच्छन्तुवोमदाः ॥ १ ‡ ॥

"मधुमत्तमाः" अतिशयेन माधुर्य्योपेताः अतएव "मन्दिनः" मदकराः "सुतासः" अभिषुताः सोमाः "पवित्रवन्तः" पवित्रे वर्त्तमानाः सन्तः "इन्द्राय" इन्द्रार्थम् "अक्षरन्" पात्रेषु क्षरन्ति । अथ प्रत्यक्षकृतः—"वः" युष्माकं "मदाः" मदहेतवः रसाः "देवान्" इन्द्रादीन् "गच्छन्तु" ॥ १ ॥

---

* ऊ० गा० २०प्र० १ख० ११सा० ।

† 'ताष्टी साम'—इति वि० ।

‡ क० आ० ६, २, १, ३ ( २भा० १५५पृ० ) = ऋ० वे० ७, ५, ९, ४ ।

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २
इन्दुरिन्द्रायपवतइतिदेवासोअब्रुवन्।
३ १ २र ३ २ ३ १ २ ३ १ २
वाचस्पतिर्मखस्यतेविश्वस्येशानओजसः॥ २ * ॥

"इन्दुः" सोमः "इन्द्राय" इन्द्रार्थं "पवते" कलशे क्षरति "—इति" "देवासः" स्तुतिकारिणः स्तोतारः "अब्रुवन्" वदन्ति; यदा स्तोतार एवं ब्रुवन्ति तदानीं "वाचः" स्तुतेः "पतिः" पालयिता † यद्वा शब्दस्य स्वामी अत्यन्तं शब्दायमान इत्यर्थः, तादृशः सोमः "मखस्यते" स्तुतिभिः पूजामिच्छति [ लालसायां सुगागमः ]। कीदृशः ? "ओजसः" बलवतः "विश्वस्य" सर्वस्य "ईशानः" प्रभुः॥

"ओजसः"-"ओजसा"—इति पाठौ॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ २
सहस्रधारःपवतेसमुद्रोवाचमीङ्खयः।
२ ३ १ २ ३ १ २र ३ १
सोमस्पतीरयीणाᳫसखेन्द्रस्यदिवेदिवे॥ ३ ‡ ॥ १५

---

* ऋ० वे० ७, ५, १, ५।

† 'वाचस्पतिः—ऋग्यजुः सामलक्षणाभ्यो वाग्भ्यः पतिः'—इति वि०।

‡ ऋ० वे० ७, ५, २, १।

"सहस्रधारः" बहुविध-धारोपेतः "सोमः" "पवते" चरति । कीदृशः ? "समुद्रः" समुद्रवन्ति "रसा" रस-स्थानीयः "वाचमीङ्खयः" [ईङ्खतेर्खन्तस्य सुप्युपपदे खश् प्रत्ययः] स्तुतीनां प्रेरयिता * "रयीणां" धनानां "पतिः" प्रभुः [यद्वा "रयीणा" हविषोदातॄणां यजमानानां † "पतिः" पालयिता ] "दिवे-दिवे" प्रत्यहम् "इन्द्रस्य" "सखा" मित्रभूतः सोमः पवते ॥

"सोमस्पतिः"-"सोमःपतिः"—इति पाठौ ॥ ३ ॥ १५

५ र ३र २ ४ ५
॥ गौरीवितम् ‡ ॥ सुता । सोमा२ । धुमत्तमाः ।
१र र र १ २ ४र
सोमाइन्द्रायमन्दिना२३ः । पाविच्चवा३१२३ । तोत्र्या५श्च
१ र २ ४ ५ ४ ५
रान् । दायिवान्गच्छा३१२३ । तुवोवा । मा५दो६हा
५ २ २ ४ ५ १ र र र
यि ॥(१) इन्दुः । इन्द्रा२ । यपवतायि । इतिदेवासो
१ २ ४
अब्रुवा२३न् । वाचस्पता३१२३यिः । मखा५स्यतायि ।
१ र २ ४ ५ ४ ५
वायिश्वस्ये शा३१२३ । नश्रोवा । जा५सो६हायि ॥(२)
५ २ २ ४ ५ १ र र र
सह । स्रधा२ । रःपवतायि । समुद्रोवाचमीङ्ख्या२३ः ।

---

* 'वाचमीङ्खयः—शब्दं कुर्वन्त्यः'—इति वि० ।

† 'सोमः पतिः केषाम् ? रयीणाम् चरु-पुरोडाशादि-लक्षणानां धनानाम् अथवा सर्वसखानाम्'—इति वि० ।

‡ 'महागौरीवितम्'—इति ख० पु० ।

१ २ ४ १ र २
सोमस्यता२१२३यिः। रयापृथिणाम्। साखेन्द्रस्या३१२३।
४ ५ ४ ५
दिवोवा। दा५यिवो६हायि(३)॥ २ *॥ [१]

२ र र २
॥ इतन्वाष्ट्रीसाम॥ सुतासोमा। धुमा ३ त्तमाः।
१र २ २ २ १ २ २ १ २ २
सोमाइन्द्राश्यमा३। ए३। दिनस्रा। पवायित्त्रवा३न्तो
२ २ २ २ १ २ २ २
३। ए३। त्तरन्ना। दायिवान्गच्छा३न्तुवा३ः। ए३।
२ ३र २ २ २ २र र
मदाश्रा॥(१) इन्दुरिन्द्रा। यपा३वतायिदेवा३सो ३।
२ २ ३ २ १र २ २ २ २ ३
ए३। भुवन्ना। वाचास्पता३यिर्म्मखा३। ए३। स्यत
२ १ २र २ २ २ ३ २ २
आ। विश्वास्येशा३नश्रो३। ए३। जसश्रा॥(२) सह
२ १ २र २ २
स्रधा। रःपा३वतायि। समुद्रोवा३चमा ३ यि। ए३।
२ ३ २ १र २ २ २ २ २
खयश्रा। सोमास्यता३यिरया३यि। ए३। णा ३ मा।
१ २ २ २ २ ३ २
सखेन्द्रस्या३दिवा३यि। ए३। दिवश्रा(३)॥ ४ †॥ [२]

२ र र २ १र र
॥ आन्धीगवम्॥ सुतासोमधुमा१त्तामाः। सोमाइ।

---

* ऊ० गा० २प्र० २ख० ३सा०। † ऊ० गा० २प्र० २ख० ४सा०।

२ २ १ १ २१ २ २ ३१
द्रायार२३मा। ऊम्मा२१ऽ२। दिनःपविच्रवन्तोअच्चरा२

१११ १ २ २ १ २ १
३४५न्। दायिवा३उवा। गा२च्छा। तू२३वो। मदा।

२ ४५ २ २ २ १ २ २
औ३होवा॥(१) इन्दुरिन्द्रायपा१वातायि। इतिदे। वा

२ १ १ २२१ ० ३१११
सोर२३आ। ऊम्मा२१ऽ२। ब्रुवन्वाचस्पतिर्मखस्यता२३४

१ २ २ १ २
५यि। वायिश्वा३उवा। स्या२यिशा। ना२३औ। ज

१ २ ४५ २ २ २ १
सा। औ३होवा॥२) सहस्रधारःपा१वातायि। समु

२ २ १ १ २२ १ २२
द्रः। वाचार२३मा। ऊम्मा२१ऽ२। क्षयःसोमस्यतीर

३२ २ २ २ १ २
यीणा१म्। साखा३उवा। द्रा२स्या। दा२३यिवे।

१ २ ४५ ४
दिवा। औ३होवा। होष्ड्। डा(३)॥२० *॥[१]

१ २ २ ३२१
॥स्वारत्वाष्ट्रीसाम॥ सहस्रधा३रा। रःपवाता२

१ २२ २ ३२२ १ १२ २
यि। समुद्रोवा३चा। चमीङ्ख्याया२ः। सोमस्यता३यि

* ऊ० गा० ७प० १ख० २०सा०।

२ १ १र २ २ ३ २
ह्वायि । रयायिणा२म् । सखेन्द्रस्या३ह्वायि । दिवा३
१ ५ ४ ५
हो२३४ । वा । दापृथिवो६ह्वायि(३) ॥ ८ *॥ [२]

१ २र २ २ २ ३ २ १
॥ स्वारत्वाष्ट्रीसाम ॥ सुतासोमा३ह्वा । धुमत्तामा
१र २ १ २ ३ २ १ १ २
२ः । सोमाइन्द्रा३ह्वा । यमन्दायिना२ः । पवित्रवा३
२ ३र २ १ १र २ २ २ ३ २ १
ह्वा । तोअत्तारा२न् । देवान्गच्छा३ह्वा । तुवो३ह्वो२
५ ४ ५ १ २ २ ३ २
३४ । वा । मापृदो६ह्वायि ॥(१) इन्दुरिन्द्रा३ह्वा । यप
१ १ २ २ २ ३र २ १ १र
वात२यि । इतिदेवा३ह्वा । सोअब्रूवा२न् । वाचस्प
२ २ ३ २ १ १ २ २ २ ३
ता३यिर्ह्वायि । मखस्याता२यि । विश्वस्येशा३ह्वा । न
२ २ ५ ४ ५ १ २
ओ३ह्वो२३४ । वा । जापृसो६ह्वायि ॥(२) सहस्रधा३
२ ३ २ १ १ २ २ २ ३ २र १
ह्वा । रःपवाता२यि । समुद्रोवा३ह्वा । चमीङ्खया२ः ।
१र २ २ १ १ २ २ २
सोमस्यता३यिह्वायि । रयायिणा२म् । सखेन्द्रस्या३ह्वा
३ २ १ ५ ४ ५
यि । दिवा३हो२३४ । वा । दापृथिवो६ह्वाइ(३) ॥१†॥[३]

* ऊ० गा० ९प्र० १ख० ८सा० । † ऊ० गा० १५प्र० २ख० १सा० ।

॥ द्विरभ्यस्त्वाष्ट्रीसाम ॥ सुता । सोमा२ । हा३
हा । द्युमत्तामा२३४ः । सोमाः । इन्द्रा३ । हा२हा ।
यमन्दायिना२३४ः । पवि । त्रवा३ । हा३हा । तोअ
क्षारा२३४न् । देवान् । गच्छा३ । हा३हा । तुवो३
हो२३४ । वा । मा५दो६हायि ॥(१) इन्दुः । इन्द्रा
३ । हा३हा । यपवाता२३४यि । इति । देवा३ । हा
३हा । सोअब्रूवा२३४न् । वाचः । पता३यिः । हा३
हायि । मखस्याता२३४यि । विश्व । स्येशा३ । हा३
हा । नओ३हो२३४ । वा । जा५सो६हायि ॥(२) स
ह । स्रधा३ । हा३हा । रःपवाता२३४यि । समु ।
द्रोवा३ । हा३हा । चमीङ्खाया२३४ः । सोमः । पता
३यि । हा३हायि । रयायिणा२३४म् । सखे । न्द्रस्या

३। हाउहायि। ढिवाउहोऽ३४। वा। दा५यिवोऽ६
हायि(३) ॥ २ * ॥ [४]

॥ ऊर्द्ध्वांइडीसाम ॥ सुतासोमधुमत्तमाः। सोमा
२३इन्द्रार। यमा३४५। दी२३४नाः। पवित्रवन्तोऽ
क्षरा२३४न्। देवान्गच्छा। तुवोमार२३दा ३ ४ ३ः॥(१)
इन्दुरिन्द्रायपवतायि। आयिता२यिदेवार। सोऽ३४
५। ब्रू२३४वान्। वाचस्पतिर्मखस्यता२३४५यि। वि
श्वस्येशा। नओजा२३सा३४३ः॥(२) सहस्रधारःपवता
यि। सामू२द्रोवार। चमा३४५यि। खार३४याः। सो
मस्यतीरयीणा१म्। सखेन्द्रस्या। दिवेदा२३यिवा३५३
यि। ओ२३४५ई(३) ॥ २ † ॥ [७]

॥ साम्रम् ॥ सुतासो३सा५धुमत्तमाः। सोमाइन्द्रार।

* ऊ० गा० १५प्र० २अ० २सा०। † ऊ० गा० १६प्र० १अ० २सा०।

यमा३४५ । द्दी२३४नाः । पवित्रवन्तोअक्षरा२३४५न् ।
दायिरा्ओ२३४५वा । गाच्छा्ओ२३४वा । तुवो५मदाः ॥(१)
इन्दुरा३यिन्द्रायपवतायि । इतायिदेवा२ । सोआ३४५ ।
अ२३४वान् । वाचस्पतिर्म्मखस्यता२३४५यि । वायिश्वा
ओ२३४वा । स्यायिषा्ओ२३४वा । नओ ५ जसाः ॥(२)
सहस्रा३धारःपवतायि । समुद्रोवा२ । चमा ३ ४ ५ यि ।
रवा२३४याः । सोमस्पतीरयिणा१म् । सखाओ २ ३ ४
वा । इन्द्रस्याओ२३४वा । दिवे५दिवायि । वो ५ ई ।
डा (३) ॥ १२ * ॥ [८]

॥ श्यावाश्वम् ॥ तुना३१ । सो३मा ऽ । धुम । ता३
म । एहिया । सो । माइन्द्राया । म । दिना२ः ।
एहिया२ । पवित्रवान्तो३आ३ । चा२३४रान् । ऐहा

* ऊ० गा० २०प्र० १अ० १२सा० ।

१र २र १ २ ४ २
२यि । एहिया२ । देवान्गाच्छान्तू३वो३ । मा३४५दो६

५ ३ २ २ ४५ ५ २ ४र
हायि ॥(१) इन्दू३१ः । आ३यिन्द्रा । यप । वा३ते ।

५ १ र र २ १ १र
एहिया । आयि । तिद्देवासो । अ । ब्रूवा२न् । ए

र १ २ ४ ५ २र
हिया२ । वाचस्पतायिर्म्मा३खा३ । स्या२३४तायि । ऐ

१र १र २ ४ २
हा२यि । एहिया२ । विश्वस्ये शाना३ओ३ । जा३४५

५ ३ १ २ ४५ ५ २ ४र
सो६हायि ॥(२) सहा३१ । सूा३धा । र:पा । वा३ते ।

५ १ र र २र १ १र
एहिया । साम् । उद्गोवाचाम् । ई । खया२ः । ए

र १ २ ४ ५ १र
हिया२ । सोमस्याती३रा३ । या२३४यिणाम् । ऐहा

१र र १ २ ४ २
२यि । एहिया२ । सखेद्र स्यादा३यिव३ । दो३४५यि

५
वो६हायि(३) ॥ १३ * ॥ [९]

२ १र २र १ २ १ २
॥ महाविष्टम्भम् ॥ सुतासोमोहायि । धुमत्तमोवा ।

१ र २ र १ २ १ २ २ १
सोमाइन्द्रा । यमान्दा१यिना२३ः । होवा३हायि । पवित्र

* ऊ० गा० २०प्र० १ख० १२सा० ।

२ २१ २ १ २ २ १२ २
व । तोआहा१रा२३न् । होवा३हायि । देवान्गा१

१२ २ १ ३ ५र र
च्छा२३ । होवा३हा । तुवः । मा२दा२३४औहोवा ॥(१)

१ २ १ २ १२ १ २र र १र २
इन्दुरिन्द्रोहा । यपवतोवा । आयितिदेवा । सोआन्

१ २ २ र १ २ १ २
१वा२३न् । होवा३हायि । वाचस्पतिः । मखास्या१

१२ २ १ २ १ २
ता२३यि । होवा३हायि । विश्वास्ये१शा२३ । होवा३

२ १र ३ ५र र १ २ १
हा । नओ । जा२सा२३४औहोवा ॥(२) सहस्रधोहा ।

२ १ २ १ २र र १ २ १
रःपवतोवा । सामुद्रोवा । चमायिङ्क्षा१या२३ः । हो

२ २ १र ३ ५र र ३
वा३हायि । दिवे । दा२यिवा२३४औहोवा । दी२३४

५
शाः(३) ॥ ११* ॥ [१०] १५

अथ तृतीयतृचे†—प्रथमा ।

३१२३ १२
पवित्रन्तेविततम्ब्रह्मणस्पते

३१ २र ३१२ ३१२
प्रभुर्गात्राणिपर्य्येषिविश्वतः ।

---

० ऊ० गा० २२०प्र० २ख० ११सा० ।   † 'अरिष्टं साम'—इति वि० ।

१ २ ३ २उ ३ १ २
अतप्ततनूर्न्नतदामोअश्नुते

३ २ ३ १ २१ ३ १ २र
शृतासइद्वहन्तःसन्तदाशत ॥ १* ॥

हे "ब्रह्मणस्पते" मन्त्रस्य स्वामिन् सोम! "ते" "पवित्रं" शोधकमङ्गं "विततं" सर्व्वत्र विस्तृतम्। सः "प्रभुः" प्रभविता त्वं "गात्राणि" पातुरङ्गानि "पर्य्येषि" परिगच्छसि "विश्वतः" सर्व्वतस्तव तत् पवित्रम् "अतप्ततनूः" पयोव्रतादिना असन्तप्त-गात्रः "आमः" अपरिपक्वः "न अश्नुते" न व्याप्नोति। "शृ-तासः इत्" "शृताएव" परिपक्वाएव "वहन्तः" यागं निर्व्वहन्तः "तत्" पवित्रम् "समाशत" व्याप्नुवन्ति॥

"सन्तदाशत"--"तत्समाशत"—इति पाठौ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ २ ३
तपोष्पवित्रं विततन्दिवस्पदे

१ ३ २ ३ २क २र
र्च्चन्तोअस्यतन्तवोव्यस्थिरन्।

---

* ऋ० आ० ६, २, २, १२ (२भा० १९८ पृ०) = पे० आ० १, ३१ = ऋ० वे० ७, ३, ८, १।

१ २          ३ १ २ २ १ २
अवन्त्यस्यपवितारमाशवो

३ २ ३ १   २र   ३ १ २
दिवःपृष्ठमधिरोहन्तितेजसा ॥ २ * ॥

"तपोः" † शत्रूणां तापकस्य सामस्य "पवित्र" शोधकमङ्गं "दिवस्पदे" द्युलोकस्योत्थिते स्थाने "विततं" विस्तृतम् [ "तृतीयस्यामितो दिवि सोम आसीत्"—इति ब्राह्मणम् ] "अस्य" "तन्तवः" अंशवः ‡ "अर्चन्तः" दीप्यमानाः "व्यस्थिरन्" विविधं तिष्ठन्ति पृथिव्यां हविर्द्धाने वा "अस्य" सोमस्य "आशवः" शीघ्रगामिनः रसाः "पवितारं" पावयितारं यजमानम् "अवन्ति" रक्षन्ति होमद्वारा पश्चाद्धुता "दिवः" द्युलोकस्य "पृष्ठ" पृष्ठभागम् उन्नतदेशम् "तेजसा" स्वप्रकाशेन सार्द्धं "अधिरोहन्ति" आरोहणं कुर्वन्ति ॥

"अर्चन्तः"-"शोचन्तः"—इति पाठौ, "अधिरोहन्तितेजसा"-"अधितिष्ठन्तिचेतसा"—इति पाठौ ॥ २ ॥

* ऋ० वे० ७, ३, ८, २ ।

† 'हे तपोः'—इति वि० ।

‡ 'अस्य दशापवित्रस्य तन्तवः'—इति वि० ।

अथ तृतीया।

१ २ ३ २ २ १ २ ३ २
अरूरुचदुषसः पृश्निरग्रिय

३ १ २ ३ १ २ ३ २
उक्षामिमेति भुवनेषु वाजयुः।

३ १ २ ३ १ २
मायाविनो ममिरे अस्य मायया

३ १ २ ३ २ ३ २ ३ १ २
नृचक्षसः पितरो गर्भमादधुः॥ ३ *॥ १६

"उषसः" सम्बन्धि "पृश्निः" आदित्यः [ "पृश्निरादित्यो भवति प्राश्नुत एनं वर्णः"—इति निरुक्तम् ( २, १४ ) ] "अग्रियः" मुख्यः सोऽयं "अरूरुचत्" रोचयति। स "उक्षा" जलस्य सेक्ता "भुवनेषु" भूतजातेषु "मिमेति" मिनोति उदकं प्रक्षिपतीत्यर्थः। "वाजयुः" † तेषामन्नमिच्छन् "मायाविनः" माया प्रज्ञा तद्वन्तः देवा "अस्य" सोमस्य "मायया" प्रज्ञया "ममिरे" निर्मितवन्तः, सोमस्यैकैकांशपानबला अग्न्यादयः स्व-स्व-व्यापारेण जगत् सृजन्तीत्यर्थः। तथा "अस्य" मायया "नृचक्षसः" नृणां द्रष्टारः "पितरः" पालका देवाः अङ्गिरसः पितरो वा "गर्भम्" "आदधुः" धारयन्ति ओषधीषु च। अत्र सूर्य्यात्मकः सोमः स्तूयते। सूर्य्यरश्म्यनुगमाधीन-

---

* ऋ० वे० ७, ३, ८, ३।

† 'वाजयुः—वाजमन्नं तदिच्छुः अथवा वाजयुः वाजप्रदः अथवा वाजयुः वेगवान्'—इति वि०।

वर्द्धनाच्चन्द्रस्य अयमुषसः पृश्निः सविता अरूरुचत् रोचते रोचयति वासवं शिष्टं समानं तत्सम्बन्धिनः नृचक्षसः नृणां द्रष्टारः पितरो जगद्रक्षका रश्मयो गर्भमादधुः वृष्ट्यर्थम् ॥

"मिमीतिभुवनेषु"-"बिभर्त्तिभुवनानि"—इति पाठौ ॥३॥ १९

२र १ २ १ र २ १
॥ स्वारसाम ॥ पवौहोवा। त्रन्ते विततंब्रा। ह्मणस्पा
१ र र २ १
ता२यि। प्रभुर्गात्राणिपरियायि। षिविश्वाता२३ः।
१ २ ४५ २ ३ ५ २ ३र २ ३
आता३ष्ठाता। नूर्न्नाता२३४दा। हौ। मोआम्रू२३४
५ २ १ २ ४५ २ ३ ५
तायि। होश्यि। श्नात्तो३सार्इत्। वाहन्तो२३४ःसा।
२ ३ २ ४ २र १ २ १
हौ। तदा३शा५ना६५६ ॥(१) तपोहोवा। पवित्रं वित
२ १ १ र २
ताम्। दिवस्पादा२यि। अर्चन्तोअस्यतन्तवो। विय
१ १ २ ४ ५ २ २ ५
स्थायिरा२३न्। आवा३न्तोया। स्थापावी२३४ता।
२ ३ २ ३ ५ २ १ २ ४ ५
हौ। रमात्मा२३४वाः। होश्यि। दायिवा३ःपार्ष्ठम्।
२ ३ ५ २ ३ २ ४
आधीरो२३४हा। हौ। तिता३यिजा५सा६५६ ॥(२)
२र १ २ १ २ १ १ र
अरौहोवा। रुचदुषसःपा। श्निरग्रायाा२ः। उत्त्नामि

२ २ १ १ २ ४ ५ २
मेतिभुवनायि। षुवाजायू२३ः। मायाइवायिनो। मा

३ ५ २ ३ २ ३ ५ २ १
मोर२३४श्रा। हो। स्मायार२३४या। हो३यि। ना

२ ४ ५ २ २ ५ २ ३ ३ ४
वौ३व्वासाः। पायितारोर२३४गा। हो। भमा३दा५धू.

६५६ः(३)॥ १ * ॥ [१]

२ १ २ ० १
॥ क्रावम्१ ॥ पवोवा। अन्तेवितताँश्रा। ह्मणस्या।

१ २ २ २ १
ता२यि। प्रभुर्गात्राणिपरियायि। षिविश्वाता२ः।

१ २ २ १ १ २ ४ ५
अतप्ततनूर्नतदा। मोअश्नता२३यि। शृतासाईत्।

२ १ १ २ ४ २ १
वहन्ताःसा२३म्। तादा३माधुता६५६ ॥(१) तपोवा।

२ १ १ २
पवित्रंवितताम्। दिवस्पादा२यि। अर्चन्तोअस्यतन्त

२ १ १ २ २ १
वो। वियस्थायिरा२न्। अवन्त्यस्यपविता। रमाश्रा

१ २ ४ ५ २ २ २
वा२३ः। दायिवाउःपार्ष्ठम्। अधिरोहा२३ तायि

२ ५ २ २ २
ता३यिजा५सा६५६ ॥(१) अरोवा। रुचदुषसःपा। श्नि

* उ० गा० ७प्र० २ख० १सा०।

रश्मायार२ः। उत्त्वामिमेतिभुवनायि। घृवाजायू२ः।
मायाविनोममिरे३आ। स्यमायायार२३। नार्वा३२वासाः।
पितरोगा२३। भामा३हा५यू६५६ः(३) ॥ ३ * ॥ [३]

॥ यज्ञायज्ञीयम् ॥ पवाऽ५यिवम्। ता३यिवा३यितताँ३आ।
ब्राणस्पतेप्रभुर्गात्राणि। परियायि। घी३वायिश्वा३ताः।
अता२प्ततनूर्नतदामोअश्नु। तेभा२३र्ता। ऊम्मायि।
सा३ई:त्। वाहन्तःसन्तस्ता२अनाउ ॥(१) ताता। पोव्य
विन्नं विततन्दिवस्पदे र्चन्तोअस्यतन्तवो। वा३यास्था३यि
रान्। अवा२न्त्यस्यपवितारमा३। बोदा २ ३ यिवाः।
ऊम्मायि। पा३ष्ठीम्। आधिरोहन्तिता२यिजसाउ ॥(२)
सा३आ। रूरुचदुषसःपृश्निरग्रियउत्त्वामिमेतिभुवनायि।
षृ३वाजा३यू:। माया२विनोममिरे अस्यमाय्। यानार

* ऊ० गा० १२प्र० २अ० ३सा०।

२ १ २ २ १ र २ २
इर्वा। ऊन्नायि। क्षाइसा:। पार्थिवरोगर्भमाऽ२इधा

२ १ १ १
उ। वाइ४५(इ)॥ १ *॥[३] १६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थस्याध्यायस्य

पञ्चमः खण्डः † ॥ ५ ॥

---

अथ षष्ठे खण्डे ‡—

प्रथमसूक्त-प्रगाथे—

१ २र ३ १ २ ३ २ ३ १ २
प्रमंᳲहिष्ठायगायतऋतावॆबृहतेशुक्रशोचिषे।

३ १ २ ३ १ २
उपस्तुतासोअग्नये॥ १ ¶॥

हे "उपस्तुतासः" उपस्तोतारः! यूयं "मंहिष्ठाय" दातृतमाय "ऋतावने" ऋतवते यज्ञवते वा "बृहते" महते "शुक्रशोचिषे" दीप्ततेजसे "अग्नये" "प्र गायत" स्तोत्रं पठत ॥ १ ॥

---

* ऊ० गा० १५प्र० १ख० १सा०।

† 'यज्ञायज्ञीयमग्निष्टोमं साम'—इति वि०।

‡ 'इदानीमुक्थानि भवन्ति'—इति वि०।

¶ छ० आ० २, १, २, १ (१ भा० १७४ प०) = ऋ० वे० ६, ७, १४, ३।

अथ द्वितीया ।

१ २   ३ १ २ ३ २ ३ २ ३ १ २   ३ १   २
आवꣳसतेमघवावीरवद्यशःसमिद्धोद्युम्न्याहुतः ।
३ १ २   ३ १   २र ३ २ ३ २   ३ १ २
कुविन्नोअस्यसुमतिर्भवीयस्यच्छवाजेभिरागमत् ॥ २* ॥१७

"मघवा" धनवान् "द्युम्नी" अन्नवान् यशस्वी वा । [तथाच यास्कः—"द्युम्नं द्योततेर्यशोवान्नं वा (५, ५)"—इति "समिद्धः" सम्यग् दीप्तः "आहुतः" आभिमुख्येन हुतः अग्निः "वीरवत्" पुत्रवत् "यशः" यशस्करम् अन्नम् "आवंसते" यजमानेभ्य आ प्रयच्छति तस्य "अस्य" अग्नेः "भवीयसी" अस्मासु अतिशयेन भवितुं योग्या "सुमतिः" अनुग्रह-बुद्धिः "नः" अस्मान् "अच्छ" प्रति "वाजेभिः" अन्नैः सह "कुवित्" बहु-सलिलम् † [कुविदिति बहु-नाम (निघ० ३, १, १२)] "आगमत्" आगच्छतु ॥

"भवीयसी"-"नवीयसी"—इति पाठौ ॥ २ ॥ १७

५   र   ४र ५र   २
॥ प्रमꣳहिष्ठीयम् ॥ प्रमꣳहाइयिष्ठायगायता । ऋ
१   १ र २ ४   ५   २ १
तावृे२ । बृहतेशुक्राइशोइ । चा२३४यिषायि । उपा

* ऋ० वे० ६, ७, १४, ४ ।

† 'कुवित्—कदाचन'—इति वि० ।

औ२हो। स्तोतासो२आ२। गा२४५यो ६ हायि ॥(१)
उपस्त२तासोअग्नयायि। आव१सातारयि। मघवाना
यिरा२वा३त्। या२३३आः। समाऔ२हो। धोद्यु१म्नी
३या३। इ२३४५तो६हायि ॥(२) समिद्धो२द्युम्नीयाऊताः।
कुवायिन्नो२। अश्वसुमतातिर्भी२वी३। या२३४सायि।
अच्छाऔ२हो। वाजायिभी२रा३। गा२३४५मो६हायि(३) ॥

॥ ५ * ॥ [१] १७

अथ द्वितीयदृचे† —प्रथमा।

तन्ते मदङ्गृणीमसिवृषणम्पृत्सुसासहिम्।
उलोककृत्नुमद्रिवोहरिश्रियम् ॥ १ ‡ ॥

हे "अद्रिवः" वज्रवन् इन्द्र! "ते" त्वदीयं तं "मदं" सोम-
पान-जनितं हर्षं "गृणीमसि" गृणीमः प्रशंसामः [ 'गृ शब्दे'

० ऊ० गा० २प्र० २अ० ६सा०।

† 'हारिवर्ण' साम'—इति वि०।

‡ उ० आ० ४, २, ५, २ (१भा० ७८८ पृ०) = ऋ० वे० ६, १, १७, ४।

क्र्यादिः "प्वादीनां ह्रस्वः (७, ४, ८०)", "इदन्तोमसि (७, १, ४६)"—इति मसइगागमः]। कीदृशम्? "वृषणं" वर्षितारं कामानां "पृत्सु" पृतनासु सङ्ग्रामेषु "सासहिं" शत्रूणाम् अभि-भवितारं "लोककृत्नुं" लोकस्य स्थानस्य कर्त्तारं हरिप्रियं "हरिभ्याम्" अश्वाभ्यां "श्रयणीयं" सेव्यम् ["उ"शब्द एषः समुच्चये पादपूरणे वा]॥

"पृत्सु"-"पृत्सु"—इति पाठौ॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
येनज्योतीꣳष्यायवेमनवेमनवेचविवेदिथ।

३ २ ३ २ ३ २ ३ १ २
मन्दानोअस्यबर्हिषोविराजसि॥ २ *॥

हे इन्द्र! "येन" आत्मीयेन मदेन "आयवे" और्वशे-याय † "मनवे" विवस्वतः पुत्राय च "ज्योतींषि" सूर्यादीनि वृत्रादिभिरावृतानि तदा रोगं "विवेदिथ" अलम्भय प्रज्ञापित-वान् प्रकाशितवानसीत्यर्थः; तेन मदेन "मन्दानः" मोदमान-स्त्वम् "अस्य बर्हिषः" वृद्धस्य यज्ञस्य "विराजसि" विशेषेण दीप्यसे [यद्वा अस्येति तृतीयार्थे षष्ठी, अनेन बर्हिषा वृद्धेन मदेन हृष्यन् विराजसि विशेषेण दीप्यसे॥ २॥

* ऋ० वे० ६, १, १७, ५।

† 'आयवे—यजमानाय'—इति वि०।

अथ तृतीया ।

२ ३ १ २ २ १ २र २ १ २
तदद्याचित्तउक्थिनोनुष्टुवन्तिपूर्वथा ॥

१ २ २ १ २ ३ १ २
वृषपत्नीरपोजयादिवेदिवे ॥ २ * ॥ १८

हे इन्द्र ! "ते" त्वदीयं "तत्" प्रसिद्धं बलं "अद्याचित्" † अद्यापि ‡ "पूर्वथा" ¶ पूर्वस्मिन् काले इव "उक्थिनः" शस्त्रिणः स्तोतारः "अनुष्टुवन्ति" क्रमेण प्रशंसन्ति । स त्वं "वृषपत्नीः" वृषा वर्षन्तः पर्जन्याः पतिर्यासां तादृशीः "अपः" "दिवेदिवे" प्रतिदिवसं "जय" § स्वायत्तं कुरु ॥ २ ॥ १८

१ र २ १ २
॥ हारिवर्णम् ॥ तन्तेमदा२गृणीमसायि । वार्षणं

१ २ २ १ २ २ १ १ २
प । पृसासा३ही३म् । हौवा३हायि । उलोका३कृ३ ।

१ २ २ १ २ ५र २ २
होवा३हा । त्नुम । द्रा२यिवा२३४औहोवा । हरि

* ऋ० वे० ६, १, १८, १ ।

† "निपातस्य च (६, ३, १३६ )"—इति दी० ।

‡ 'चित्—इति पदपूरणः'—इति वि० ।

¶ "दिक्शब्देभ्यः (५, ३, २७ )'—इति था ।

§ मन्त्रे जयति दीर्घान्तः, तत्र "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति दीर्घः ।

१ १११२ १र र र
श्रियार२३४५म् ॥(१) येनज्योता२ रयिꣳषिआपवायि। मा
२र १ २ २ १ २ २ १ २
नवेच। विवायिदी३था३। होवा३हायि। मन्दानो ३
२ १ २ २ १ ३ ५र र
आ३। होवा२हा। स्यव। हा२यिषा२३४औहोवा।
२र १ १११२ १ र १
विराजसार ३ ४ ५ यि ॥(२) तद्वाचा२ रयित्तउक्थिनाः।
२ २२ २ १ २ २ १ २२
आनुष्टुव। तिपूर्वी३था३। होवा३हायि। वृषापात्नी३ः।
१२ २ १ ३ ५र र २र
होवा ३ हायि। अपः। जा२या२३४औहोवा। दिवे
२ ११११
दिवा२३४५यि(३) ॥ ६ * ॥ [१]

२र र र १ २ ३ ५ २
तन्तोमदाऔहोहायि। गार्णायिमा२३४सायि। वृ
१ ०५ १ र र २ ३र ४र ५
षाणा२३४ꣳहायि। पृत्सुसासहिमुलोका३४। औहोवा।
१ ३ ५ २ ३ ५ २ १ २ १ ० २
इहा२३४हायि। उरुवा२३४क्ल। नुमद्रि। वोहरिआ
३र ४र ५ १ ३ ५ ३र २
३४। औहोवा। इहा२३४हायि। औहो३१२३४।
५र ५ २र र र र १ २
याम्। एहिया६हा ॥(१) येनज्योता। औहोहायि।

० ऊ० गा० २प्र० २अ० ६सा०।

३ ५ २ १ ५ १ र
धीआया२३४वायि । मनावा२३४ई हायि । चविवेदियम

र १ ३र ४र ५ १ २ ५ २ ३
न्दाना३४ । औहोवा । इहा२३४हायि । उऊवा२३४

५ २ १ २ १ ० र २ ३र ४र ५ १ २
आ । स्वर्हिं । षोविराजा३४ । औहोवा । इहा२३४

५ ३र २ ५र ५
हायि । औहो३१२३४ । सायि । । एहियाइहा ॥(२)

२ रर र १ २ ३ ५ २ १
तदद्याचाऔहोहायि । ताउच्चा२३४ईनाः । अनूष्ट२३

५ १ र र २ ३र ४र ५ १ २ ५
४हा । वन्तिपूर्वथावृषपा३४ । औहोवा । इहा२३४हा

२ ३ ५ २ १र २ १ ७ र २ ३र
यि । उऊवा२३४त्नीः । अपोज । यारिवेदा३४ । औ

४र ५ १ २ ५ ३र २ ५र
होवा । इहा२३४हायि । औहो३१२३४ । वायि । ए

५
हियाइहा(३) ॥ १२ ॥ [२]

५ ४ २ ४ ५र ४ ५ १
॥ सौभरम् ॥ तन्ता३यिमा३दङ्गृणीमसोवा । वृषणं

र १ ० १ ३ ५ १
पृत्सुसासा२हायिमुलो२३ । हो । का२३४कू । तुमद्रि

६ २ १ २ ५र र ५र ४
वः । हरा३यिद्या३यि । आ२या२३४औहोवा ॥(१) येना

---

० ऊ० गा० १२प्र० १अ० १२सा० ।

२ ४ ५र ४५ १ र र १ ७
इज्योऽतीं॑षिन्नायवोवा । मनवेचविवेदा रयिथामन्दा

१ ३ ५ १ ऽ २
२३। हो। नोर३४आ। स्वर्वर्हिषः। विराऽहाऽयि।

१ ३ ५र र ५ ४ २ ४ ५ ४ ५
जारसार३४औहोवा ॥(२) तदाइथाइचित्तउक्थिनोवा।

१ र १७ १ ३ ५ १
अनुष्टुवन्तिपूर्वा रथाइथार२३। हो। पार३४लीः। अ

र र ऽ २ १ ३ ५र ७ ६
पोजया। हिवेइहाइयि। हार्यिवार३४औहोवा। ऊ

२१११
२३४५(३) ॥ १९ * ॥ १८

अथ तृतीयतृचे† —प्रथमा ।

३ १ २र ३ २उ ३ १ २ ३ १ २
श्रुधीहवन्तिरश्च्या इन्द्रयस्त्वासपर्यति ।

३ १ २ ३ १ २ ३ १ २ ३ १ २
सुवीर्यस्यगोमतोरायस्पूर्द्धिमहाँ असि ॥ १‡ ॥

हे इन्द्र ! यः "त्वा" त्वां "सपर्यति" [ सपरशब्दः कण्ड्वादिः¶ हविर्भिः परिचरति । तादृशस्य "तिरश्च्याः"—एतन्नामकस्य ऋषेर्मम "हवं" स्तुतिभिस्त्वद्विषयमाह्वानं "श्रुधि" शृणु ।

* उ० गा० १९प्र० १अ० १९सा० ।

† "तैरश्च्यं तृतीयमुक्थ्यम्"—इति वि० ।

‡ ऋ० आ० ४, २, १, ५ ( ७०७ पृ० ) = ऋ० वे० ६, ६, २०, ५ ।

¶ अतः "कण्ड्वादिभ्यो यक् ( ३, १, २७ )"—इति यकि रूपमिति भावः ।

श्रुत्वा च हे इन्द्र! त्वं "सुवीर्यस्य" शोभन-वीर्योपेतस्य [ यद्वा, वीरे पुत्रे भवं वीर्यं, सुपुत्रवतः ] "गोमतः" गवादि-पशुमतः "रायः" धनस्य दानेन अस्मान् "पूर्द्धि" पूरय। एतत्सामर्थ्यं कुतइत्यतआह—त्वं "महान्" गुणाधिकः श्रेष्ठश्च "असि" भवसि खलु ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २र
यस्त इन्द्र नवीयसीङ्गिरम्मन्द्रमजीजनत्।
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
चिकित्विन्मनसन्धियम्प्रत्नामृतस्यपिप्युषीम्॥ २ * ॥

हे "इन्द्र!" "यः" यजमानः "नवीयसीं" नवतरां † पुनःपुनः क्रियमाणतया "मन्द्रां" मदकरीं "गिरं" स्तुति-लक्षणां वाचं "ते" त्वदर्थम् "अजीजनत्" उदपीपदत् अकार्षीदित्यर्थः। तस्मै "स्तोत्रे" त्वं "प्रत्नां" पुरातनीम् ‡ "ऋतस्य" सत्यस्य¶ सम्बन्धि [ यद्वा तृतीयार्थे षष्ठी ( २, ३, ६३ ) ] सत्येन "पिप्युषीं" प्रवृद्धां ["सिलङ्गाजोश्च ( ६, १, २९ )"—इति प्यायतेः पी-भावः ] तादृशः "चिकित्वित् मनसं" [ 'कित ज्ञाने' क्वसौ रूपम्, आकारस्येकारश्छान्दसः ] चिकित्वांसि ज्ञानानि

* ऋ० वे० ६, ६, २०, ६।

† 'नवीयसीं—नवतरां मृदुपदवर्णस्वरोदाहरणयुक्ताम्'—इति वि०।

‡ 'ऋग्यजुःसामलक्षणाम्'—इति वि०।

¶ 'ऋतस्य पिप्युषीं—ऋतो यज्ञः अथवा ऋतमन्नम् अथवा ऋतः प्रजापतिः अथवा ऋतं सत्यं परं ब्रह्म, तस्य पिप्युषीं पोषणसमर्थाम्'—इति वि०।

सर्वेषां हृदयानि ययेति अभयङ्क्रियमाणं यत्तव रक्षणं तत् सर्वेषां हृदयं प्रज्ञापयतीति । ततः अतीन्द्रियार्थदर्शिकं "धियं" त्वदीयं रक्षणाख्यं कर्म तस्मै कुरु ॥

"यस्त इन्द्र"-"इन्द्रयस्ते"—इति व्यत्ययेन पाठौ ॥ २ ॥

अथ तृतीया ।

१ २　　३ २र　३ १ २ ३　　१　२　३ २
तमुष्टवामयङ्गिरइन्द्रमुक्थानिवावृधुः ।
३ १ २ ३ २　　३　१ २
पुरूण्यस्यपौꣳस्यासिषासन्तोवनामहे ॥ ३ * ॥ १९

॥ इति द्वितीयः प्रपाठकः ॥

ऋषयः "तम्" परस्परमाहुतं पूर्वोक्तलक्षणम् "उ"—इत्यवधारणे तमेव "इन्द्रम्" "स्तवाम:" स्तुतिभिः स्तुमः "यम्" इन्द्रं "गिरः" अस्माकं स्तुतयः "उक्थानि" शस्त्राणि च "वावृधुः" प्रावर्द्धयत् तं स्तुमः ; ततो वयम् "अस्य" इन्द्रस्य "पुरूणि" बहूनि "पौंस्याणि" वीर्याणि "सिषासन्तः" [ 'षण सम्भक्तौ' सनीड्भावपक्षे आत्वे कृते रूपं, "सनोतेरनः (८, ३, १०८)"—इति षात्वाभावः ] तानि वीर्याणि सम्भक्तुमिच्छन्तः सन्तो "वनामहे" तमिन्द्रं स्तुतिभिः सम्भजामहे ॥ ३ ॥

* ऋ० वे० ६, ६, २१, १ ।

५ र २ ४ ५४ ५ २ १ २ १
॥ तैरश्चम् ॥ श्रुधीहा२वन्तिरश्चियाः। इन्द्रायस्त्वा।
२ ३ २ १ ५र ३ २ २ ५ १
सपर्य्यतार३४यि। सुवी। रिया। स्यार३४गो। मा
१ २ २ २ ४
ता२ः। रायास्पूर्द्धी३। हा३हायि। महाप्रुं३श्सी ॥(१)
५ २ ४ ५ ४र ५ २ १ २ १ २ ३र
यस्त्वा३यिन्द्रनवीयसायिम्। गिराम्मन्द्राम्। अजी
२ १ ५ ३ २ २ ५ १
जना२३४त्। चिकि। त्विन्मा। ना२३४साम्। धाया
१ २ २ २ ४
२म्। प्रत्नामात्ती३। हा३हा। स्यपा५यिप्युषीम् ॥(२)
५ २ ४र ५ ४ ५ २ १ २ १ २ ३र २ १
तमुष्टा३वामयङ्गिराः। इन्द्रामुक्था। निवावृधू२३४ः।
५र ३ २ २ ५ १ १ २
पुरू। णिर्या। स्यार३४पौ। साया२। सिषासान्ता३ः।
२ २ ४ ५
हा३हायि। वनापूमहायि। होपूई। डा(३) ॥ ७ *॥ [१]
२ र र र १ २ २
॥ वारवन्तीयम् ॥ श्रुधीहवाऔहोहायि। ताइरश्चार३
५ २ र १ ५ १ र र
४याः। इन्द्रयस्त्वासपर्य्यातो२३४हायि। सुवीर्य्यस्यगो

---

* ज० गा० २प्र० २ख० ७सा०।

२ २र ४३ ५ १ २ ५ २ ३ ५
मा३४। औहोवा। इहा२३४हायि। उञ्वा२३४ताः।
२र १ २र १ ७ र २ ३र ४र ५ १ २
रायस्पू। धायिमहा७आ३४। औहोवा। इहा२३४
५ ३र २ ४र ५ २
हायि। औहो३१२३४। सायि। एहियाइहा॥(१) य
र र १ २ ३ ५ २
स्तइन्द्राऔहोहायि। नावीया२३४सायिम्। गिरम्म
र र १ ५ १ २ ३र
न्द्रामजीजानो२३४हायि। चिकित्विन्मनसन्धा३४। औ
४र ५ १ २ ५ २ ३ ५ २ १र २
होवा। इहा२३४हायि। उञ्वा२३४याम्। प्रत्नाम्र।
१ ७ २ ३र ४र ५ १ ३ ५ ३र २
तास्यपिप्यू३४। औहोवा। इहा२३४हायि। औहो
५र ५ २ र र १ २
३१२३४। षीम्। एहियाइहा॥(२) तमुष्टवाऔहोहा
२ ५ २ र र १
यि। मायज्ञा२३४यिराः। इन्द्रमुक्थानिवावार्धोर ३४
५ १ र र २ २र ४र ५ १ २
हायि। पुरूण्यस्यपौ७स्ता३४। औहोवा। इहा२३
५ २ ३ ५ २ १र २ १ ७ र २ ३र
४हायि उञ्वा२३४या। सिषास। तोवनामा३४। औ

४र ५ १ २ ५ ३र २ ५र
होवा। इहार२३४हायि। औहो३१२३४। हायि। ए

५ ४
हियाईहा। होपुई। डा(३) ॥ १४ * ॥ [२] १९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थाे

षष्ठः खण्डः † । ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ४ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-

श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-

चार्य्येण विरचिते माधवीये सामवेदार्थ-

प्रकाशे उत्तराग्रन्थे चतुर्थोऽध्यायः ‡ ॥

---

* ऊ० गा० १२प्र० १ख० १४सा० ।

† 'तृतीयमह्नः समाप्तः' इति वि० ।

‡ द्वितीयश्च प्रपाठकः समाप्तः'—इति वि० मूल-पदकारादि-सम्मतमिति-भ्रमः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ५ ॥

## ॥ अथ पञ्चमाध्यायः आरभ्यते* ॥

तत्र,

प्रथमे खण्डे प्रतआश्विनीरिति† त्र्यचं प्रथमं सूक्तम्,
तत्र प्रथमा—

२ ३ १ २ ३ १ २
प्रतआश्विनीःपवमानधेनवो
३ १ २ ३ १ २ ३ १ २
दिव्याअसृग्रन्पयसाधरीमणि ।
१२ ३२३ १ २ ३
प्रान्तरिक्षात्स्थाविरीस्तेअसृक्षत
१ २ ३ १ २ ३ १ २
येत्वामृजन्त्यृषिषाणवेधसः ॥ १ ‡ ॥

हे "पवमान" सोम! "ते" तव "आश्विनीः" व्याप्ताः ['अशू व्याप्तौ ( स्वा० आ० )' तस्मादौणादिको विनिः, ततोऽण्, व्यत्ययेनाद्युदात्तः] "धेनवः" प्रीणयित्र्यः "दिव्याः" दिवि भवाः

---

* 'अथ चतुर्थस्योत्तरारभ्यते द्वितीयस्त्रिरात्रः । प्रहृतच्छन्दाः प्रथमस्त्रिरात्रः । अथोत्तरस्य छन्दांसि व्यूहन्ति जगत्यः प्रतिपदः, जगती-स्थाने त्रिष्टुभः, त्रिष्टुभां गायत्र्यः'—इति वि० ।

† "एषा चतुर्थस्य प्रतिपत्"—इति वि० ।

‡ ऋ० वे० ७, ३, १२, ४ ।

दिवः पतन्त्यो धाराः "पयसा" युक्ताः * "धरीमणि" धारके द्रोणकलशे† "प्र असृग्रन्" गच्छन्ति "ये" "वेधसः" विधातारः ऋत्विजः हे सोम ! "ऋषिषाणं" ऋषिभिः सम्भक्तत्वात् "त्वा" त्वाम् "सृजन्ति" अभिषुण्वन्ति, "ते" वेधसः "स्थाविरीः" स्थविरा धारा"‡ "अन्तरिक्षात्" सकाशात् "प्र असृक्षत" पात्रं प्रति सृजन्ति ॥

"धेनवे"–"धीजुवो"—इति पाठौ; "प्रान्तरिक्षात्स्थाविरीस्तेअसृक्षत"–"प्रातऋं वयःस्थाविरीरसृक्षत"—इति च ॥ १ ॥

अथ द्वितीया ।

२ २ ३ १ २ ३ १ २
उभयतःपवमानस्यरश्मयो

३ १ २ ३ १र २र ३ १ २
ध्रुवस्यसतःपरियन्तिकेतवः ।

१ २ ३ २ ३ १ २ ३ २ ३ २ ३
यदीपवित्रे अधिमृज्यतेहरिः

२ ३ १र २र ३ १ २
सत्तानियोनौकलशेषुसीदति ॥ २ ¶ ॥

"पवमानस्य" पूयमानस्य "ध्रुवस्य" स्वयमविचलितस्य "सतः" विद्यमानस्य सोमस्य "केतवः" प्रज्ञापका रश्मयः "उभयतः" इतश्चामुतश्च "परि यन्ति" परितो गच्छन्ति अभिषव-

* 'पयसा—तृतीयैकवचनमिदं प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम् पयांसि'—इति वि० ।

† 'धरीमणि—यज्ञ'—इति वि० ।

‡ 'स्थाविरीः स्थिराः स्थूला वा स्थविरीर्वा गावः रश्मयः'—इति वि० ।

¶ ऋ० वे० ७, ३, १३, १ ।

समये एवं भवति । "यदि" यदा "पवित्रे"* दशापवित्रे "हरिः" हरितवर्णोऽयं सोमः "अधि मृज्यते" तदानीं "सत्ता" सदनशीलोऽयं "योनौ"† योनिषु स्थानेषु "कलशेषु" द्रोणकलशादिषु पात्रेषु "निषीदति" निषण्णो भवति ॥

"योनौ"—"योना"—इति च पाठौ ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ १ २
विश्वाधामानिविश्वचक्षऋभ्वसः

३ १ २ ३१र २र ३ १ २
प्रभोष्टसतःपरियन्तिकेतवः ।

३ १ २ ३ १ २ ३
व्यानशीपवसेसोमधर्मणा

२ ३ १ २ ३ १ २
पतिर्विश्वस्यभुवनस्यराजसि ॥ ३ ‡ ॥ १

हे "विश्वचक्षः" सर्वस्य द्रष्टः ! सोम ! "प्रभोः" परिवृढस्य "सतः" "ते" तव "ऋभ्वसः" "[ऋभ्वा"—इति मह नामसु¶ महान्तः "केतवः" रश्मयः "विश्वा" विश्वानि सर्वाणि

* 'पवित्रे अधि—सप्तम्येकवचनमिदं पञ्चम्येकवचनस्य स्थाने द्रष्टव्यम्, पवित्रादधि'—इति वि० ।

† 'नितरां योनिर्नियोनिः, अथवा नीचैः स्थिता पवित्रस्य योनिर्नियोनिः, तस्मिन् नियोनौ'—इति वि० ।

‡ ऋ० वे० ७, ३, १२, ५ ।

¶ सायणमतेऽदःपदं निघण्टौ महन्नामसु ( ३, ३ ) पाठभेदेन पठ्यते । विवरणकारस्तु 'ऋभ्वसः—प्रभुत्वस्य'—इति व्याचष्टे ।

"धामानि" तेजः-स्थानानि देव-शरीराणि* "परियन्ति" परितो गच्छन्ति प्रकाशयन्तीत्यर्थः। हे "सोम!" "व्यानशी" व्यापनशीलस्त्वं "धर्मणा" धारकेण रसनिष्यन्देन "पवसे" पूयसे। किञ्च "विश्वस्य भुवनस्य" "पतिः" स्वामी त्वं "राजसि" ईश्वरो भवसि†॥

"प्रभोष्टेसतःपरियन्ति"-"प्रभोस्तेसतःपरियन्ति"—इति पाठौ, "व्यानशी"-"व्यानशि"—इति, "धर्मणा"-"धर्मभिः"—इति च ॥ ३ ॥ १

३ २ २र ५ १र ४ २र
॥ लौशाद्यम् ॥ प्रतआस्वि। नीःपवमार२३। नाइधे

२ ५ १ २र ३ ५ १ ४ २र ३ ५ १र
नवः। दिव्याअह्व। अन्पयसा२३। धाइरीमणि। प्रा

२ ३ ५र १र र ४ २ ३ ५ २र २र ३
न्तरिचात्। स्थाविरीस्ते २ ३। आइहत्तत। येत्वाम्र

५ १ २ ४ ३ १
जा। तिऋषिषा२३। णवाइयिधा५स्वाई५६ः॥(१) उभे

३ ५ १ र ४ २ २ ५ २ १ ३ ५ १
यतः। पवमाना२३। स्याइरश्मयः। ध्रूवस्यस। तः

४ २र ३ ५ ३ २र ३ ५ १र
परिया२३। तीइकेतवः। यदीपवि। त्रेअधिमा२३।

---

* 'विश्वा धामानि—विश्वानि स्थानानि जन्मानि नामानि वा'—इति वि०।

† 'राजसि—दीप्यसे शोभसे वा'—इति वि०।

४ २र ३ ५  ३ २र ३ ५  १र  २
ज्या३तेच्चरिः । सत्तानियो । नौकलशा२३४यि । पुसा३

३ २र ३र ५र  १
यिदा५ता६५६यि ॥(२) विश्वाधामा । निविश्वचा २३ ।

४ २ ३ ५  ३ २र ३र ५  १  ४ २र ३ ५
श्वा३क्षभ्वसः । प्रभोष्टेस । तःपरियार२३ । तो३केतवः ।

३ २र ३ ५र  १ र  ४ २ ३ ५र  २ २ ३ ५
वियानशो । पवसेसो२३ । मा३धर्मणा । पतिर्विश्वा ।

१  २ ४
स्यभुवना२३ । स्वरा३जा५सा६५६यि(३) ॥ २ * ॥ [१]

अथ द्वितीयतृचे—प्रथमा ।

१ २  ३ २ ३ १र २र ३ २
पवमानो अजीजनद्दिवश्चित्रन्नतन्यतुम् ।

१ २ ३ २ ३ २
ज्योतिर्वैश्वानरंबृहत् ॥ १ † ॥

"पवमानः" पूयमानः सोमः "बृहत्" महत् "वैश्वानरं" वैश्वानराख्यं "ज्योतिः" तेजः "दिवः" द्युलोकस्य "चित्रं" विचित्रं "तन्यतुं न" अशनिमिव "अजीजनत्" अजनयत् ॥ १ ॥

---

* ऊ० गा० ८प्र० २ख० २सा० ।

† छ० आ० ५, १, ५, ८ (२भा० ३८ पृ०)=ऋ० वे० ७, १, ११, १ ।

अथ द्वितीया ।

१ २   ३ १ २ ३ २ ३ १ ३   ३ २

पवमानरसस्तवमदोराजन्नदुच्छुनः ।

२उ   २

विवारमव्यमर्षति ॥ २ * ॥

हे "राजन्" दीप्यमान ! "पवमान" पूयमान ! सोम ! "तव" त्वदीयः "मदः" मदकरः "अदुच्छुनः"† रक्षोवर्जितः "रसः" "अव्यम्" अविमयं "वारं"‡ वालं दशापवित्रम् "वि अर्षति" अभिगच्छति ॥

"पवमानरसस्तव"-"पवमानस्यतेरसः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २   ३ २ ३ २ ३ १ २   ३ २

पवमानस्यतेरसोदक्षोविराजतिद्युमान् ।

२ ३ २ ३   २र ३ २

ज्योतिर्विश्वꣳस्वर्दृशे ॥ ३ ¶ ॥ २

हे सोम ! "पवमानस्य" "ते" त्वदीयः "रसः" "दक्षः" § "द्युमान्" दीप्तिमान्‖ "विराजति" प्रकाशते** । न केवलं

* ऋ० वे० ७, १, २१, २ ।

† 'दुच्छुनः दुष्टजनः, न दुच्छुनः अदुच्छुनः'—इति वि० ।

‡ 'विवारं—वि-अन्तरिक्षे ण, वारं=प्रान्तम्'—इति वि० ।

¶ ऋ० वे० ७, १, २१ ३ ।

§ 'दक्षः शीघ्रगामी, अथवा दक्षरक्षणक्रियायाः कर्म'—इति वि० ।

‖ 'द्युमान् द्युलोकवान्'—इति वि० ।

** 'विविधं दीप्यते शोभते वा'—इति वि० ।

स्वयमेव प्रकाशते किन्तु "विश्वं" व्याप्तं *"स्वः" सर्वं "ज्योतिः" तेजः "दृशे" द्रष्टुं करोतीति शेषः† ॥

"पवमानस्यतेरसः"-"पवमानरसस्तव"—इति पाठौ ॥३॥२

॥ सञ्चितम् ॥ पवमानोअ। जा२यिजनात्। दि वा२ः। चार३यित्राम्। नता२न्यात्नम्। ज्यो२३तीः। वा२यिश्वा। नरा२३म्। हाउवा३। ब२३४हात् ॥(१) पवमानर। सा२स्तवा। मदो२। रा२३जान्। अ दू२च्छूनाः। वा २ ३ यिवा। रा२मा। व्यमा २ ३। हाउवा३। षा२३४ती ॥(२) पवमानस्य। ता२यिरसाः। दक्षो२। वा२३यिरा। जता२यिद्यूमान्। ज्यो २ ३ तीः। वा२यिश्वाम्। सुवा२३। हाउवा ३। ह२३४ शे(३) ॥ १२ ‡ ॥ [१]

---

* 'विश्वं सर्वम्'—इति वि०।

† 'स्वर्दृशे—स्वर्गलोकस्य गमनाय ; न केवलं स्वर्गलोकस्य, सर्वस्य जगतो दर्शनायेत्यर्थः'—इति वि०।

‡ ऊ० गा० १२प्र० १अ० १२सा०।

२ ३ १ २ १ ३ २ १

॥ जराबोधीयम् ॥ पवमानोवा । आजीजनात् ।

२ २ २ १ ३ २

दिवाश्चार२३यित्राम् । नतन्यातूम् । ज्योतायिर्वा१यि

४ऽ ५ २ २ २ ३ १ २

श्वार२३ना । रम् । बृहो२३४५ई । डा ॥(१) पवमानोवा ।

१ २ १ २ १ २ १ २

रासस्तवा । मदोरार२३जान् । अदुच्छू नाः । विवारा

४ऽ ५ २ २ २ ३ १

१मार२३व्याम् । अ । षतो२३४५ई । डा ॥(२) पवमानो

२ १ ३ २ १ २ १ २ १

वा । ख्यातेरसाः । दच्चोवार२३यिरा । जतिह्यूमान् ।

३ २ ४ऽ ५ ३ २

ज्योतायिर्वा १ यिश्वा २ ३ऽसू ऽ । वः । इशो ३ ४ ५ ई ।

डा(३) ॥ ८ * ॥ [२]

५ २ ४र ५र १

॥ औपगवोत्तरम् ॥ पवमा३नोअजीजनात । दिवश्चि

२र १

त्रन्नतन्यतूम् । ज्योतीं २ । ह्वौं २ । ऊवा २ ३ यि ।

२ ५ २ १ २ ५ २ ४ ५ १ ३

वा३४यिश्वा । नरम्बृहात् ॥(१) पवमा३नरसस्तवा । मदो

३ २ १ २

राजन्नदुच्छुनाः । विवौं २ । ह्वौं २ । ऊवा२३यि । रा

---

* ऊ० गा० १८प्र० १ख० १८सा० ।

५ २ १ २ ५ ५ ४ ५र १ र
३४मा। व्यमर्षातायि ॥(२) पवमा३नस्यतेरसाः। दक्षो
र २र १
विराजतिद्युमान्। ज्योतौ२। द्यौ२। ऊवा२३यि।
२ ५ २ १ २ र १ २
वा३४यिश्वाम्। सुवर्हृशायि। ऐ। द्या२ए२३। हिया
५र र २ १२ १११११
३४औहोवा। ए३। उपा३१२३४५(३) ॥ ८ * ॥ [३] २

अथ प्रयद्गावइति षडृचं तृतीयं सूक्तम्,

तत्र प्रथमा।

२उ ३१ २र ३ २ ३ २ ३ १ २
प्रयद्गावोनभूर्णयस्त्वेषाअयासोअक्रतुः।
१ २ ३ २उ ३ १ २
घ्नन्तःकृष्णामपत्वचम् ॥ १ † ॥

"यत्" ये अभिषुताः सोमाः "गावः न" उदकानीव [तानि यथा तूर्णमधः पतन्ति तद्वत्; गाव एव वोपमीयन्ते, ता यथा स्वं गोष्ठं प्रत्याशु गच्छन्ति तद्वत्; अथवा गावः स्तुतिवचनाः यथा स्तुत्यं प्रति क्षिप्रं प्राप्नुवन्ति तद्वत्], "भूर्णयः" क्षिप्राः, "त्वेषाः" दीप्ताः "अयासः" अयाः गमनशीलाः, "कृष्णां" कृष्णवर्णाम् "अपत्वचम्" अपकृष्टां त्वचं "घ्नन्तः" विनाशयन्तः, ईदृग्भूता ये सोमाः "प्र अक्रमुः" तां स्तुम इति शेषः ॥

"यत्"-"ये"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १८प्र० १ख० ८सा०।

† छ० आ० ६, १, १, ५ (२भा० ४७पृ०)=ऋ० वे० ६, ८, २१, १

अथ द्वितीया ।

२ १२ ३२ ३१२३ क २र

सुवितस्यवनामहेतिसेतुन्दुराय्यम् ।

३ २ ३१ २ ३२

साह्यामदस्युमव्रतम् ॥ २* ॥

"सुवितस्य"† शोभनं प्राप्तस्य सोमस्य सम्बन्धिनम् "अति-सेतुम्"‡ रक्षोविषयं बन्धनं "वनामहे"¶ सोमकर्त्तृकं रक्षसां बन्धनं स्तुमइत्यर्थः । कीदृशम् ? "दुराय्यम्" दुष्प्रापणीयम् § किञ्च "अव्रतम्" यज्ञादि-कर्म-रहितं "दस्यु"‖ शत्रुं "साह्याम" अभिभवेम ॥

"दुराय्यं"-"दुराव्यं","साह्याम"-"साह्यांस"—इति पाठाः॥२॥

अथ तृतीया ।

२ ३१२ ३१र २र २ १ २

शृण्वेवृष्टेरिवस्वनःपवमानस्यशुष्मिणः ।

१२ ३१२ ३ २

चरन्तिविद्युतोदिवि ॥ ३ ** ॥

"शृण्वे" श्रूयते । कः ? "स्वनः" । किमिव ? "वृष्टेः"

---

* ऋ० वे० ६, ८, ३१, २ । "मनामहे"—इति च तत्र क्वचित् पाठः ।

† 'सुवितस्य—अभिषुतस्य'—इति वि० ।

‡ 'अतिसेतुं—मर्य्यादां त्यक्त्वा अतिश्रद्दधानतया'—इति वि० ।

¶ 'वनतिः स्तुतिकर्मा, स्तुतिं कुर्मः'—इति वि० ।

§ 'दुराय्यं—दुर्वार्यम्, अथवा दुराप्यं दुस्साध्यम्'—इति वि० ।

‖ 'व्रत-वर्जितम्'—इति वि० ।

** ऋ० वे० ६, ८, ३१, ३ ।

वर्षणस्य स्तनइव [ तस्य यथा महान् स्वनः श्रूयते तद्वत् प्रभूत-रस-पात-समये श्रूयते ]। कस्य स्वन इति? तत्राह—“पव-मानस्य” पूयमानस्य “शुष्मिणः” बलवतः तस्यैव “विद्युतः” दीप्तयः* “दिवि” अन्तरिक्षे चरन्ति ॥ ३ ॥

अथ चतुर्थी।

१ २ ३ २३ ३ १ २ ३ १ २
आपवस्वमहीमिषङ्गोमदिन्दोहिरण्यवत्।

१ २ ३ २ १
अश्ववत्सोमवीरवत् ॥ ४ † ॥

हे “इन्दो!” “सोम!” अभिषुतः त्वं “महीम् इषम्” महदन्नम् “आ पवस्व” ‡। कीदृशम् अन्नम्? “गोमद्” गोभिर्युक्तम्, “हिरण्यवत्” सुवर्णोपेतम्, “अश्ववत्” अश्वोपेतम्, “वीरवत्” पुत्रयुक्तम् ॥

“अश्ववत्सोमवीरवत्”-“अश्वावद्वाजवत्सुतः”—इति पाठौ॥४॥

---

* ‘विद्युतः—विद्युत्संयुक्तस्य’—इति वि०।

† ऋ० वे० ६, ८, ३१, ४।

‡ ‘आपवस्व महीमिषम्’—आभिमुख्येन पवस्व महीमिषम् महतीमिषं वृष्टिमन्नं वा’—इति वि०।

अथ पञ्चमी।

१ २ ३ २ ३ १ १२
पवस्वविश्वचर्षणआमहीरोदसीपृण।

२ ३उ ३ २ ३ १ २
उषाःसूर्योनरश्मिभिः ॥ ५ * ॥

हे "विश्वचर्षणे" विश्वस्य द्रष्टः सोम! स त्वं "पवस्व" चर रसम्। तथा क्वत्वा तेन रसेन "मही"† "रोदसी" द्यावापृथिव्यौ "आ पृण" आ पूरय। "उषाः" उषसः [एकदेश-वाचिनोषः-शब्देनाहान्युपलक्ष्यन्ते तत्प्राधान्यात्] अहानि "रश्मिभिः" "सूर्योन" सूर्य्यइव ॥

"पवस्वविश्वचर्षणे"-"पवस्वविश्वचर्षण"—इति पाठौ ॥ ५ ॥

अथ षष्ठी।

१ २ ३ २ ३ १ २ ३ १ २
परिनःशर्मयन्त्याधारयासोमविश्वतः।

१ २ ३ १ २ ३ १ २
सरारसेवविष्टपम् ॥ ६ ‡ ॥ ३

हे सोम! "नः" अस्मभ्यं "शर्म्मयन्त्या" सुखयन्त्या धारया¶ "विश्वतः" सर्वतः "परि सरा" परिसर परिचर। "रसेव"

---

* ऋ० वे० ६, ८, ३१, ५।

† 'मही—महती'—इति वि० महत्यौइत्यर्थः।

‡ ऋ० वे० ६, ८, ३१, ६।

¶ 'शर्म्मयन्त्या—शर्म्म-सुखं, तद्भावयन्त्या धारया'—इति वि०।

रसेनेव "विष्टपं" भूलोकं* [ यद्वा रसा नदी स्थानं सा प्रवणरूपमिव ]॥

"परिनः"-"परिणः"—इति पाठौ॥ ६॥ ३

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य पञ्चमाध्यायस्य प्रथमः खण्डः॥ १॥

---

अथ द्वितीय खण्डे—

आशुरर्षेति षडृचं प्रथमं सूक्तम्, तत्र प्रथमा।

२ ११ ३१२ ३१२३१ २
आशुरर्षबृहन्मतेपरिप्रियेणधाम्ना।
१ २२ २उ ३ १२
यत्रदेवाइतिब्रवन्॥ १ †॥

हे "बृहन्मते"‡ महामते सोम! "प्रियेण" देवानां प्रियतमेन "धाम्ना" शरीरेण ¶ "धारया" "आशुः" शीघ्रः सन्

---

* 'विष्टपं स्वर्गं लोकम्,—इति वि०।

† ऋ० वे० ६, ८, २९, १। "ब्रुवन्"—इति मु०पाठः, ऋग्वेदे च क्वचित् पाठः।

‡ 'बृहन्मते—बृहद्बुद्धे'—इति वि०।

¶ 'परिप्रियेण—परि समन्तात् प्रियेण धाम्ना प्रियेण स्थानेन'—इति वि०।

"पर्य्येषि" परिगच्छ, "यत्र" "देवाः" इन्द्रादयः वर्त्तन्ते—"इति" "ब्रुवन्" उच्चारयन्, तं देशं गच्छामीति ब्रुवन्नित्यर्थः ॥ १ ॥

अथ द्वितीया ।

३ १र २र ३ १ २ ३ २ ३ १ २
परिष्कृण्वन्ननिष्कृतञ्जनाययातयन्निषः ।
३ २ ३ १ २र
वृष्टिन्दिवःपरिस्रव ॥ २ * ॥

"अनिष्कृतम्" असंस्कृतम् † यजमानं स्थानं वा "परिष्कृण्वन्" संस्कुर्वन् "जनाय" "इषः" अन्नानि "यातयन्" ‡ निर्गमयन् "दिवः" अन्तरिक्षात् "वृष्टिं" ¶ "परि स्रव" ॥ २ ॥

अथ तृतीया ।

३ २उ ३ १र २र ३ १ २ ३ २ ३ २
अयꣳसयोदिवस्परिरघुयामापवित्रआ ।
१ २ ३ १ २र
सिन्धोरूर्म्माव्यक्षरत् ॥ ३ § ॥

"सः" "अयं" सोमः "पवित्रे आ" सिच्यमानः [—इति

---

* ऋ० वे० ६, ८, २९, २ ।

† 'अनिष्कृतम्—आभिमुख्येन निष्कृतम्'—इति वि०। इह केनचिन्न्यायेन अत्राभिमुख्यं कुतो लभ्यतइति ।

‡ 'यातयन्'—प्रापयन्—इति वि० ।

¶ मुद्रित-मूले तु "वृष्टिम्"—इति पाठः ऋग्वेदेपि तथा ।

§ ऋ० वे० ६, ८, २९, ३ ।

शेषः *] "सिन्धोः" जलस्य † "ऊर्मा" ‡ ऊर्मौ सङ्घाते "वि अचरन्" विविधं चरति । स इत्युक्तम्, कः ? इत्याह— "यः" "दिवस्परि" द्युलोकस्योपरि "रघुयामा" लघुगमनः ¶ देवप्राप्तौ, सोयमिति सम्बन्धः ॥ ३ ॥

अथ चतुर्थी ।

३ १ २   ३ २ ३ २उ   ३ १ २ ३ १ २
सुतएतिपवित्रआत्विषिन्दधानओजसा ।

३ १ २   ३ १ २
विचक्षाणोविरोचयन् ॥ ४ § ॥

"सुतः" अभिषुतः सन् "पवित्रे" दशापवित्रे ["आ" —इत्यनर्थकः] "ओजसा" बलेन "शीघ्रम्" "एति" गच्छति । कीदृशः सन् ? "त्विषिं" दीप्तिं "दधानः" धारयन्, "विचक्षाणः" सर्वं पश्यन्, ‖ "विरोचयन्" दीपयंश्च ; किम् ? देवानिति शेषः ॥ ४ ॥

---

* 'पवित्रे—अधिकरण-सप्तम्येषा ; पवित्रे अधिकरणभूते । आ-इत्ययमुपसर्गः अचरदित्याख्यातेन सम्बन्धयितव्यः ; आ अचरत्'—इति वि० ।

† 'सिन्धोः—समुद्रस्य नदीनाञ्चोदकस्य वा'—इति वि० ।

‡ 'ऊर्मयः सङ्घाताः'—इति वि० । ऊर्मा इति तूर्म्मिशब्दस्य सुपां सुलुगिति सुपो डादेशे टि-लोपे रूपम् ।

¶ 'रघुशब्दो लघुवाची'—इति वि० ।

§ ऋ० वे० ६, ८, २९, ४ ।

‖ 'विचक्षाणः—विविधं पश्यमानः अयं वा विश्वं जगत् पश्यमानः'—इति वि० ।

अथ पञ्चमी ।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
आविवासन्परावतोअथोअर्वावतःसुतः ।
१ २ ३ १ २
इन्द्रायसिच्यतेमधु ॥ ५ * ॥

"सुतः" अभिषुतः सोमः "परावतः" [ दूरनामैतत् † ] दूरस्थान् "अथो" ‡ अपिच "अर्वावतः" अन्तिकस्थांश्च ¶ देवान् "आ विवासन्" रसेन परिरक्षणायेत्यर्थः । "इन्द्राय" इन्द्रार्थम् "मधु" मधुसदृशः सोमः "सिच्यते" ॥ ५ ॥

अथ षष्ठी ।

३ १ २ ३ १ २ ३ १ २
समीचीनाअनूषतहरिंहिन्वन्त्यद्रिभिः ।
२ ३ १ २ ३ १ २
इन्दुमिन्द्रायपीतये ॥ ६ § ॥ ४

"समीचीनाः" सम्यगञ्चिताः सङ्गताः स्तोतारः ‖ "अनूषत" स्तुवन्ति किञ्च सोमं "हरिं" हरितवर्णं "हिन्वन्ति"

---

* ऋ० वे० ६, ८, २९, ५ ।

† "परावतः"—इति निघण्टौ तृतीय-षड्विंशे दूरनामसु पञ्चमत्वेन पाठात् ।

‡ "अथ उ"—इति वि० ।

¶ अन्तिकनामसु "अर्वाके"—इति पाठात् ( निघ० २, १६, ८ ) ।

§ ऋ० वे० ६, ८, २९, ६ । "योनावृतस्यसीदत"—इति तत्र तृतीयः पादः ।

‖ 'समीचीनाः—आसन्नवर्त्तिनः'—इति वि० ।

प्रेरयन्ति गमयन्ति "अद्रिभिः" ग्रावभिः। किमर्थं हिन्वन्ति? "इन्दुं" सोमम् "इन्द्राय" इन्द्रस्य "पीतये" पानाय ॥ ६ ॥ ४

अथ तृचात्मके द्वितीयसूक्ते—प्रथमा।

३ २   ३ २ ३ १ २ ३ १ २   ३ २ ३ १ २
हिन्वन्तिसूरमुस्रयःस्वसारोजामयस्पतिम्।
२ १   १२ २ १ २
महामिन्दुम्महीयुवः ॥ १ * ॥

"उस्रयः" कर्मार्थं निवसन्त्यः सर्वत्र गन्त्र्य इत्यर्थः, "जामयः" एकस्याः पाणेः उत्पन्नत्वात् परस्परं बन्धुभूताः, "स्वसारः" [ अङ्गुलि-नामैतत् ( निघ० २, ५, १३ )। सुष्ठु कर्मसु प्रेर्यन्ते ऋत्विग्भिरिति स्वसारः] अङ्गुलयः, "महीयुवः" सोमाभिषवं कामयमानाः सन्तः "सूरं" सुवीर्यं [ सोमे पीते वीर्यं भवतीति ; शोभनं वीर्यं कारणं वा, सर्वेषां कर्मणि प्रेरकं वा, तादृशम् ] "पतिम्" सर्वस्य स्थावर-जङ्गम-जातस्य स्वामिनं, यस्माद् देवार्थमिज्यतेऽतएव "महाम्" देवेभ्यो दीयमानत्वेन महान्तं मंहनीयं वा "इन्दुम्" ग्रहेषु स्यन्दमानं सोमं "हिन्वन्ति" प्रेरयन्ति [ "हिवि प्रीति-गत्योः (स्वा० प०)"—इति धातोरेतद्रूपं स्वादि ] † ॥ १ ॥

---

* ऋ० वे० ७, २, १, १।

† 'हिन्वन्ति सूरम् उस्रयः = सेवयन्ति सूर्यम् आदित्यरश्मयः। स्वसारः जामयः पतिम् = स्वसारः भगिन्यः जामयः आदित्यरश्मयः ; यथा परस्परं भगिन्यः एकस्यैव भर्त्तुः अहमहमिकया सेवां कुर्वन्ति, तद्वदादित्य-रश्मयः अहमहमिकया आदित्यं सेवन्ति। एवं, महामिन्दुम्महीयुवः = महिमानमिच्छन्त्यः सोमरश्मयः उदकानि वा'—इति वि०।

अथ द्वितीया।

१ २ ३ १ २ ३ ३ १ ३ १ २ ३ २
पवमानरुचारुचादेवदेवेभ्यःसुतः।
२ ३ २ ३ १ २
विश्वावसून्याविश ॥ २ * ॥

हे "पवमान" दशापवित्रेण पूयमान ! [यद्वा पुनान शुद्ध !] सोम ! "रुचारुचा" ["रुच दीप्तौ ( भ्वा० आ० )] सर्वेण तेजसा हे "देव" दीप्यमान ! "देवेभ्यः" देवार्थं "सुतः" अभिषुतः त्वं "विश्वा" व्याप्तानि सर्वाणि बहूनि "वसूनि" धनानि "आ विश" अस्मात् प्रापय [ यद्वा सर्वाणि "वसूनि" वासस्थानानि ग्रहादीनि† "आविश" समन्तात् प्रविश] ॥

"देवेभ्यस्सुतः"-"देवेभ्यस्परि"—इति पाठौ ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ २ ३ २ ३ १ २
आपवमानसुष्टुतिंवृष्टिन्देवेभ्योदुवः।
३ १ २ ३ १ २
इषेपवस्वसंयतम ॥ ३ ‡ ॥ ५

हे "पवमान" पूयमान ! पुनान ! वा सोम ! "सुष्टुतिं" ¶

---

* ऋ० वे० ७, २, १, २।

† ग्रह-चमसादीनि यज्ञीयपात्राणीति यावत्।

‡ ऋ० वे० ७, २, १, २।

¶ 'सुष्टुतिं—शोभनां स्तुतिम् प्रापयमाणां' —इति वि०।

शोभनस्तुति-युक्तां "वृष्टिं" "देवेभ्यः" देवानां "दुवः"*
[ "सुपां सुलुक् ( ७, १, ३९ )"—इति चतुर्थ्या लुक् ] दुवसे
परिचरणाय† "आ पवस्व" आ गमय त्वम् [ यथा मदीयया
स्तुत्या वृष्टिर्भवति तथा कुर्वित्यर्थः ] किञ्च अस्माकम् "इषे"
अन्नार्थञ्च "संयतं"‡ सम्यगस्मान् सङ्गच्छतीति वृष्टिं कुरु [ यद्वा
"दुवः" परिचर्या मभिलक्ष्य क्रियमाणां "सुष्टुतिं" शोभन-स्तुति-
रूपां वृष्टिं बहुशः स्तुतिमित्यर्थः, एतां देवेभ्यः प्रापय ] ॥ ३ ॥ ५

॥ विशोविशीयम् ॥ हिम्वाऊम् । ताइयिम् । राइ
मूस्राइयाः । स्वसारः । जामारइयाः । ऊम्मायि । पा
इताइयिम् । मार२३४हा५हायि । श्रो । ऊवायि । ई
२३४न्दूम् । ऊम्मायि । माइहीइ । यू२३४वाः । एहि
याई६हा ॥ (१) पवाऊम्माइना । ह्रइचाह्रइचा । देवदे ।
वायिभार३याः । ऊम्मायि । सूइता३ः । वा२३४यि

* 'दुवः—दूरात् द्युलोकात्'—इति वि० ।

† "दुवस्यति"—इति परिचरण-कर्मसु पञ्चमं नैघण्टुकम् ( ३, ५ ) ।

‡ "संयतं—सम्यङ् नियतम्'—इति वि० ।

२ ५ १ ३ २ ३ ५ १ २
श्वाह्वायि। ओ। ऊवाँयि। वा२३४सू। ऊम्मा। नी

२ १ ५र ५ २र र र
३या३। वा२३४यिम्रा। एह्वियाइ्हा॥(२) आपाह्नम्।

२ १ २ २ १ २ र १ २
वा३मा। ना३सूष्टू३तीम्। वृष्टिन्दे। वायिभा२३याः।

१ २ २ १ र ५ १ ३ २
ऊम्मायि। दू३वा३ः। आ२३४यिषेह्वायि। ओ। ऊवा

३ ५ १ २ २ १
यि। पा२३४वा। ऊम्मा। स्वा३सा३म्। या२३४

५र ५ ४
ताम्। एह्वियाईहा। होपृई। डा (३)॥ १० *॥[१]

२र र १ २
॥ ऐडानाꣳसङ्कारम्†॥ औहोयिऊवा३होयि। ह्वि

४ २ ३ ५ २र र ४ २ ३ ५ ३
न्वन्तिमू३रा३मुस्वयः। स्वसारोजा३मा३यस्पतिम्। म

२ ३ ५ २१र २ १ २ र
हामा२३४यिन्दूम्। मह्वीयुवः। इडा२३॥(१) पवमा

४ ३र ३५र १र ४ ३ ३ ५ र २ ३ ५
ना३रु३चारुचा। देवदे३वे३भ्यःसुतः। विश्वावा२३४सू।

२१र २ १ २र ४ २ ३ ५
नियाविश। इडा२३॥(२) आपवमा३ना३सुष्टुतिम्।

२ ४ २र ३ ५ २र र १ ३ २र
वृष्टिन्दे३वे३भ्योदुवः। औहोयिऊवा३होयि। इषायि

* ऊ० गा० ५प्र० १ ख० १०सा०। † "इडानांसंचारः"—इति ख० पाठः।

३ ५ २ १ २ १ २ ४ ५ ४
पा२३४वा । स्वर्णयनम् । इडा२३भा३ । एहीडा । हो

५ई । डा(३) ॥ १० * ॥ [२]५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य
द्वितीय खण्डः † ॥ २ ॥

---

अथ तृतीयखण्डे, ‡ प्रथमतृचे—

प्रथमा ।

१ २ ३ १ २ ३ १ २
जनस्यगोपाअजनिष्टजागृवि

३ २ ३ १ २ ३ २ ३ १ २
रग्निःसुदक्षःसुवितायनव्यसे ।

३ १ २ ३ १ २ ३ १ २
घृतप्रतीकोबृहतादिविस्पृशा

३ १र २र ३ २ ३ १ २
द्युमद्विभातिभरतेभ्यःशुचिः ॥ १ ¶ ॥

"जनस्य" § "गोपा" गोपयिता रक्षिता, "जागृविः"

---

* ऊ० गा० १९प्र० २अ० १०सा० ।

† 'उक्तम् बहिष्पवमानमेकविंशस्तोत्रिकम्'—इति वि० ।

‡ 'इदानीमाज्यानि वक्तव्यानि'—इति वि० ।

¶ ऋ० वे० ४, १, ३, १ = य० वे० १५, २७ ।

§ 'जनस्य—यजमानस्य'—इति वि० ।

जागरणशीलः सदा प्रबुद्धः, "सुदक्षः" सुबलः सर्वैः स्नावनीय-बलः, सः "अग्निः" "नव्यसे" नवतराय "सुविताय"* लोकानां कल्याणाय "अजनिष्ट" जातः। ततः "घृत-प्रतीकः" घृतेन प्रज्वलिताङ्गः, बृहता" महता "दिविस्पृशा" द्युलोकं प्राप्नुवता तेजसा युक्तः, "शुचिः" शुद्धः, एवंविधोऽग्निः "भरतेभ्यः" ऋत्विग्भ्यः तत्तदर्थं† "द्युमत्" दीप्तिमत् यथा भवति तथा "भाति"‡ प्रकाशते¶ ॥ १ ॥

---

* "सुविताय—यजमानजनाय अभिषवकर्त्तृणे"—इति वि०।

† 'भरताः मनुष्याः ऋत्विजो गृह्यन्ते, तेभ्यः'—इति वि०। "भरताः"—इति ऋत्विङ्नामसु प्रथमं नैघण्टुकम् (३, १८)।

‡ नात्र वि-शब्दो व्याख्यातः सायणेन, विवरणकारस्त्वाह—'वि=विविधम्'—इति।

¶ अत्र महीधरव्याख्या यथा—"योऽग्निर्भरतेभ्यः ऋत्विग्भ्यः सकाशादजनिष्ट जातः तैर्मथितत्वात्तेभ्यो जात इत्युच्यते। भरता इति ऋत्विङ्नामसु पठितम्। किमर्थं जातः। नव्यसे नवीयसे नवतराय सुविताय सूताय प्रसूताय कर्मणे यागाय सूतरिडागम आर्षः अभिनवं नवीयस्तस्मै ईलोप आर्षः। सोऽग्निर्दिविस्पृशा द्युलोक-स्पर्शिना बृहता ज्वालासमूहेन च मत्कान्तिमद्यथा तथा विभाति विविधं दीप्यते। कीदृशोऽग्निः? जनस्य यजमानस्य गोपाः। गोपायति रक्षतीति गोपाः क्विप् लोपोर्व्योर्वलि यलोपः। जागृविः जागरणशीलः कर्मणि सावधानः। सुदक्षः शोभनो दक्ष उत्साहो यस्य अतिकुशलो वा। घृतप्रतीकः घृतं प्रतीके मुखे यस्य। शुचिः शुद्धः बहूनि हवींषि भक्षयन्नपि उच्छिष्टो न स्यात् शोधको वा॥ "—इति।

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १र
त्वामग्ने अङ्गिरसो गुहाहित
२र ३ १ २र
मन्वविन्दञ्छिश्रियाणं वनेवने ।
१ २ ३ १ २ ३ १ २ ३ १र
सजायसे मथ्यमानः सहो महत्
२र ३ १ २ ३ १ २
त्वामाहुः सहसस्पुत्रमङ्गिरः ॥ २ * ॥

हे "अग्ने !" "अङ्गिरसः"† — एतन्नामका ऋषयः "गुहा" गुहायां "हितं" निहितं निगूढं "वनेवने" वृक्षे "शिश्रियाणम्" आश्रितम् "त्वाम्" "अन्वविन्दन्"‡ अलभन्त । "महत्" महता "सहः" सहसा बलेन युक्तः "सः" त्वं "मथ्यमानः" "जायसे" हे "अङ्गिरः"¶ अङ्गिरसां प्रकृतिभूत ! त्वां "सहसस्पुत्रम्" आहुः§ ॥ २ ॥

---

* ऋ० वे० ४, १, ३, ६ = य० वे० १५, २८ ।

† 'अङ्गानां रसभूताः' — इति वि० ।

‡ 'अन्वविन्दन् — विदज्ञाने, विद्लाभे, विदसत्तायाम्' — इति वि० ।

¶ 'अङ्गिरा जाठरोऽग्निः' — इति वि० ।

§ यत्र महीधरव्याख्या यथा — 'हे अग्ने ! अङ्गिरसः अङ्गिरोवंशोद्भवा ऋषयस्त्वा मन्वविन्दन् लेभिरे अन्विष्य प्रापुरित्यर्थः । किम्भूतं त्वां ? गुहा गुहायां निगूढे प्रदेशे हितं स्थितमप्सु प्रविष्टमित्यर्थः । अग्निर्देवेभ्य उदक्रामत्सोऽप आविशदित्यादि श्रुतेः । सुपां सुलुगिति गुहाशब्दात्सप्तमीलोपः । हे अग्ने ! पुनर्नष्टं त्वां वनेवने शिश्रिया नानावनस्पतिषु श्रितमङ्गिरसोऽन्वविन्दन् । नित्यवीप्सयोरिति वनेपदस्य

अथ तृतीया ।

३१ २ ३ १ २ ३ १ ३ १ २
यज्ञस्यकेतुम्प्रथमम्पुरोहित
३ १र २र ३१र २र
मग्निन्नरस्त्रिषधस्थेसमिन्धते ।
१ २ ३ २ ३ १ ३ २ ३ २ ३
इन्द्रेणदेवैःसरथꣳसबर्हिषि
२ ३ १र २र ३ १ २र ३ १ २
सीदन्निहोतायजथायसुक्रतुः ॥ ३ * ॥ ६

"नरः" कर्मणां नेतारः ऋत्विजः "यज्ञस्य" यागस्य "केतुं" प्रज्ञापकं "पुरोहितं" यजमानैः पुरस्कृतम् "इन्द्रेण" "देवैः" "सरथं" देवानां तेषां मान्यत्वात् समान-रथम् "अग्निं" "त्रिषधस्थे"† त्रिस्थाने विहारप्रदेशे "प्रथमं" "समिन्धते" सम्यग् दीपयन्ति । ततः "सुक्रतुः" शोभन-कर्मा "होता" देवाना-माह्वाता "सः" अग्निः "बर्हिषि" बर्हिर्युक्ते तस्मिन् स्थाने

---

द्विलम् । अयतेः शानचि बहुलं छन्दसीति शपः श्लुः द्वित्वं च । यं त्वामङ्गिरसो ऽग्नन्मन्त स त्वं जायसेऽधुनाप्यरणिभ्य उत्पद्यसे । कीदृशः ? महस्त्वहः महता बहुना सहसा बलेन मथ्यमानः । महस्त्वहः-शब्दाभ्यां तृतीयालोपः । मथ्यमानो जायस इत्यर्थः । हे अङ्गिरः अग्ने ! अतएव सहसो बलस्य पुत्रं त्वामाहुः वदन्ति मुनयः बलेन मन्थना ज्जायमानत्वाद्बलपुत्रं वदन्तीत्यर्थः ॥ "—इति ।

* ऋ० वे० ४, १, २, २।

† 'त्रिषधस्थे—सधस्थं स्थानमुच्यते । तृभिः स्थानैः समिन्धते—गार्हपत्य-दक्षिणाग्न्याहवनीय-प्रभृतिभिः स्थानैः समिन्धते'—इति वि० ।

"यजथाय" यज्ञाय * "निषीदन्" न्यसीदत् प्रतिष्ठितो भवदिति यावत् ॥

"समिन्धते"-"समीधिरे"—इति पाठौ ॥ ३ ॥ ६

२ १ २ र २ र १
॥ कावम् ॥ जनोवा । स्यगोपाअजनायि । ष्टजागृ
१ २ १ १
वा २यिः । अग्निःसुदक्षःसुविता । यनव्यासा २यि । घृ
र र २ १ १ २ ४ ५ २
तप्रतीकोबृहता । दिविस्पृशा२३ । द्युमा३द्वायिभा । ति
१ १ २ ४ २ १
भराता२३यि । भाया३:शु५चा६५६यिः ॥(१) तुवोवा ।
र २ र १ १ र
अग्ने अङ्गिरसो । गहाहायिता २म । अन्वविन्दञ्छिश्रिया
२ र १ १ र र र २
णाम् । वनेवाना २यि । सजायसेमथ्यमानाः । स
र १ १ २ ४ ५ २ १ १ २
होमाहार२३त् । त्वावा३माहुः । सहसास्पू२३त् । त्रामा
४ २ १ र
३ऽगा५यिरा६ ५ ६ः ॥(२) यज्ञोवा । स्यकेतुम्प्रथमाम् ।
२ र १ २ र १ १
पुरोहायिता २म् । पुरोहायिता २म् । अग्निन्नरंस्त्रिष
२ १ १ र र र
धस्थायि । समिन्धाता २यि । इन्द्रेणदेवैःसरथाम् ।

* 'यजथाय—यजन-क्रियायाः कर्तृणे'—इति वि० ।

२ १ १ २ ४८ ५ २र १
सवर्हीयिषार३यि । सायिदा३न्नायिद्वो । तायजाथा२३ ।
१ २ ४
यासू३क्का५तूइ५ई:(३) ॥ १५ * ॥ [१] ६

अथ द्वितीयखण्डे†—

प्रथमा ।

३ १ २ ३ १र २र
अयंवाम्मित्रावरुणासुत:सोमऋतावृधा ।
२उ ३ १ २ ३ १ ०
ममेदिहश्रुतꣳहवम् ॥ १ ‡ ॥

हे "ऋतावृधा"¶ ऋतस्य सत्यस्य यज्ञस्य वा वर्द्धकौ ! "मित्रावरुणा" हे मित्रावरुणौ ! "वां" युवाभ्याम् "अयं" "सोम:" "सुत:" अभिषुत: । यस्मादेवं तस्मात् "इह" अस्मिन् यज्ञे "ममेत्" मदीयमेव§ "हवम्" आह्वानं "श्रुतं" शृणुतम् ॥ १ ॥

---

* ऊ० गा० १९प्र० १अ० १५सा० ।

† 'मैत्रावरुणमाज्यम्'—इति वि० ।

‡ ऋ० वे० २, ८, ७, ४ ।

¶ 'ऋतावृधा—ऋतो यज्ञः, तेन वर्द्धयितारौ अथवा ऋतमन्नं तेन वर्द्धेते ऋतावृधौ' —इति वि० । निघण्टौ तु ऋतमिति यज्ञनामसु ( १, १२ ), धननामसु ( २, १० ), उदकनामसु ( १, १२ ), सत्यनामसु ( ३, १० ) च दृश्यते परं नलन्ननामसु ।

§ 'मम इत्—इत्-इति पद-पूरणः । इह मदीये यज्ञे'—इति वि० ।

अथ द्वितीया ।

१ २ ३ २ २     ३ १र २र ३ २
राजानावनभिद्रुहाध्रुवेसदस्युत्तमे ।
३ १ २
सहस्रस्थूणआशाते ॥ २ * ॥

"राजानौ" ईश्वरौ दीप्यमानौ वा "अनभिद्रुहा" † अनभिद्रोग्धारौ यौ मित्रावरुणौ "ध्रुवे" स्थिरे "उत्तमे" उत्कृष्टे "सहस्रस्थूणे" ‡ "सदसि" ¶ स्थाने "आशाते" उपविशतः [तावागच्छतामिति शेषः] ॥ २ ॥

अथ तृतीया ।

१ ३ १ २ ३ १ २     ३ १र २र३ १ २
तासम्राजाघृतासुतीआदित्यादानुनस्पती ।
१ २ ३ १ २
सचेतेअनवह्वरम् ॥ ३ § ॥ ७

"सम्राजा" सम्राजौ आज्ञयैव सर्वेषां शास्तारौ, "घृतासुती" घृतान्नौ ‖ ["तद्यांमहित्वंघृतान्नावस्तु"—इति मन्त्रान्तरात्, ]

---

* ऋ० वे० २, ८, ७, ५ । "आसाते"—इति तत्र पाठः ।

† 'अद्रोहकर्त्तारौ'—इति वि० ।

‡ 'सहस्रस्थूणे—स्थूणानां सहस्रं यस्मिन्'—इत्यादि वि० ।

¶ 'सदोनाममण्डपे इति यावत् ।

§ ऋ० वे० २, ८, ८, १ ।

‖ 'घृतासुतौ—घृतेन आहुतिः * * * शरीरवृद्धिर्ययोर्भवति * *'—इति वि० ।

"आदित्या" अदितेः पुत्रौ, "दानुनस्पती" 'दानुनः' धनस्य देवस्य वा 'पती' स्वामिनौ,* "ता" तौ मित्रावरुणौ "अनवह्वरम्" अकुटिलं यजमानं† "सचेते" हविर्भक्षणार्थं सेवेते ॥ २ ॥ ७

अथ तृतीय-तृचे‡—प्रथमा।

१ २ ३ २ ३ १ २ ३ १र २र
इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः।
३ १ २ ३ १र २र
जघान नवतीर्नव ¶ ॥ १ § ॥

[अत्र शाट्यायनिन इतिहासमाचक्षते—"आथर्वणस्य दधीचो जीवतो दर्शनेन असुराः पराबभूवुः। अथ तस्मिन् स्वर्गते सति असुरैः पूर्णा पृथिव्यभवत्। अथेन्द्रस्तैरसुरैः सह योद्धुमशक्नुवंस्तमृषिमन्विच्छन् स्वर्गं गत इति शुश्राव। अथ पप्रच्छ तत्रत्यान्—'नेह किमस्य किञ्चित् परिशिष्टमङ्गमस्ति?'—इति; तस्मा अवोचन्—'अस्त्ये तदाश्वं शीर्षं, येन शिरसा अश्विभ्यां मधुविद्यां प्राब्रवीत्, तत्तु न विद्मः यत्राभवत्'—इति। पुन-

---

* 'दानुनस्पती—दान-कर्तृणे यजमानाय'—इति वि०।

† 'अनवह्वरं—यज्ञम्'—इति वि०।

‡ 'ऐन्द्रसाज्यम्'—इति वि०। ¶ "नवतीर्णवा"—इति क० पु० पाठः।

§ ऋ० आ० २, २, ४, ५ (१भा० ३९९ पृ०) = ऋ० वे० १, ८, ७, ३।

रिन्द्रोऽब्रवीत्—'तदन्विच्छत'—इति । तद्दान्वेषिषुस्तच्छर्यणा-वत्यनुविद्या जग्मुः । शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्द्धे सरः स्यन्दते । तस्य शिरसोऽस्थिभिरिन्द्रोऽसुरान् जघान"—इति ॥]

"अप्रतिष्कुतः" परैरप्रतिशब्दितः प्रतिकूल-शब्द-रहितः इन्द्रः आथर्वणस्य "दधीचः"—एतन्नामकस्य ऋषेः "अस्थभिः" पार्श्व-शिरः-सम्बन्धिभिरस्थिभिः "नवतीर्नव" नवसङ्ख्याका नवतीः दशोत्तरा अष्टशतसङ्ख्याकाः (८१०) [तथाहि—लोकत्रयवर्त्तिनो देवान् जतु मादावासुरी माया त्रिधा सम्पद्यते ; त्रिविधा सा अतीतानागतवर्त्तमान-काल-भेदेन तत्काल-वर्त्तिनो जेतुं पुनरपि प्रत्येकं त्रिगुणिता भवति—एवं नव सम्पद्यन्ते ; पुनरपि उत्साहादि-शक्ति-त्रय-रूपेण त्रैगुण्ये सति सप्तविंशतिः सम्पद्यते ; पुनः सात्त्विकादि-गुणत्रयभेदेन त्रैगुण्ये सति एकोत्तरा अशीतिः सम्पद्यते ;—एवं चतुर्भिस्त्रिकैर्गुणिताया मायाया दशसु दिक्षु प्रत्येकमवस्थाने सति नवनवतयः सम्पद्यन्ते । एवंविधमायारूपाणि] "वृत्राणि" आवरकाण्यसुरजातानि "जघान" हतवान्] दधीचः—दधि अञ्चतीति दध्यङ्, अञ्चतेः ऋत्विगित्यादिना (३, २, ५९) क्विन्, अनिदिताम्मिति (६, ४, २४) न-लोपः, षष्ठ्येकवचने "अचः (६, ४ १३८)"—इत्यकारलोपे चाविति (६, ३, १३८) दीर्घत्वम्, उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्व-विधानेन तद्बाध्यते ।

अस्थभिः—"छन्दस्यपि दृश्यते (७, १, ७६)" —इति अन-जादावपि अस्थि-शब्दस्यानङादेशः शचोदात्तः] ॥ १ ॥

अथ द्वितीया।

२१ २र३२उ ३ १२३ १२
इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम्।

१२ ३१ २
तद्विदच्छर्यणावति ॥ २ * ॥

"पर्वतेषु" पर्ववत्सु गिरिषु अपश्रितम् अप गत्य स्थितम् "अश्वस्य" अश्व-सम्बन्धिनो दधीचः "यत्" "शिरः" "इच्छन्" इन्द्रो वर्त्तते, "शर्यणावति" एतत्सञ्ज्ञके सरसि† "तत्" शिरः "विदत्" अज्ञासीत्] 'ज्ञात्वा, तदाहृत्य, तदीयैः अस्थिभिः वृत्राणि जघान'—इति पूर्वस्यामृचि सम्बन्धः ॥ इच्छन्—इषु इच्छायां तुदादित्वाच्छप्रत्ययः। विदत्— वेत्तेर्लुङि व्यत्ययेन च्लेरङादेशः। शर्यणावति—शर्यणा नामानो देशास्तेषामदूर-भवः सरः शर्यणावत्; मध्वादिषु शर्यणाशब्दस्य पाठात् "मध्वादिभ्यश्च (४, २, ८६)"—इति चातुरर्थिको मतुप्, "सञ्ज्ञायाम् (८, २, ११)"—इति मतुपो वत्वम्, मतौ बह्वचोऽनजिरादीनाम् (६, ३, ११९)"—इति दीर्घः ॥ २ ॥

---

* ऋ० वे० १, ८, ७, ४।

† 'शर्यणावति—यज्ञे कर्मवति'—इति वि०।

अथ तृतीया ।

२उ ३ १ २ ३ २ ३ १ २ ३क २र

अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।

२ ३ ३ १ २ ३ २

इत्था चन्द्रमसो गृहे ॥ ३ * ॥ ८

"अत्राह" अस्मिन्नेव "गोः" गन्तुः "चन्द्रमसः" "गृहे" मण्डले "त्वष्टुः" दीप्तस्य आदित्यस्य सम्बन्धि "अपीच्य" रात्रावन्तर्हितं स्वकीयं यत् "नाम" तदादित्यरश्मयः "इत्था" इत्थमनेन प्रकारेण "अमन्वत" अजानन् [ उदकमये स्वच्छे चन्द्रविम्बे सूर्य-किरणाः प्रतिफलन्ति, तत्र प्रतिफलिताः किरणाः सूर्ये यादृशीं सञ्ज्ञां लभन्ते तादृशीं चन्द्रेऽपि वर्त्तमाना लभन्त इत्यर्थः। एतदुक्तम्भवति—यद्रात्रावन्तर्हितं सौरं तेजस्तच्चन्द्र-मण्डलं प्रविश्य अहनीव नैशं तमो निवार्य सर्वं प्रकाशयति; ईदृगभूत-तेजसा युक्तः सूर्यस्येन्द्रएव, द्वादशस्वादित्येषु इन्द्रस्यापि परिगणितत्वात्। अतोऽहोरात्रयोः प्रकाशक इन्द्रएवेति इन्द्र-स्तुतेः प्रतीयमानत्वादिन्द्रोदेवतेत्येतदुपपन्नं भवति। अत्र निरुक्तम्—'अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपे-क्षितव्यमादित्यतोऽस्य दीप्तिर्भवतीति; 'सुषुम्णः सूर्यरश्मि-श्चन्द्रमा गन्धर्वः'—इत्यपि निगमो भवति; सोऽपि गौरुच्यते—

---

* छ० आ० १, २, १, ३ (१भा० ३४३ पृ०) = ऋ० वे० १, ८, ७, ५ ।

"अत्राहगोरमन्वत"—इति (२, ६, )। "अत्रा ह गोः सममं-सतादित्यरश्मयः स्वनामापीच्यमपगतमपचितमपिहितमन्तर्हितं वा (४, २५)"—इति॥ अमन्वत—'मनु अवबोधने (त०, आ०)। अपीच्यम्—अपपूर्वाच्चिनाते र्निपातनाद् यत्, अतएवाभिमतरूपसिद्धिः; यद्वा अपिपूर्वादञ्चतेः "ऋत्विग् (३, २, ५९)"—इत्यादिना क्विन्, "अनिदिताम् (६, ४, २४)"—इति न-लोपः, अपिगते निर्गते भवमपीच्यम् "भवे छन्दसि (४, ४, ११०)"—इति यत्, "अचः (६, ४, १३८)"—इत्यकारलोपे "चौ (६, ३, १३८)"—इति दीर्घत्वम्; 'अपीच्यो प्रकाशः'—इति भट्टभास्करमिश्रः। इत्था—इदम्-शब्दाच्च "था हेतौ च छन्दसि (५, ३, २६)"—इति प्रकारवचने था-प्रत्ययः; यदि तत्रेदं-शब्दोनानुवर्त्तते तदानीम् "इदमस्थमुः (५, ३, २४)"—इति थमुः प्रत्यय; "अव्ययादाप्-सुपः (२, ४, ८२)"—इति सुब्लुकं बाधित्वा "सुपां सु-लुक् (७, १, ३९)"—इत्यादिना डादेशः। चन्द्रमसः—चन्द्रमाह्लादनं मिमीते निर्मिमीते—इति चन्द्रमाः "चन्द्रेमोडित् (उ०, ४, २२७)"—इत्यसि-प्रत्ययः; दासीभारादिषु पठितत्वात् पूर्व-पदप्रकृतिस्वरत्वम्; पूर्वपदञ्च "स्फायितञ्चि ( , , )"—इत्यादिना रक्-प्रत्ययान्तत्वादन्तोदात्तम्॥ ३॥ ८

अथ चतुर्थतृचे—प्रथमा ।

३ १ २ ३ १ २र ३ २ ३ १ २
इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः ।
३ २ ३ १ २
अभ्राद्वृष्टिरिवाजनि ॥ १ * ॥

हे "इन्द्राग्नी! "इयं" "पूर्व्यस्तुतिः" पूर्व्या स्तुतिः मुख्या स्तुतिः†, कस्य सम्बन्धिनी? "मन्मनः"‡ स्तोतुः अस्मात् वसिष्ठात् "वां" युवाभ्यां युवयोरर्थम् "अभ्रात्" मेघात् "वृष्टिरिव" वह्वी सती "अजनि" प्रादुर्भूता¶, तां शृणुतमित्युत्तरेण सम्बन्धः ॥ १ ॥

अथ द्वितीया ।

२ १ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः ।
२ १ २ ३ १ २
ईशाना पिप्यतं धियः ॥ २ § ॥

हे "इन्द्राग्नी!" "जरितुः" स्तोतुः "हवम्" आह्वानं युवां

---

* ऋ० वे० ५, ६, १७, १ ।

† 'पूर्व्यस्तुतिः—पूर्व्या प्रथमतरा स्तुतिः सर्वेषां स्तुत्यानां प्रथमतरे इन्द्राग्नी-स्तुत्यौ —इति वि० ।

‡ 'मन्मनः प्रकान्तस्य बलाः'—इति वि० ।

¶ 'यथा अभ्रात् सकाशात् दृष्टिरुत्पद्यते, तद्वदिन्द्राग्नीभ्यां सकाशात् बलमुत्पद्यते —इति वि० ।

§ ऋ० वे० ५, ६, १७, २ ।

शृणुतम्। श्रुत्वा च "गिरः" तदीयाः स्तुतीः "वनतं" सम्भजतम्। तथा "ईशाना" ईश्वरौ युवां "धियः" अनुष्ठितानि कर्माणि "पिप्यतं" तैस्तैः फलैः पूरयताम् ॥ २ ॥

अथ तृतीया।

१ २३१ २ ३१ ३ २१ २र
मापापत्वायनोनरेन्द्राग्नीमाभिशस्तये।
१ ३ २ २
मानोरीरधतन्निदे ॥ ३ * ॥ ९

हे "नरा" नेतारौ! इन्द्राग्नी! "नः" अस्मान् "पापत्वाय"† हीनभावाय "मा रीधतम्"‡ मा वशं नयतम्, तथा "अभिशस्तये" शत्रुभिः कृतायाभिशंसनाय मा रीरधतम्, तथा "निदे"¶ निन्दकाय मा रीरधतं मा वशीकुरुतम् ॥ ३ ॥ ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य तृतीयः खण्डः§ ॥ ३ ॥

---

* ऋ० वे० ५, ६, १७, ३।

† 'पापत्वाय—पापबुद्धये'—इति वि०।

‡ 'मा रीधतम्—रुधिंसायाम्; मा हिंसताम्'—इति वि०।

¶ 'निदे—नितरां दीयते यस्मिन् असौ निदे'—इति वि०।

§ 'उक्तं प्रातः-सवनम्'—इति वि०।

अथ चतुर्थखण्डे* प्रथमतृचे—

प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ १
पवस्व दक्षसाधनो देवेभ्यः पीतये† हरे।

३ १ २ ३ १ ३ १ २
मरुद्भ्यो वायवे मदः॥ १ ‡॥

हे "हरे" हरितवर्ण! पापहर्त्तर्वा सोम! "दक्षसाधनः" दक्षो बलं तस्य साधनो "मदः" मदकरश्च त्वं "पवस्व" क्षर। किमर्थम्? "देवेभ्यः" इन्द्रादिभ्यः "पीतये" पानाय, तथा "मरुद्भ्यः" "वायवे" च पीतये पवस्व॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ २
सन्देवैः शोभते वृषा कविर्योनावधि प्रियः।

१ २ ३ १ २
पवमानो अदाभ्यः॥ २ ¶॥

"अयं" सोमः "सं शोभते" "देवैः" सह। कीदृशः सोमः? "वृषा" वर्षकः, "कविः" क्रान्तदर्शी, "योनौ" स्थाने स्वीये "अधि" अधिष्ठितः§ "प्रियः" प्रियोभूतः सर्वेषां [यद्वा प्रीणयिता।]

---

* 'इदानीं माध्यन्दिनसवनमुच्यते'—इति वि०।

† "देवेभ्यष्पीतये"—इति क० पु० पाठः।

‡ ऋ० सा० ५, २, ४, ८ (२ भा० २४ पृ०) = ऋ० वे० ९, ८, १५, १।

¶ ऋ० वे० ९, ८, १५, २। "पवमानो अदाभ्यः"—इति स्थले "वृत्रहा देववीतमः" —इति ऋ०-पाठः।

§ 'योनौ अधि—सप्तम्येकवचनमिदं द्वितीयैकवचने द्रष्टव्यम्। योनिम् अधि' —इति वि०।

"पवमानः" क्षरन् "अदाभ्यः" केनाप्यहिंसितश्च भवति अतएव सोमः सं शोभते ॥ २ ॥

अथ तृतीया।

१२ ३२ ३२ २३ ३१ २
पवमानधियाहितो ३ऽभियोनिङ्कनिक्रदत्।
१२ ३१ २र
धर्मणावायुमारुहः ॥ ३ * ॥ १०

हे "पवमान" सोम! "धिया" कर्म्मणा अस्मद्व्यापारेण अङ्गुल्या वा † "हितः" धृतः सन् "कनिक्रदत्" शब्दं कुर्वन् "योनिं" स्थानं "द्रोणकलशं" च "अभि आरुहः" आभिमुख्येन आरोहणं कुरु प्रविशेत्यर्थः। तदेवाह—"धर्म्मणा" कर्म्मणा "वायु" वायुसम्बन्धिपात्रमित्यर्थः, तदारुहः प्रविश ॥

"आरुहः" "आविश"—इति पाठौ ॥ ३ ॥ १०

१ २१ २र१र
॥ निधनकामम् ॥ पवस्वदा२क्षसाधनाः। देवेभ्यः
र र २१र ० ३र २
पीतयेहराधि। मरुद्भ्योवा। पवा२३४यि। हाहोयि।
१र १ १ १
मदाः। होयि। २। मदः। होयि। २। मदः। होयि।

* ऋ० वे० ६, ८, १५, २।

† 'धिया बुद्ध्या'—इति वि०।

२र १र २र　१　　१ १ १ १　　　　　　　१　र र　　　र १
२। औहोऔहोवा२३४५हाउ ॥(१)　सन्दे वैःशो २भतेवृ

　र　१ र र　　　　　　　२१ र　　　　　०
षा। कविर्योनावधिप्रियाः।　पवमानाः।　अहा२३४।

२र　२　　　　१ र
हाहोयि। भियाः। होयि। होयि। भिय। होयि।

　　　　　　　　२र १र २र　　　१ १ १ १
२। भियः। होयि। २। औहोऔहोवा२३४५हाउ ॥(२)

१　र　　　　र　१　　　　२　१ र　　　　　　२ १
पवमाना २धियाहिताः।　अभियोनिकनिक्रदात्।　धर्म्म

र　　　　०　　　　　३र २　　　　१ र
णावा। युमा २ ३ ४। हाहोयि। रुहाः। होयि।

　　　　　　　　　२र १र २र　　　१ १ १ १
होयि। रुह। होयि। २। औहोऔहोवा २ ३ ४ ५

हाउ। वा(३) ॥ ८* ॥ [१]

　　　　　　　३ २　　　　　　　र　　　　५
॥ सत्रासाहीयम् ॥ पवा३४। स्वदनसाधनः। ओ

५　१रर　र　र　　　१　　　　　२　　　　२
६वा। देवेभ्यःपीतयेहा २रायि। मा २रु। ओ२३वा।

१ ६　२र　३र २　　　　　१　　　५　　५　　　　३ १
यवौ३वो। वाहा३४३यि। मा२३४दो६हायि ॥(१) सन्दे

　र र　र र　　　५　५　　　१ र र
३४। वैःशोभतेवृषा। ओ६वा। कविर्य्योनावधिप्रा २

* ज० गा० २प्र० २अ० ८ सा०।

याः । पा२वा । मा२३नाः । अदौ३ह्नो । वाहा३४३यि । भा२३४यो६हायि ॥(२) पवा३४ । मानधियाहितः । ओ६वा । अभियोनिङ्कनिक्रा२दात् । धा२र्मा । णा२३वा । युमौ३ह्नो । वाहा३४३यि । ह्व२३४होई हायि(३) ॥ ८ * ॥ [२]

॥ त्वाष्ट्रीसाम ॥ पवस्वदा । क्षसा२धाना२ः । दायिवेभ्यःपी । तयायिहा१रा२यि । मरुद्भ्यो२३वा । यवेमदा३१उवा२३ ॥(१) सन्देवैःशो । भता२यिवार्षा२ । काविर्योनौ । अधायिप्रा१स्या२ः । पवमा२३नाः । अदाभिया३१उवा२३ ॥(२) पवमाना । धिया२हायिता२ः । आभियोनिम् । कनायिक्रा१दा२त् । धर्म्मणा२ ३ वा । युमारुहा३१उवा२३ । वृधे१(३) ॥ १ † ॥ [३] १०

* ऊ० गा० १५प्र० २ख० ९सा० । † ऊ० गा० १६प्र० २ख० १सा० ।

अथ प्रगाथरूपे द्वितीयसूक्ते—

प्रथमा ।

२ ३ १ २ ३ २ ३ ३ १ २

तवाहꣳसोमरारणसख्यइन्दोदिवेदिवे ।

३ १ २ ३ १ २ ३ १र २र ३ ३उ ३ १ २

पुरूणिबभ्रोनिचरन्तिमामवपरिधीꣳरतिताꣳइहि ॥ १* ॥

हे “इन्दो” स्यन्दमान-सोम ! “तव” “सख्ये” सखि-कर्मणि “अहं” “दिवेदिवे” अन्वहं “रारण” रमे [ रणेर्लिटि उत्तमे णलि रूपम् ]। हे “बभ्रो” बभ्रुवर्ण-सोम “पुरूणि” बहूनि रक्षांसि “मां” तव सख्ये स्थितं “नि अव चरन्ति” नीचीनं चरन्ति बाधन्ते। ये मां बाधन्ते तान् “परिधीन्” “अति इहि” अतीत्य गच्छ जहीति यावत् ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २

तवाहन्नक्तमुतसोमतेदिवादुहानोबभ्रऊधनि ।

३ १ २र ३ २ ३ १ २ ३ १ २ ३ १ २

घृणातपन्तमतिसूर्य्यंपरःशकुनाइवपप्तिम ॥ २ † ॥ ११

हे “बभ्रो” बभ्रुवर्ण-सोम ! “उत” अपिच “नक्तम” “उत” अपिच “दिवा” अहोरात्रयोः “सख्याय” सख्यार्थं ‡ “तव”

---

* छ० आ० ६, १, ३, ६ (२भा० ९१५०) = ऋ० वे० ७, ५, १५, ४।

† ऋ० वे० ७, ५, १५, ५।

‡ सख्यायेति ऋग्वेदीयपाठमवलम्ब्यैवं व्याख्यातं वस्तुतः सामवेदीय-पाठस्तु “दुहानः”—इति।

"उधनि" समीपे * "अह" रमे—इति शेषः। "ते" वयं "घृणा" दीप्त्या "तपन्त" ज्वलन्त "परः" परस्थानस्थितं "सूर्य" तदात्मकं त्वाम् † "अति पप्तिम" तत्र स्थितं त्वां प्राप्तुमतिपतेम। कथमिव? शकुनाइव यथा सुपर्णादयः पक्षिणः सूर्यमति-गच्छन्ति तद्वत् ‡ [पत्लृगतौ, अस्माच्छान्दसो लिटि "तनि-पत्योश्छन्दसि (६, ४, ९९)"—इत्युपधालोपः॥

"दुहानः"-"सख्याय"—इति पाठौ॥ २॥ ११

॥ आष्टादंष्ट्रोत्तरम्॥ तवाहꣳसोमरारणऐयादौ। होइवा। सख्यइन्दोदिवे। दायिवे २३। ऐयार२३त्। औ२३होवा। पुरूणिबभ्रोनिचरन्तिमाम्। आवा२३। ऐया२३त्। औ२३होवा। परिधीꣳरतिताꣳन्। आयि हा२३यि। ऐया२३त्। औ२३होवा३४३॥(१) परिधीꣳ रतिनाꣳइहिऐयादौ। होइवा। परिधीꣳरतिताꣳन्।

---

* 'उधनि—दशापवित्रात् द्रोणकलशे'—इति वि०।

† 'परःसूर्यम्—सूर्यादपि परतः'—इति वि०।

‡ 'एतदुक्तं भवति—सखे वयं स्थिताः पुरूणि यजमानकुलानि त्वा मुपचरामः, एव मुपचरमाणाः शकुनाइव पप्तिम'—इति वि०।

आयिहा२३यि। ऐया२३त्। औ२३होवा। तवाहन्न
क्रमुतसोमते। दायिवा२३। ऐया२३त्। औ२३हो
वा। दुहानोबभ्रऊ। धानी२३। ऐया२३त्। औ२३
होवा३४३॥(२) दुहानोबभ्रऊधनिऐयादौ। हो३वा।
दुहानोबभ्रऊ। धानी२३। ऐया२३त्। औ२३होवा।
घृणातपन्तमतिहूरियम्। पारा२३ः। ऐया२३त्। औ
२३होवा। शकुनाइवप। शायिमा२३। ऐया२३त्।
औ२३होवा३४३। ओ२३४५ई। डा॥९*॥[१]

॥आभीशवोत्तरम्॥ तवाहᳪसोमरारणए। ए। स
ख्यइन्दो३दायिवे१दिवायि। पू२३४ह। हा३हा। णि
बभ्रोनिचरन्तायिमा१मवा। पा२३४री। हा३हायि।
धायिᳪरतितो२२४वा। आ५यिहो६हायि॥(१) परिधीᳪ

* ऊ० गा० ३प्र० २ख० ९सा०।

२ २ १ २ २
रतिताꣳइहिए। ए। परिधीꣳरा३तायिता१ꣳइहायि।

३ ५ २ २ १ २ २ २
ता२३४वा। हा३हायि। अहन्नक्तमुतसोमाते१दिवा।

३ ५ २ २ १ २ १ ५ ४
दू२३४हा। हा३हायि। नोबभ्रओ२३४वा। धा५नो६

५ २ २ १ २ २ २ १ २
हायि॥(२) दुहानोबभ्रऊधनिए। ए। दुहानोबा३भ्राऊ१

२ ३ ५ २ २ १ २ ०
धनायि। घा२३४र्णा। हा३हा। तपन्तमतिसूराय

२ ३ ५ २ २ १ २१ ५
भ्यारः। शा२३४क। हा३हायि। नायिवपो२३४वा।

४ ५
म्रा५यिमो६हायि(३)॥ १० *॥ [२]

१ २ २ ३२ ४ २ ४
॥ स्वःपृष्ठम्† ॥ नवा२हꣳसो३४। औहो५मरारणा।

१ २ २ ३२ ४ २ ४ १ १२
सख्या२इन्दो३४। औहो५दिवेदिवायि। पुरूरणिबा३

३२ ४ २ ४ १ २ ५२ २ २
४औहो५भोनिचरा। ओ। तार२यिमा२३४औहोवा। आ

५ ३ ५ ३ ५ ३ ३२ १
२३४वा। ऊ२३४पा। ऊ२३४पा। परिधीꣳरा २३।

१ ३ ५२ २ ३ ५ १ ३२
तार२यिताꣳ२३४औहोवा। ई२३४ही॥(१) परार२यिधीꣳ

---

* ऊ० गा० २प्र० २ख० १०सा०। † “पृष्ठम्”—इति वि०।

२ ३र ४ र ४ १ ३र २
रा३४। औ३होऽतिताꣳइहाथि। परा२यिधीꣳरा३४।
३र ४ र ४ १ ३ २ ३र ४
औ३होऽतिताꣳइहाथि। तवा२ह्वन्ना३४। औ३होऽक्रमु
४ १ २ ५र र ३ ५ २
तसो। ओ। मा२ता२३४औहोवा। दौ२३४वा। ऊ
५ ३ ५ ३ र २र १ १ ३ ५र
२३४पा। ऊ२३४पा। दुह्वानोवा२३। आ२ऊ२३४औ
र ३ ५ १ ३र २ ३र ४
होवा। धा२३४नी ॥(२) दुह्वा२नोवा३४। औ३होऽभ्र
र ४ १ ३र २ ३र ४ र ४ १
ऊधनायि। दुह्वा२नोवा३४। औ३होऽभ्रऊधनायि। घृ
३ २ ३र ४ ४ १ ३
णा२तपा३४। औ३होऽन्तमतिसू। ओ। रा२या२३४
५र र ३ ५ ३ ५ ३ ५ २
औ३होवा। पा२३४राः। ऊ२३४पा। ऊ२३४पा। प्राकु
२र १ १ २ ५र र ३
नाआ२ ३ यि। वा २ पा २ ३ ४ औ३होवा। प्री २ ३ ४
५
मा(३) ॥ ११ * ॥ [३]

५ ४ २ ४ ५र ५ ५
॥ अभीवर्त्तम् ॥ परा३यिधा३यिꣳराऽतिताꣳइहोवा।
१ २र १ २ १ र २
परिधीꣳर। तिताꣳआ१यिहा२यि। तावाह्वन्ना३१२३४।

---

* ऊ० गा० ९प्र० १ख० ११सा०।

३ ४ ५र २ १ २ १ २ ३ १
क्तमुतसो। मतायिदा१यिवा२। दुहानो१वा२। भ्रज

१ ३ १ १ १ १
३। धा२३४५। ना२३४यि(२)॥ १८*॥ [४]

३ ४र ३ ४र ५ र र २ १
॥ उत्सेधम्॥ तवाह्य सोमरार। सख्ये। इन्द्रा

२र ४र ५ २ १र २
३४औहोवा। दिवेदिवा३यि। हा३१उवार३। ऊ३

५ ३ २ ४ ५र ४ ५ १ २ १
४पा। पुरु ३ णिवा। औहोवाहायि। भ्रानिचरा।

१ र १ २ २ ५ ३ २ ४र
तिमामाव। हा३१उवा२३। ऊ३४पा। परा३यिधी

५र ४ ५ ३ २ ४
र। औहोवाहायि। तिता३आपूयिहा६५६यि॥(२)

४ ३र ४ ३र ४ ५ ३र २ ३र ४र ५
परिधी रतिता इहि। परि। धी रा ३ ४ औहोवा।

१ १र २ ५ ३ २
तिता इहा३यि। हा३१उवा२३। ऊ३४पा। तवा३

४ ५र ४ ५ १ २ १ २ र १ २र
ह्ना। औहोवाहायि। क्तामुतसो। मतेदायिवा।

२ ५ ३ २ ४र ५र ४ ५
हा३१उवा२३। ऊ३४पा। दुहा३नोव। औहोवाहायि।

३ २ ४ ४ र ३र४ ३र ४ ५ र
भ्रऊ३धा५ना६५६यि॥(२) दुहानावभ्रऊधनि। दुहा।

* ऊ० गा० ८प्र० १ख० १८गा०।

१र २ १र ४र ५ २ १र २
नोवा२४औहोवा। अऊधना॒ऽ२यि। हा३१उवा२३। ऊ
५ ३ २ ४ ५र ४ ५ १ २ १
३४पा। घृणा२तपा। औहोवाहायि। तामतिसू।
२ १ २ १ ५ ३ १ ४र
रियंपार। हा३१उवा२३। ऊ२४पा। शकू३नाम।
५र ४ ५ ३ २ ४ ३ १ १ १ १
औहोवाहायि। वपा३ग्नाप५यिमा६५६। ऊ२३४५(२)॥

॥ १० * ॥ [५]

५ २ ४ ५ ४र ५ १
॥ जनित्राद्यम्॥ परिधा३यि॒रातिता॒इहायि। ऊ
१ १ र २ १र
वेहो२यि। परिधी॒रतिना॒आ१यिहा२यि। तवाहन्न
१ १ २ ५ १ २ १ र
क्रमुतसो२। मतायिदा२३४यिवा। दुहा३होयि। नो
२ १ १ १र २ ५र र २ १ १ १
वा३हो। अऊ। धा२ना२३४औहोवा। जनित्रा२३
१ १
२३४५म्(२)॥ १४ † ॥ [६]

१ १र १ २र १र २ १ २
॥ समन्तम्॥ तवाह॒सोमरा२रणा। सख्यइन्दोऽदि
१र १ र २ १ २ १
वेदिवायि। पुरूणा२३यिवा। श्रोनिचव। तिमामा

* ऊ० गा० ९प्र० १ख० १८सा०। † ऊ० गा० ९प्र० २ख० १४सा०।

वा। औहोइ४वाहायि। प। रायिधा२३यिꣳरा३।
होवा३हायि। तिताꣳआ२३यिहा३४३यि॥(१) परिधीꣳ
रतिताꣳइहायि। परिधीꣳराऽतिताꣳइहायि। तवा
हा२३न्ना। क्तामुतसो। मतायिदायिवा। औहो३४
वाहायि। दु। हानो२३वा३। होवा३हा। भ्रजधा
२३ना३४३यि॥(२) दुहानोबभ्रजधनायि। दुहानोबाऽ
भ्रजधनायि। घृणाना२३पा। तामतिष्ठ। रियाम्या
रा। औहो३४वाहायि। म। कूना२३आ३यि। हो
वा३हायि। वपष्पा२३यिमा३४३। ओ२३४५ई। ओ२३
४५ई। डा(३)॥ १ *॥ [७]

॥ यौधाजयम्॥ तवा३१। हा३ꣳसो। म। रा
रा२३४णा। साख्या३यि। इन्दो२। दिवा३४५यि।

* ऊ० गा० १३प्र० २ख० १सा०।

दी२३४वे। पुरुहणिवा। ओ। निचरार। तिमा३४५म्।
आ२३४वा। परा२यि। धायि९रार। तिता९३४५।
ई२३४ही॥(१) परा३१यि। धा३यि९र। ति। ता९
आ२३४यिह्वायि। पारी३। धी९रार। तिता९३४५।
ई२३४ही। तवाह्वना। क्रम्। उनसोर। मता३४
५यि। दी२३४वा। दुहा२। नोबार। अजू३४५।
धा२३४नी॥(२) दुवा३१। नो३ब। ओ। ऊधा२३४
नायि। दूहा३। नोबार। अजू३४५। धा२३४नी।
घृणातपा। तम्। अतिसूर। रिया३४५म्। पा२३
४राः। शक्र२। नाआ२यि। वपा३४५। श्री२३४
मा(३)॥२ *॥ [८]

॥ पौरुहन्मनम्॥ तवाहा३९सोमरारणा। साख्य

* ऊ० गा० १६प्र० २ख० २सा०।

इन्दो। दिवायिदा१यिवा२यि। दायिवा२यिपूरुणि

व। श्रो। निचरा३। निचरा३। तायिमामा२३४वा।

पारिधीꣳरा। तायितांꣳआ२३४यिहायि। तिताꣳ५इ

हायि॥(१) परिधा३यिꣳरातिताꣳइहायि। पारिधीꣳ

रातिताꣳआ१यिहा२यि। आयिहा२यि। तावाहन्न।

क्ताम्। उतसो३। उतसो३। मांतायिदा२३४यिवा।

दूहानोवा। आऊधा२३४नायि। अऊ ५ धनायि॥(२)

दुहानो३वअऊधनायि। दूहानोव। अऊ१।१ना२यि।

धाना२यि। घार्णातप। ताम। अतिसू३। अतिसू

३। रायस्पा२३४राः। शाकुनाआयि। वापस्ता२३४यि

मा। वपा५स्तिमा। होꣳइ। डा(३)॥ १५*॥ [९]

॥ दैगतम्॥ तवाहा३ꣳसोमरारणा। साख्यइन्दो।

० ऊ० गा० १६प्र० १ख० १५सा०।

दिवायिदा१यिवा२यि। पुरू३। हो३हो३वा। णिव
भोनिचरन्तायिमा१मवा२। परा२३यि। धा२यिॐरा२
३४औहोवा। ए३। तिता२ॐइहा२३४५यि॥(१) परि
धा३यिॐरा५तिताॐइहायि। पारिधीॐर। तिताॐआ
१यिहा२यि। तवा३। हौ३हो३वा। अहनन्तमुतसो
मातेश्दिवा२। इहा२३। नो२वा२३४औहोवा। ए३।
भज२धना२३४५यि॥(२) इहानो३वभजधनायि। इ
हानोव। भजधा१ना२यि। घृणा३। हौ३हो३वा।
तपन्तमतिसूरायम्पारा२ः। भकू२३। ना२भा२३४औ
होवा। ए३। वपा२ग्निमा२३४५(३)॥ १६ *॥ [१०]

॥गौङ्गवम्॥ तवाहा३ॐसोमरारणा। साख्या२
यि। इन्दोदिवे३। दायिवायि। पुरूणिबभोनिचा२३

* ऊ० गा० १६प्र० २ख० १६सा०।

रा२। तिमा३मावा। पुरुणिवभ्रोनिचर। तिमा३मा
वा। पारिध्रोन्। आ। औ३हो। तितो२३४वा।
आ५यिहोई हायि ॥(१) परिधा३यिॐरातिताॐद्‌हायि।
पारी२। धीॐरतिता३ॐ। आयिहायि। तवाहन्न
क्तमुता२३सो२। मता३यिदायिवा। तवाहन्नक्तमुतसो।
मता३यिदायिवा। दूहानः। वा। औ३हो। अभ्रो
२३४वा। धा५नोई हायि ॥(२) दुहानो३वभ्रजधनायि।
दूहा२। नोवभ्रऊ३। धानायि। घृणातपन्तमता२३
यिसू२। रिया३पाराः। घृणातपन्तिसू। रिया३पाराः।
शाकुनाः। आ। औ३हो। वपो२३४वा। प्रा५यिमो
ई हायि(३) ॥ १७ ॥ [११]

* ऊ० गा० १९प्र० १अ० १७सा०।

२ ४र ३  ४र ५ र  २
॥ द्विनिधनमायास्यम् ॥ तवाहꣳसोमरारण। ए३।
२ ४  १ २  १  ३ २
औ३होऽ५वाऽऽ। साख्या३यि। इन्दो२। दिवा२३४५यि।
२ १ १ १ ११  १ र २ १  २ १
दा३यिवा२३४५यि। पूरूणिबा। भ्रोनिचरा। तायि
२ १ २ ४  ५  २ १ २ २
मा३आ। औ३हो३। आ२३४वा। पराऔ ३ हो।
१ ३ २  २ १ १ १ १ १
धायिꣳरा२। तिताꣳ३४५। आ३यिहा२३४५यि ॥(१)
४ ३र ४ ३र ४ ५  २  २ ४  १ २
परिधीꣳरतिताꣳइहि। ए३। औ३होऽ५वाऽऽ। पारी
१र  ३ २  २ १ १ १ १ १
३। धीꣳरा२। तिताꣳ३४५। आ३यिहा२३४५यि।
१ र २ १  २ १  २ १  १ ४
तावाहन्ना। त्वामुतसो। माता३आ। औ३हो३।
५  २१ २ २  १  ३ २
हो२३४वा। दुहाऔ३हो। नोबा २। भ्रऊ ३ ४ ५।
२ १ १ १ ११  ४ र ३र ४ ३र ४ ५  २ २
धा३ना२३४५यि ॥(२) दुहानोबभ्रऊधनि। ए३। औ३
४  १ २  १र  ३ २  २
होऽ५वाऽऽ। दूहा३। नोबा२। भ्रऊ२३४५यि। धा
र २ १  २ १  २ १  २ ४
णीतपा। तामतिसू। राया३आ। औ३हो३। पा

२३४राः । प्रकृ्औ३ह्वो । नाऔ२यि । वपा२३४५ । प्रा
३यिमा२३४५(३) ॥ १८ * ॥ [१२]

॥ पृश्नि ॥ तवाहा२३ऽसोमरारणहाउ । सख्यइन्दो
दिवेदिवे । पुरूणा१यिबा२३ । हावा३ह्वा । ओनिचर । नि
मामा१वा२३ । होवा३हायि । परायिधा१यिऽरा२३ ।
होवा३हायि । तायिनाऽइहि । इडा२३भा३४३ । ओ
२३४५ई । डा(१) ॥ १ † ॥ [१३]

॥ अर्कपुष्पाद्यम् ॥ तवाहऽसोमरारण । ऊवे२३ ।
सख्यइन्दोदिवेदिवे । ऊवे२३ । पुरूणिबभ्रोनिचरन्ति
मामव । ऊवे२३ । परिधीऽरतिताऽइहि । ऊवे२३ ॥(१)
परिधीऽरतिताऽइहि । ऊवे२३ । परिधीऽरतिताऽइ
हि । ऊवे२३ । तवाहन्नक्तमुतसोमतेदिवा । ऊवे२३ ।

* ऊ० गा० १६प्र० १ख० १८सा० । † ऊ० गा० १९प्र० २ख० १सा० ।

२ ३ १२ २ १२२ १ १ ३ १२ २ १२२
दुहानोबभ्रजधनि। ऊवे२३॥(२) दुहानोबभ्रजधनि।
१ २ ३ १२ २१२२ १ २१२ २ १ १
ऊवे२३। दुहानोबभ्रजधनि। ऊवे२३। घृणानपन्तमति
१२ २ १ २ १२ २ १
सूर्य्यस्पर:। ऊवे२३। मकुनाइवपप्रिम। ऊवे २३।
१ १ २ १ २ ५२ ३ २ १२
ऊवे२३। होवा२हा३। हा३४। औहोवा। अर्का
२ ३ १२ ३ १११११
देवाना२म्। परमेवियो२मा२३४५न्(३)॥ १४ *॥[१४]

१ २२ १ २२ १२
॥ बार्हदुक्थम्॥ तवाह९सोम। रा२रण। सख्य
२ २ १२ २ १ २ १ ७
इन्दोदिवेदा२३यिवायि। पुरू१णायिवा२। औनिचरा
१२ २ १२
२। तिमामवा। परिधा२३यि९रा। तिता९आ२३यि
२ २ १२ २ १
हा३४३यि॥(१) परिधी९रनि। ता२९इहायि। परि
२ १ १२ २ १ २ १ ७
धी९रतिता९आ२३यिहायि। तावा१हाना२। क्तामु
१२ २ २ १२ २
तासो२। मतेदिवा। दुहानो२३वा। भ्रजधा२३नो
२ ३ १२ २ ३ १ २ ३
३४३यि॥(२) दुहानोबभ्रो। ऊ२धनायि। दुहानोब

* क० गा० २०प्र० १ख० १४सा०।

भृऊधा२३नायि। घार्णा१ तापा२। तामतायिसू२।
रियम्परा:। भकुना२३आयि। वपप्ना२३यिमा२३४३। औ
२३४५ई। डा(३)॥१५*॥[१५]

॥माण्डवम्॥ तवाहꣳसोमरारारा। सख्यइन्दो
दिवेदिवे। पुरूणा१यिबा२। भ्रोनिचर। तिमामा१वा
२। परिधा२३यिꣳरा। तितान्। आ२यिहा२३४औ
होवा॥(१) परिधीꣳरतिताꣳआयिहायि। परिधीꣳरति
ताꣳइहि। तवाहा१ना२। क्वामुतसो। मतायिदा
१यिवा२। दुहानो२३वा। भृऊ। धा२ना२३४औहो
वा॥(२) दुहानोबभृऊधानायि। दुहानोबभृऊधनि।
घृणाता१पा२। तामतिसू। रियाम्या१रा२:। भकुना

* ऊ० गा० २प्र० १ख० १५ सा०।

२　　१　　३　५ र र　　२ र १ २
२३आयि । वप । प्नारयिमा२३४औहोवा । विदावसू

१ १ १ १
२३४५ (३) ॥ १६ * ॥ [१६] ११

अथ तृतीय-तृचे—

प्रथमा ।

३　१ २　३ २उ ३ १२ १२
पुनानो अक्रमीदभिविश्वा मृधो विचर्षणिः ।

३ २ ३ १२ ३ १ २
शुम्भन्ति विप्रं धीतिभिः ॥ १ † ॥

"पुनानः" पूयमानः "विचर्षणिः" विद्रष्टा सोमः "विश्वा" सर्वान् "मृधः" हिंसकान् शत्रून् "अभि अक्रमीत्" अतिक्रान्तवान्, तं "विप्रं" मेधाविनं "धीतिभिः" कर्मभिरभिषवादिभिः स्तुतिभिर्वा "शुम्भन्ति" दीपयन्ति अलङ्कुर्वन्ति ॥ १ ॥

अथ द्वितीया ।

१　२र ३१ २३२३२ ३ १२ ३२
आयोनिमरुणो रुहद्गमदिन्द्रो वृषा सुतम् ।

३१ २र
ध्रुवे सदसि सीदतु ॥ २ ‡ ॥

अयम् "अरुणः" अरुणवर्णः सोमः "योनिं" स्थानं द्रोणकलशम् "आरुहत्" आरोहति, ततो "वृषा" कामानां वर्षकः

---

* ऊ० गा० २०प्र० १अ० १६ सा० ।

† क० आ० ६, १, १, २ (२ भा० ३४ पृ०) = ऋ० वे० ६, ८, २०, १ ।

‡ ऋ० वे० ६, ८, २०, २ ।

"इन्द्रः" "सुतम्" अभिषुतं सोमं "गमद्" गच्छति, गत्वा "ध्रुवे सदसि" स्थिरे स्थाने द्युलोकरूपे "सीदति"* निवसति ॥

"इन्द्रोवृषासुतम्"-"इन्द्रं वृषासुतः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
नूनोरयिम्महामिन्दोऽस्मभ्यꣳसोमविश्वतः ।

१ २ ३ १ २
आपवस्वसहस्रिणम् ॥ ३ † ॥ १२

हे "सोम !" अभिषुतस्त्वं हे "इन्दो !" "नः" अस्मभ्यम् "नु" क्षिप्रं "महां" महान्तं "सहस्रिणम्"‡ असङ्ख्यातं "रयिं" धनं "विश्वतः" "आ पवस्व" सर्वतः परिस्रव ॥ ३ ॥ १२

३ २ र र
॥ सत्रासाहीयम् ॥ पुना ३ ४ । नोअक्रमीदभि ।

५ ५ १ र र १ १
ओ६वा । विश्वाम्मृधोविचर्षा२णाविः । शू२म्भा । ता

२ १ ८ २र ३र २ १ ५
२३यिवो । प्रन्धौ२हो । वाहा३४३यि । ता२३४यिमो६

५ ३र २ र ५ ५ १
हायि ॥(१) आयो३४ । निमरुणोरुहत् । ओ६वा । गम

र र १ १ २ १ ८
दिन्द्रोवृषासू२ताम् । ध्रू२वे । सा२३दा । सिसौ ३

* "सीदति"—इति ऋग्वेदीय पाठः, मूलपाठस्तु "सीदतु"—इति ।

† ऋ० वे० ६, ८, ३०, २ ।

‡ 'सहस्रिणं -सहस्रसङ्ख्यिकम्'—इति वि० ।

२र १र २ १ ५ १र २
हो। वाहा३४३यि। दा२३४तो६हायि॥(२) नूनो३४।

र ५ ५ १ र
३४। रयिम्महामिन्द। ओ६वा। अस्मभ्यꣳसोमविश्वा

१ १ २ १ ऽ २र १र १
२ताः। आ२पा। वा२३खा। सहौ३हो। वाहा३

१ ५ ५
४३यि। खा२३४यिणो६हायि(३)॥ १२ *॥ [१]

१ ०र २र ३ ५ १
॥ यामम्॥ पुनानोआ२। क्रमीदा२३४भी। वि

र २र२ ५ १
श्वाम्रधोर। विचर्षा२३४णायिः। शुम्भतिवा२३यि। प्र

२ ४ १र ० २ १ २
न्धा३यिता पूयिभा६५६यिः॥(१) आयोनिमा२। रुणोरु

५ १ २र २ ५ १र
२३४हात्। गमदिन्द्रो२। वृषासू२३४ताम्। ध्रुवेस

२ ४ १र ०
दा२३। सिसा३यिदा पूता६५६उ॥(२) नूनोरया३यि

२ २ २ ५ १ २ २ २
म्। महामा२३४यिन्दो। अस्मभ्यꣳसोर। मविश्वा२३

५ १र २ ४
४ताः। आपवखा २ ३। सहा ३ खा ५ यि णा ६ ५

६ म्(३)॥ ११॥ [२]

* ऊ० गा० २प्र० २ख० ११सा०। † ऊ० गा० २२प्र० २ख० ११सा०।

४ र ३र ४ ३र ४ ५ ३र २ ४
॥ वामोत्तरम् ॥ पुनानोअक्रमीदभि। ओहा३ओ
५ ३ ४र र ३ ४ ५ ३र २ ४ ५ २ १
हा। विश्वामृधोविचर्षणिः। ओहा३ओहा। शुम्भ
१ ३ २ ४ ३र ४र
ता२३यिवि। प्रन्धा३यितापृयिभा६५६यिः ॥(१) आयो
२ ४ ३र ४ ५ ३र २ ४ ५ २ ४ ३ ४र ३र ४ ५
निमरुणोरुहत्। ओहा३ओहा। गमदिन्द्रोवृषासुतम्।
३र २ ४ ५ २ १र २ ३ २ ४
ओहा३ओहा। ध्रुवेसा२३दे। सिसा३यिदा५ता६५
३र ४र ३ ४ ३र ४ ५ ३र २ ४ ५ ३
६उ ॥(२) नूनोरयिंमहामिन्द। ओहा३ओहा। अस्म
र ३ ४ ५ ३र २ ४ ५ २र १ २
भ्यꣳसोमविश्वतः। ओहा३ओहा। आपावा २ ३ स।
३ २ ४
सहा३स्राप्यिणा६५६म् ३) ॥ १२ * ॥ [३]

२र र १ १ ३
॥ गौराङ्गिरसस्य साम ॥ आहायिह्र३वा२३यि। ऊव
२ र र ४ २र ३ ५ १ र २ ३ ५
य। पुनानोआ३क्रा३मीदभि। विश्वामृधो३चर्षणिः।
२ ३ २ ४ २र र
शुम्भतिवि। प्रन्धा३यितापृयिभा६५६यिः ॥(१) आये।
४ २र ३ ५ २ ४ २र ३ ५ २ र
निमा३रु३णोरुहत्। गमदिन्द्रो३वा३षासुतम्। ध्रुवे

* ऊ० गा० ३प्र० २अ० १२सा०।

३ २ ४ २र र ५
सद । स्विसाइयिद्दापूताद्३ई३ ॥(२) नूनोरयाश्यिमा२
२र ३ ५र २ ४ २३५ २र र
ह्वामिन्दो । अस्मभ्यॱसोश्माश्विश्वतः । ओ॒होयि । हू
१ २३२ र ३२ ४
इवा२इयि । ऊवए । आपवस्व । सह्वा३स्वा५यिणा ई ५
ई म्(३) ॥ १२ * ॥ [४] १२

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य
चतुर्थं खण्डः† ॥ ४ ॥

---

अथ पञ्चम-खण्डे‡ प्रथमतृचे—

प्रथमा ।

२ ३ १ २ ३ १ ३ १ २ ३ १ २ ३ १ २
पिबा सोममिन्द्र मन्दतु त्वा यन्ते सुषाव हर्यश्वाद्रिः ।
२ ३ ३ २ ३ १ २ ३ १ ३
सोतुर्बाहुभ्याॱसुयतो नार्वा ॥ १ ¶ ॥

हे "इन्द्र !" "सोमं" "पिब", स सोमः "त्वा" त्वाम् "मन्दतु" मादयतु, हे "हर्यश्व" हरिसञ्ज्ञकाश्ववन् ! इन्द्र !

---

* ऊ० गा० २३प्र० २अ० १२सा० ।

† 'उक्तो माध्यन्दिनः पवमानः'—इति वि० ।

‡ 'इदानीं पृष्ठान्युच्यन्ते विराजं पृष्ठं भवति । अत्राग्निमन्थनम् ॥'—इतिवि० ।

¶ ऋ० आ० ५, १, १, ८ (१भा० ८:४ पृ० ) = ऋ० वे० ५, ४, ५, १ ।

"ते" त्वदर्थं "सोतुः" अभिषवकर्त्तुः "बाहुभ्याम्" "अर्वा" रश्मिभ्यामश्वइव "सुयतः" सुष्ठु परिगृहीतः "अद्रिः" ग्रावा "यं" सोमं "सुषाव" अभिषवं करोषि, स मन्दत्विति पूर्वेण सम्बन्धः॥ १॥

अथ द्वितीया।

२ ३ २ ३ २ ३ २ ३ १ ३ १ २ ३ १ २ ३ १ २

यस्तेमदोयुज्यश्चारुरस्तियेनवृत्राणिहर्यश्वहꣳसि।

१२ २२

सत्वामिन्द्रप्रभूवसोममत्तु॥ २ *॥

हे "हर्यश्व!" "इन्द्र!" "ते" तव "युज्यः" योग्यः "चारुः" समीचीनः "मदः" मदकरः "यः" सोमः "अस्ति" विद्यते "येन" च पीतेन सोमेन "वृत्राणि" आवरकादीनि राक्षसादीनि "हंसि", हे "प्रभूवसो" प्रभूतधन इन्द्र! "त्वा" त्वां "सः" सोमः "मदतु" मादयतु॥ २॥

अथ तृतीया।

२ ३ १ २ ३ १ ३ २उ ३ १ २ ३ १ २ ३

बोधासुमेमघवन्वाचमेमांयान्तेवसिष्ठोअर्चतिप्रशस्तिम्।

३ १२ २२ ३ १ २

इमाब्रह्मसधमादेजुषस्व॥ ३ †॥ १३

हे "मघवन्" इन्द्र! "ते" तव "प्रशस्तिं" स्तुतिरूपां "यां" वाचं "वसिष्ठः" नामर्षिः "अर्चति" वहति, "इमां" वसिष्ठस्य

* ऋ० वे० ५, ३, ५, १। † ऋ० वे० ५, ३, ५, २।

सम्बन्धिनीं वाचं "सु आ बोध" सुष्ठु अभिबुध्यस्व किञ्च "इमा" इमानि "ब्रह्म" ब्रह्माणि हवीरूपाख्यानानि * "सधमादे" यज्ञे "जुषस्व" सेवस्व ॥ २ ॥ १२

१ २ १ २ १
॥ दैर्घतमसम् ॥ हाउपिबा। सोममिन्द्र। मा।
२ १ र र २ २
दतुत्वा। यन्तेसुषावहर्य्या। श्वा२द्री३ः। श्वाद्री३ः।
र १ र २ १ २ १ ३
सोतुर्बाहुभ्याम्। सुयता३ः। सुयताः। नार्वा२ ३
५र र १ २ १ र २ १
४औहोवा ॥(१) हाउयास्ताय्यि। मादोयुजियः। चा।
२ १ २ र १ र २
रुस्ता३यि। रुस्ताय्यि। येनवृत्राणिहर्य्यश्वा। हा१
१ १र र २
ऽसा२यि। हाऽसा२यि। सत्वामिन्द्रा। प्रभूवसा३
१र २ १ ३ ५र र १
उ। भूवसा३उ। ममा२त्तू२३४औहोवा ॥(२) हाउबो
२ १ र २ १ र २ १ र २
धा। सूमेमघवन्। वा। चमेमा३म्। चमेमाम्।
र १र र २ २
यान्तेवसिष्ठअर्चतिप्रा। शा१स्ता२यिम। प्रास्ता

* 'अथवा ब्रह्माणि चैविध्यलक्षणानि'—इति वि०।

२यिम। इमाब्रह्मा। सधमादा३यि। धमादा३यिः।
जुवार्श्वा२३४औहोवा(३) ॥ १ * ॥ [१]

॥ मरायम् ॥ हाउहाउहाउ। पायिबा। सोमाम्।
इन्द्र। मन्दतुत्वा। त्वा। त्वा। यान्तायि। सुषा।
वहर्य्यश्वाद्रिः। द्रिः। द्रिः। सोढः। बाहू। भ्या२
सुयतोनार्वा। र्वा। र्वा॥(१) यान्तायि। मदो। यु
जियश्वारुरस्ति। स्ति। स्ति। यायिना। वृत्रा। णि
हर्य्यश्वहऽसि। सि। सि। सात्वाम्। इन्द्रा। भूप्र
बसोममत्तु। तु तु॥(२) बोधा। सुमायि। मघवन्।
वाचमेमाम्। माम्। माम्। यान्तायि। वसायि।
ष्ठोअर्चतिप्रशस्तिम्। स्तिम्। स्तिम्। अयिमा। ब्र
ह्मा। सधमा। देजुषस्व। स्व। स्व(३) ॥ २ † ॥ [२] १३

* ऊ० गा० २२प्र० २ख० १सा०। † ऊ० गा० २२प्र० २ख० ३सा०।

अथ द्वितीयखण्डे *प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २
विश्वाःपृतनाअभिभूतरन्नरः

३१ २ ३ २ ३ १ २ ३ १ २
सजूस्ततक्षुरिन्द्रञ्जजनुश्चराजसे।

२ ३ १ २ ३ २ ३ १ २ ३ १
क्रत्वेवरेस्थेमन्यामुरीमुतोग्र

३र ३ १ २ ३ १ २
मोजिष्ठन्तरसन्तरस्विनम्॥ १ †॥

"विश्वाः" सर्वाः व्याप्ता वा "पृतनाः" [ पृङ् व्यायामे (तु०, आ० ); व्याप्रियन्ते इति पृतनाः ] सेनाः परस्परं सङ्गताः सत्यः "अभिभूतरम्" [शत्रूणामित्यर्थः] अभिभवितारम् "इन्द्रम्" "ततक्षुः" आयुधादिभिः तीक्ष्णीचक्रुः आयुधवन्तमश्ववन्तञ्च चक्रुरित्यर्थः [ यद्वा पृतना इति सङ्ग्राम नाम (निघ० २, १७, १८ ); व्याप्रियन्ते अत्रेति पृतनाः सङ्ग्रामाः, सर्वानेव सङ्ग्रामानभिभावुकमिन्द्रं "नरः" नेतारः स्तोतारः अन्योन्यं सङ्गताः स्तुतिभिः तीक्ष्णमकुर्वन्, सुतोऽतिबलवान् भवतीति। यद्वा यष्टारो हविः-प्रदानेन वीर्यवन्तं कुर्वन्तीति ] किञ्च स्तोतारः "राजसे" [ राजतेः तुमर्थे असे प्रत्ययः ( ३, ४, ९ ) ] आत्मनो विराजनार्थं प्रकाशनार्थं सूर्यात्मानमिन्द्रं "जजनुः" जनयामासुः स्तोत्र-शस्त्रैः स्व-यज्ञे प्रादुरभावयन्नि-

* 'वामदेव्यम्। मैत्रावरुणं साम। विश्लोकं ब्रह्मसाम'—इति वि०।

† ऋ० आ० ४, २, ४, १. ( १भा० ७५४पृ० ) = ऋ० वे० ६, २, २७, ५।

त्यर्थः। किञ्च "कत्वा" ईदृशमिन्द्रम् "आसुरीम्" शत्रूणामभि-मुख्येन मारयितारम् "उग्रम्" उद्गूर्णबलम् अतएव "ओजिष्ठम्" ओजस्वितमं "तरसं" प्रवृद्धं "तरस्विनं" सङ्ग्रामे शत्रुवधार्थं वेगवन्तं बलवन्तं वा एवम्भूतमिन्द्रं धनार्थं स्तुवन्ति॥

"कत्वेवरेस्थेमनि"-"कत्वावरिष्ठंवरे"—इति पाठौ॥ १॥

अथ द्वितीया।

३ १ २ ३ १ ३ ३ १ २र ३ २
नेमिन्नमन्तिचक्षसामेषंविप्राअभिस्वरे।

२ १ २ ३ २उ २ १ २ ३ २ ३ १ २र
सुदीतयोवोअद्रुहोपिकर्णेतरस्विनःसमृक्वभिः॥ २ *॥

"नेमिम्" [ अरान् यथा नेमिर्व्याप्नोति तद्वदिन्द्रं सर्वं व्याप्नुते तादृशं ] नमनशीलमिन्द्रं "चक्षसा" दर्शनमात्रेणैव† "विप्राः" मेधाविनः ‡ "अभिस्वरे" ¶ अभिस्वरेण गीताय स्तोत्राय इन्द्रविषयं स्तोत्रं कर्त्तुमित्यर्थः "नमन्ति" नमस्कुर्वन्ति। कीदृशम्? "मेषम्" इन्द्रो मेषोभूत्वा मेधातिथिं स्वर्गमनयत् तस्मात् मेधातिथेर्मेषभूतमिति यावत्। इदानीं यजमानः स्तोतॄनाह—अपिच हे स्तोतारः! "सुदीतयः" शोभनदीप्तयः

* ऋ० वे० ६, १, ३८, १।

† 'चक्षुषा दृष्टिपूर्वेण'—इति वि०।

‡ 'विप्राः ब्राह्मणाः'—इति वि०।

¶ 'अभिस्वरे—अभिस्वरो यज्ञस्तस्मिन् अभिस्वरे यज्ञे'—इति वि०।

“अद्रुहः” कस्याप्यद्रोग्धारः “वः” यूयं [ छान्दसो वसादेशः ] “तरस्विनः” कर्म्मसु स्तोत्रेषु वा त्वरायुक्ताः सन्तः इन्द्रस्य “कर्णे” श्रोत्र-समीपे “ऋक्वभिः” अर्च्चनयुक्तैर्मन्त्रैः * [ यद्वा ऋचो बह्व्यो येषु सन्ति तैः स्तोत्रादिभिः ] संस्तुतः इन्द्रो यथा युष्मदीयानि स्तोत्रादीनि शृणोति तथा सम्यगभिष्टुतेत्यर्थः ॥

“अभिस्वरे”-“अभिस्वरा”—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २

समु रेभासो अस्वरन्निन्द्रꣳ सोमस्य पीतये ।

२र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २

स्वःपतिर्यदी वृधे धृतव्रतो ह्योजसा समूतिभिः ॥ ३ † ॥ १४

“रेभासः” [ रेभृ शब्दे ( भ्वा० आ० ) शब्दयितारः स्तोतारः [ यद्वा, “रेभासः” कश्यप-पुत्रा रेभाः एतन्नामका ऋषयः ] “इन्द्रम् उ” इन्द्रमेव “समस्वरन्” ‡ सम्यगशब्दयन् समस्तुवन् । किमर्थम् ? “सोमस्य पीतये” सोमपानाय “यद्” यदा “स्वष्पतिः” स्वर्गस्य पालयिता धनस्य स्वामी वा इन्द्रः “वृधे” यजमानादिवर्द्धनाय भवति, तदा “धृतव्रतः” धृत-कर्म्मेन्द्रः

---

* ‘ऋक्वभिः—ऋग्यजुःसामभिः’—इति वि० ।

† ऋ० वे० ६, १, ३८, १ । “यदीम्”—इति च ऋ०-पाठ ।

‡ ‘अस्वरन्—सामभिर्गायन्ति’—इति वि० ।

"ओजसा" बलेन "ऊतिभिः" मरुद्भिः पालनैश्च वा सह सङ्गच्छते ; स्तुतिभिर्बलं मरुद्भिः पालनैश्चेन्द्रस्य भवतीत्यर्थः* ॥

"सम्"-"समीम्"—इति पाठौ, "स्वष्पतिः"-"स्वर्पतिम्"—इति च ॥ ३ ॥ १४

॥ त्रैशोकम् ॥ विश्वोहायि । पृतनाअभिभू । तरन्रा: । सजूस्ततक्षुरायिन्द्र ञ्जजनूः । चराजासो२३४हायि । क्रत्वौहोयि । वरौहोयि । स्थेमन्यार२म्‌२३४रीम् । उतोहायि । उग्रमो२३४जी । ष्ठन्तारा२३४साम् । हौयि । तरा३४ । स्विनम् । ओ२३४५वा ॥(१) नेमोहायि । नाम । तिचक्षसा । मेषंविप्राः । अभिस्वारो२३४हायि । सौहोयि । दौहोयि । तयो२वो२३४आ । द्रुहोहायि । अपायिका२३४र्णी । तारखी२३४नाः । हौयि । सम्२३४ । कभिः । ओ२३४५वा ॥(२) समोहायि ।

* अत्र 'सम् उ—इति पदपूरणः'—इति वि० ।

र　　२र ३ २ १　　　२ १र　　२ र १
रायिभा। सोऽअस्वरान्। इन्द्र९सोम। स्पीतायो२३

५　　१र　　र　　　३　५
४हायि। सोहायि। वौहोयि। पतार्यिर्या२३४दी।

२ १　　२ १　　५　　१　३　५　२
वृधोहायि। धृतव्रा२३४ताः। हियोजा२३४सा। हो

३ २　　　　५　५　२　३
यि। सम्३४। तिभिः। औ३वा। औयिदी २ ३ ४

५
ला (३) ॥ १२ * ॥ [१] १४

अथ प्रगाथरूपे तृतीयसूक्ते †—

प्रथमा ।

१　२र　३ २उ　२ १ २ ३ १ २
योराजाचर्षणीनांयातारथेभिरध्रिगुः ।

१ २　　३ १　२र　३ र ३ १ २ ३ २ ३ २
विश्वासान्तरुतापृतनानाञ्ज्येष्ठंयोवृत्रहागृणे ॥ १ ‡ ॥

"यः" इन्द्रः "चर्षणीनां मनुष्याणां "राजा" स्वामी, "रथेभिः" रथैः "याता" आगन्ता च, "अध्रिगुः" अधृतगमनो ऽन्यैः, "विश्वासां" "पृतनानां" सेनानां "तरुता" तारकः, "यः" च "वृत्रहा" वृत्रं हतवान्, "ज्येष्ठं" गुणैर्ज्यायांसं तं महाभागमिन्द्रं "गृणे" स्तौमि ॥ १ ॥

* ऊ० गा० २३प्र० २ख० १३सा० ।

† 'भरद्वाजस्य पृश्न्याच्छावाकं साम'—इति वि० ।

‡ छ० आ० ३, २, ४, १ (१ भा० ३६३ पृ०) = ऋ० वे० ६, ५, ८, १ ।

अथ द्वितीया।

३ २ १ २ ३ १ २ २ १ २ ३१ २ २ १ २
इन्द्रन्तꣳशुम्मपुरुहन्मन्नवसेयस्यद्विताविधर्त्तरि ।
१ २ ३ २ ३ २ २ ३ २ ३ २ ३ १ २र
हस्तेनवज्रःप्रतिधायिदर्शतोमहान्देवोनसूर्य्यः॥ २* ॥ १५

हे "पुरुहन्मन्" ऋषे ! † त्वं "तम्" "इन्द्रं" "शुम्भ" ‡ हविःप्रदानादिना अलङ्कुरु। किमर्थम् ? "अवसे" रक्षणाय ¶। एवमात्मा स्वात्मानं सम्बोध्य ब्रवीति—"यस्य" तव "विधर्त्तरि" विधारके इन्द्रे "द्विता" § द्वित्वम् अस्ति, —औग्र्यमनौग्र्यम् [तव शत्रून् हन्तुमुग्रत्वं, तदनुग्रहाय अनुग्रहश्चेति द्वैतमस्ति]; तचौग्र्यं दर्शयति—"दर्शतः" दर्शनीयः "महान्" प्रभूतः "वज्रः" "देवो न सूर्य्यः" द्योतमानः सूर्य इव स्थितः, "हस्तेन" करेण "प्रति धायि" प्रतिनिहतो भवति ‖ ॥

---

* ऋ० वे० ६, ५, ८, २ ।

† पुरुहन्मन्—पुरुहन्मा नामऋषिः अस्य तृचस्य सञ्ज्ञानं परोक्षवत् ब्रवीति—इति वि० ।

‡ 'शुम्भ—शुम्भ बलवन्तम्'—इति वि० ।

¶ 'स्तुहीति वाक्यशेषः'—इति वि० ।

§ 'त्रितः, द्वितः, एकतः—इति ऋषयः ; तेषां मध्ये द्वितः'—इति वि० ।

‖ 'हस्तेन वज्रः प्रतिधायि—हस्तेन स्तहोत्वा वज्रः प्रति धेट् पाने सर्वप्राणिनां वीर्यं रसं शोणितादि पिबते'—इति वि० ।

"हस्तेन"-"हस्ताय"—इति पाठौ, "महान्देव"-"महोदेवः"—इति च * ॥ २ ॥ १५

२र १ ४ र र ५ १र २र १ र
॥ पृश्नि ॥ योराजा२३चर्षणीनाः५हाउ। यातारथे
२ १ २ १ २ १ २ २ १ २र
भिरध्रिगुः। विश्वासा१न्ता२३। होवा३हायि। ऋता।
१ २ १ २ २ १र २
पृतानाः१ना२३म्। होवा३हायि। ज्येष्ठांयो१वा २३।
१ २ २ १ र र १ २र १ ४
होवा३हा। वाहागृणे। इडा२३ ॥(१) ज्येष्ठांयो२३वृ
र र ५ १र २ १र २ १र २र १ २
त्रहागृणेहाउ। ज्येष्ठंयोवृत्रहागृणे। इन्द्रान्ता१५भू२
१ २ २ १ २ १ २ १
३। होवा३हा। भपुरुह। न्मन्नावा१सा२३यि। हो
२ २ १ २ १ २ २ १
वा३हायि। यस्यादा१यिता२३। होवा३हायि। वायि
२ १ २ १ ४र ५
धर्त्तरि। इडा २ ३ ॥(२) यस्यद्वी२३ताविधर्त्तरिहाउ।
१ २ १र २ २ २ १ २ १ २ २
यस्यद्विताविधर्त्तरि। हस्तायिना१वा२३। होवा३हा।
१ २ र २ २ १ २ २ १
ञ्ञःप्रतिधा। यिदार्गा१ता२३ः। होवा३हायि। महा

* "महोदिव"—इति च ऋ० पाठः।

१ २ २ २ १ र २ १
न्दा१यिवार३ः। होवा३हायि। नासूरियः। इडा २ ३

१ १
भा३४३। ओ२३४५ई। डा(३) ॥ १४ * ॥ [१]

५र ४ २ ४ ५र ४ ५ १ र २
॥ अभीवर्त्तम् † ॥ योरा३जा३चर्षणीनोवा। यातार

र १ २ १ र २ २ ५ ५र
थे। भिराध्रा१यिगू२ः। वायिश्वासा३१२३४म्। तरुता।

२ १ २ २र १ २ ३ २ १
पृतानाश्ना२म्। ज्येष्ठांया१वा२। न्वहा३। गार३४

२ १ १ १ ५र ४ २ ४ ५र ४ ५
५। णा२३४५यि ॥(१) ज्येष्ठा३यो३वृत्रहागुणोवा।

१ २र १ २ १ २
ज्यायिष्ठयोवृ। त्रहा१गा१णा२यि। आयिन्द्रन्त७शू३१

२ ४५ २ १ २ १ २
२३४। अपुरुह। न्मन्नावा१सा२यि। यस्यादा१यिता

३ २ १ २ १ १ १ १ ५ ४ २
२। विधा३। तार३४५। रार३४यि ॥(२) यस्या३दा३यि

४ ५ ४ ५ १ २ र १ २ १
ताविधर्त्तरोवा। यास्यद्दिता। विधार्त्ता१रा२यि। ह्वा

र २ ३ ४ ५र २ १ २ १
स्तेनवा३१२३४। न्नःप्रतिधा। यिन्द्राश्वा१ता२ः। मह्वा

---

* ऊ० गा० २प्र० २अ० १४गा०। † "अभीवर्त्तः"—इति ख० पु० पाठः।

न्दाश्यिवार२ः । नमूइ । वा२३४५ । या२३४५ः (३)

॥ ७ * ॥ [२]

॥ जनित्राद्यम ॥ योराजा२चर्षणायिनाम् । ऊवे
हो२यि । याता२थेभिराधा१यिगू२ः । विश्वासान्तरु
ता२ । पृतानार२३४नाम् । ज्येष्ठा३ऽहोयि । योवा३
ऽहोयि । योवा३हो । वहा । गा२णा२३४औहो
वा ॥(१) ज्येष्ठंयो ३ वृत्रहागृणायि । ऊवेहो२यि ।
ज्येष्ठंयोवृत्रहागा१णा२यि । इन्द्रन्तंशुम्भपुरुहा२ ।
न्मन्नावा२३४सायि । यस्या२ होयि । द्विता३ होयि ।
विध । ता२रा२३४औहोवा ॥(२) यस्यद्वी३ताविधर्त्तरा
यि । ऊवेहो२यि । यस्यद्विताविधर्त्ता१रा२यि । हस्ते
नवज्रःप्रतिधा२ । यिदाम्मा२३४ताः । महा३न्होयि ।

* ऊ० गा० ७प्र० २ख० ७सा० ।

र २ १ २१र ३ ५र र २ १ ११
देवा३हो। नम्। रा२यां२३४औहोवा ॥(३) जनित्रा२३

११
४५म् ॥ १३ * ॥ [३] १५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य

पञ्चमः खण्डः † ॥ ५ ॥

---

अथ षष्ठे खण्डे ‡, प्रथमतृचे ¶—

प्रथमा।

१ २ ३ २ ३ २ ३ १ २र ३क २र ३ २
परिप्रियादिवःकविर्वयांसिनप्त्योर्हितः।

३ १ २ ३ १ २
स्वानैर्यातिकविक्रतुः ॥ १ § ॥

"कविः" मेधावी "कविक्रतुः" क्रान्त-प्रज्ञः क्रान्त-कर्मा "नप्त्योः" अधिषवणफलकयोः "हितः" निहितः सोमः "दिवः" द्युलोकस्य "परि प्रिया" अति प्रियाणि "वयांसि" ग्रावणः ॥

"स्वानैः"-"सुवानः"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १८प्र० २अ० १३सा०। † 'उक्तं माध्यन्दिनं सवनम्'—इति वि०।
‡ 'इदानीमार्भवमुच्यते'—इति वि०। ¶ 'और्णायवं साम'—इति वि०।
§ छ० आ० ५, २, ४, १० (२भा० २९) = ऋ० वे० ९, ७, २२, १।

अथ द्वितीया।

२ ३ २ ३ २ ३ १ ० ३ ० ३ १ २
ससूनुर्मातराशुचिर्ज्जातोजातेअरोचयत्।
३ २ ३ १ २ ३ १ २
महान्मही‍ऋतावृधा ॥ २ * ॥

"जातः" उत्पन्नः "शुचिः" † विशुद्धः महान् हविर्भक्ततमः "सः" सोमाख्यः "सूनुः" पुत्रः "मही" महत्यौ "ऋतावृधा" ‡ यज्ञस्य वर्द्धयित्र्यौ "जाते" विश्वस्य जनयित्र्यौ "मातरा" आत्मनो मातरौ द्यावापृथिव्यौ "अरोचयत्" रोचयति दीपयति ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ ० ३ १ २
प्रप्रक्षयायपन्यसेजनायजुष्टोअद्रुहः।
३क २र ३ १ २
वीत्यर्षपनिष्टये ॥ ३ ¶ ॥ १६

हे सोम ! "प्र प्र" अत्यन्तं "क्षयाय" तव निवास-भूताय "अद्रुहः" अद्रुहे अद्रोग्ध्रे "पन्यसे" स्तोत्रे "जनाय" मनुष्याय

---

* ऋ० वे० ६, ७, २२, २। † 'शुचिः दीप्तः'—इति वि०।

‡ 'ऋतावृधा—ऋतो यज्ञः तेन वर्द्धतः ऋतावृधौ अथवा ऋतमन्नं तेन वर्द्धते'—इति वि०। ¶ ऋ० वे० ६, ७, २२, २।

"वीति"वीत्यै भक्षणाय "जुष्टः" पर्याप्तः त्वं "पनिष्टये"* स्तुतये "अर्ष" अङ्ग प्रति गच्छ ॥

"अद्रुहः"-"अद्रुहे"—इति पाठौ, "पनिष्टये"-"च न-ष्टया"—इति च ॥ ३ ॥ १६

॥ और्णायवोत्तरम् ॥ परिप्रिया २दिवःकवायिः। व
या २हो१वा२सिनप्तोवोर्हिताः। स्वानैर्य्या२३ती। ऊ
वा। होवा। होवा। ऊवा २यि। ई२३या। कविक्र
तोर्२। या२३४औहोवा ॥ (१) समनुर्म्मा २तराप्तुचायिः।
जाता २हो१वाजातिअरोवोचयात्। महान्मा२३ही। ऊ
वा। होवा। २। ऊवा २यि। ई२३या। ऋतावृधो२।
या२३४औहोवा ॥ (२) प्रप्रक्षया २यपन्यसायि। जना २हो
१वायजुष्टोवोअद्रुहाः। वीतिया२३र्षा। ऊवा। होवा।

* 'पनतिः स्तुतिकर्म्मा ( निघ० ३, १४, १६ ),—इति वि०।

२। ऊवा२यि। ई३या। पनिष्टयो२। या२३४औहो

वा। ई३या२३४५म्(३)॥ १५ *॥ [१]

॥ और्णायवाद्यम्॥ परिप्रियादिवःकावीः। वया९

सिनप्तोर्हिताः। स्वानैर्यो२३ती। आया२। इया

२ई३या। कविक्रतो२। या२३४औहोवा॥(१) ससुनु

र्मातराशुची। जातोजातेअरोचयात्। महान्मा२३

ही। आया२। इया२ई३या। ऋतावृधो२। या२

३४औहोवा॥(२) प्रप्रक्षयायपन्यासायि। जनायजुष्टो

अद्रुहाः। वीतियार्३षो। आया२। इया२ई३या।

पनिष्टयो२। या२३४औहोवा। ई२३४५(३)॥८ †॥[२]

॥ बृहद्भारद्वाजम्॥ परिप्रिया। दिवःकवायिः।

वया९सा२३यिना। प्तियोर्हिताः। स्वानैर्या२३तायि।

* ऊ० गा० २प्र० २ख० १५सा०। † ऊ० गा० ७प्र० २खं० ८सा०।

आ। औ३होवा। काविक्रतुः। इडा२३ ॥(१) समूनु म्मी। तराप्युचायिः। जातोजा२३ते। अरोचयात्। मवान्मा२३ही। आ। औ३होवा। आर्त्तावृध। इडा२ ३ ॥(२) प्रप्रस्वया। यपन्यसायि। जनाया२३जू। ष्टो ऋतुथाः। वीतिया२३र्षा। आ। औ३होवा। पानि ष्ट्ये। इडा२३भा२३४३। औ२३४५ई। डा(३) ॥ १० * ॥[३]

॥ गौषूक्तम् ॥ परिप्रियादिवौ। हौहोवाहायि। कवायिः। वयाꣳसिनप्रियौ२। ऊवायि। ऊवा२यि। हायिना२ः। स्वानैर्यातिकवौ२। ऊवायि। ऊवा२ यि। क्रात२३ः। हो२वा२३४औहोवा। अग्निराऊता २३४५ः(१) ॥ ११ † ॥[४]

॥ ईनिधनम्मागीयवम् ॥ परिप्रियादिवःकवा३यिरे।

---

* ऊ० गा० १५प्र० २अ० १०सा०। † ऊ० गा० १६प्र० १अ० ११सा०।

१ र र र र २
वयाꣳसिनप्रगोर्हिताः। स्वानेर्य्या२३तायि। ऐ२होे१आ

२ १ ३ ५र र २ र
२३यिही। कवि। क्रा२ठ२३४औहोवा॥(१) ससूनु

र र २ १ र र र र र
र्मातराप्रुचा३ए। जातोजातेअरोचयात्। महान्मा२३

२ २ १र ३ ५र र
ही। ऐ२होे१आ२३यिही। कृता। वार्ह्वा२३४औही

१ र २ १र र
वा॥(१) प्रप्रक्षयायपन्यसा ३ ए। जनायजुष्टोअद्रुहाः।

र २ २ १ ३
वीतिया२३र्षा। ऐ२होे१आ२३यिही। पनि। ष्टार्या

५र र ३ १ १ १ १
२३४औहोवा। ई२३४५(३)॥ १७ *॥ [५] १६

अथ प्रगाथे द्वितीयसूक्ते †—

प्रथमा।

२ ८ १ २ ३ १ २ ३ १ २ ३ १ २
त्वꣳह्या३ङ्गदैव्यपवमानजनिमानिद्युमत्तमः।

३ १ २ ३ १ २
अमृतत्वायघोषयन्॥ १ ‡॥

हे "पवमान" पूयमान! "दैव्य" देवसम्बन्धि सोम! "द्युम-

* ऊ० गा० २०प्र० १ऋ० १७सा०।

† 'वामदेव्यं बृहत्कं साम'—इति वि०।

‡ छ० आ० ६, २, ४, ६ ( २ भा० २२५ पृ० ) = ऋ० वे० ७, ५, १०, ३।

त्तमः" अतिशयेन दीप्तिमान् "त्वं हि" त्वमेव "अङ्ग" क्षिप्रं "घोषयन्" शब्दयन् शब्दं कुर्वन् "जनिमानि" देवसम्बन्धीनि जन्मान्यभिलक्ष्य "अमृतत्वाय" अमरणाय आगच्छेति शेषः ॥

"दैव्य"-"दैव्या"—इति पाठौ, "घोषयन्"-"घोषः"—इति च ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ ३ १ २ ३ २उ ३ १ २ २ २
येनानवग्वादध्यङ्ङपोर्णु*तेयेनविप्रासआपिरे ।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
देवानाꣳसुम्ने अमृतस्यचारुणोयेनश्रवाꣳस्याशत ॥२†॥१७

"नवग्वा"‡ नवनीय-गतिः यद्वा नवभिर्मासैः सत्रस्यानुष्ठानात् "दध्यङ्"—एतन्नामकः अङ्गिराः "येन" सोमेन पणिभिरपहृतानां "द्वारम्" "अपोर्णुते" अपच्छादयति विवृतमकार्षीत् "विप्रासः" तत् मुख्याः सर्वे मेधाविनोऽङ्गिरसः "येन" च सोमेन "आपिरे" तैरपहृता गाः आप्नुवन् किञ्च "देवानाम्" इन्द्रादीनां "सुम्ने" सुखे यज्ञेन सञ्जाते सति "चारुणः" कल्याणस्य "अमृतस्य" उदकस्य सम्बन्धीनि "श्रवांसि" अन्नानि

---

* "र्णु"—इति क० पु० पाठः । † ऋ० वे० ७, ५, १७, २ ।

‡ 'नवग्वा—नवा गावो यस्य असौ नवग्वा'—इति वि० ।

"येन" च सोमेन यजमानाः "आनत" व्याप्नुवत् अलभन्त ; स त्वं देवानाममरणायागच्छेति पूर्वेण सम्बन्धः ॥

"नवग्वा"-"नवग्वो"—इति पाठौ, "आनत"-"आनशुः" —इति च ॥ २ ॥ १७

॥ बृहत्कम् ॥ त्वꣳ ह्यौ। अङ्गदैवा२ ३ या। पावमानजनिमानि। द्यूमत्तामा२ः। अमार्त्ताइत्वा३। यशोवा। पायूयोईहायि ॥(१) अमृता। त्वायघोषा२३यान्। यायिनानवग्वादध्यङ्। आपोर्णूता२यि। येनावाइयिप्रा३। सश्रोवा। पायियिरोईहायि ॥(२) येनवी। प्रासआपार२३यिरायि। दायिवानाꣳसुम्ने अमृत। स्याचा२रूणा२ः। येनाश्राइवा। सियोवा। शायूतोईहायि(३) ॥ १६ * ॥[१]

---

* ऊ० गा० २प्र० २अ० १६ सा०।

२ र २ ३ ४ र ३
॥ स्वारसौपर्णम् ॥ त्वꣳह्यङ्गदैवा२या। पवमानज
४ ५र र १ ३ ५ १ २ २
निमानिद्युमा। ऊम्। ता२३४माः। आमा२ उवा।
र १र २ ५ ४ ५ २
तात्वा। यद्यो२३४वा। षा५यो६हायि॥(१) अमृत
र र २ ३र ४र ३ ४ र ३ ४ ५र १ ३
त्वायघोषा२यान्। येनानवग्वाद्ध्यङ्ङपो। ऊम्। णू
५ १ २ २ १र २ १ ५
२३४नायि। यायिना२उवा। विप्रा। सओ२३४वा।
४ ५ २र ४र र २ ४ र
पा५यिरो६हायि॥(२) येनविप्रासआपा२यिरायि। दे
२र ४र ३र ४ ३ ४ ५ र १ ३ ५ १ २
वानांसुम्ने अमृतस्यचा। ऊम्। हू२३४णाः। यायिना
२ १र २ १ ५ ४ ५
२उवा। अवा। सियो२३४वा। आ५तो६हायि(३)॥१६*॥[२]

१ २ १र १
॥ शाक्कुम†॥ तुवꣳहिया। ए२। गदा। विया।
र र २ १ २ १
पवमानजनिमानिमानिद्युमत्ता२३माः। आमा२त्तात्वा
२ १ ५ ४ ५ १ २ १र
२३। यद्यो२३४वा। पा५यो६हायि॥(१) अमृतत्वा।
१ र र २ १र २
ए२। यघो। षयान्। येनानवग्वाद्ध्यङ्ङपोर्णू२३नायि।

---

* ऊ० गा० ५प्र० २अ० १६ सा०। † "शक्क"—इति ख० पु० पाठः।

१ १ २ १ ५ ४ ५
यायिना २वायिप्रा२३ । सखो२३४वा । पायुयिरो ६ हा

१र २ १र १ र र र
यि ॥(२) येनविप्रा । ए२ । सखा । पिरायि । देवा

र र २ १र २ १ १ २
ना९सुम्ने अमृतस्यचारु२३णाः । यायिना २म्नावा२३ । सि

१ ५ ४ ५
यो२३४वा । भापूतोई हायि(३) ॥ १८ * ॥ [३]

३ २ र ५
॥ सखासाह्रीयम् ॥ तुवा२३४म् । ह्रियङ्गदैविय । औ

५ १ र र १ १
६वा । पवमानजनिमानिद्युमत्ता २माः । आ २मा । ता

२ १ ऽ २र ३र २ १ ५ ५
२३त्वा । यद्यौ२हौं । वाहा३४३यि । षा२३४ यो ६ हा

३ २ र र र ५ ५ १र र
यि ॥(१) अमा२३४ । तात्वायघोषयन् । औ६वा । येना

र र १ १ २
नवम्वादध्यङ्ङपोर्णु २तायि । या २यिना । वा२३यिप्रा ।

१ ऽ २र ३र २ २ ५ ५
सखौ२हौं । वाहा३४३यि । पा२३४यिरो६हायि ॥(२)

३र २ र र र ५ ५ १र र र र
येना३४ । विप्रासखापिरे । औ६वा । देवाना९सुम्ने

* ऊ० गा० ११प्र० २ख० १८सा० ।

२ १ १ २ १ ६
अन्नस्यचारू२णाः । या२यिना । आ२३वा । सियौ३

२र ३र २ १ ५ ५
हों । वाहा३४३यि । शा२३४तो६हायि(३) ॥ १२ * ॥[४]१७

अथ तृतीयतृचे† —प्रथमा ।

१२ ३ २ ३ २३ ३ २ ३ १ २
सोमःपुनानऊर्म्मिणाव्यंवारंविधावति ।

१ २ ३ १ २र ३ १ २
अग्रेवाचःपवमानःकनिक्रदत् ॥ १ ‡ ॥

"पुनानः" पूयमानः "सोमः" "ऊर्मिणा" स्वीयया धारया "अव्यम्" अवेः सम्बन्धिनं "वालं" पवित्रं "वि धावति" विविधं गच्छति । कीदृशः सोमः ? "पवमानः" पूतः "वाचः" स्तोत्रस्य "अग्रे" "कनिक्रदत्" पुनः पुनः शब्दं कुर्वन् विधावति ॥

"अव्यम्"-"अव्ये"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
धीभिर्म्मृजन्तिवाजिनंवनेक्रीडन्तमत्यविम् ।

३ १ २ ३ २ ३ २ ३ १ २
अभित्रिपृष्ठम्मतयःसमस्वरन् ॥ २ ¶ ॥

"वाजिनं" बलवन्तं वा "वनवनीये" वसतीवर्याख्ये उदके

---

* ऊ० गा० १८प्र० १ख० १२सा० । † 'आतीषादीयं साम'— इति वि० ।

‡ ऋ० आ० ६, २, ३, ७ ( २ भा० २१४ पृ० ) = ऋ० वे० ५, ५, १०, ५ ।

¶ ऋ० वे० ५, ५, ११, १

"क्रीडन्तं" सङ्क्रीडमानम् "अत्यविम्" [ अविशब्देन तद्रोमकृतं पवित्रमभिधीयते] अतिक्रान्त-पवित्रं सोमम् ऋत्विजः "धीभिः" स्तुतिभिः * "मृजन्ति" शोधयन्ति [ यद्वा, धीभिः—वर्णलोपश्छान्दसः, धीतिभिः अङ्गुलीभिः मृजन्ति ] किञ्च "त्रिपृष्ठं" [ त्रीणि पवित्राणि द्रोणकलशाधवनीयपूतभृदात्मकानि पात्राणि स्पृशतीति त्रीणि सवनानि वा स्पृशतीति स तथोक्तः, तम् ] सोमं "मतयः" स्तुतयः "अभि समस्वरन्" अभितः संस्तुवन्तीति ॥

"मृजन्ति"-"हिन्वन्ति"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३१ २ २ २ ३ २उ १ १ २ ३ २
असर्जि कलशाँ अभिमीढ्वांत्सप्तिर्नवाजयुः ।

३ १ २र ३ १ २
पुनानोवाचञ्जनयन्नसिष्यदत् ॥ ३ † ॥ १८

"वाजयुः" यजमानानामन्नमिच्छन् "मीढ्वान्" सेक्ता ‡ स सोमः "कलशान्" "अभि" लक्ष्य, कलशेषु "असर्जि" असृज्यत । तत्र दृष्टान्तः—"सप्तिर्न" यथा सर्पणशीलोऽश्वः ¶ सङ्ग्रामे सृज्यते तद्वत् । ततः "पुनानः" पूयमानः सोमं

---

* 'धीभिः बुद्धिभिः'—इति वि० । † ऋ० वे० ५, ५, ११, २ ।

‡ 'मीढ्वान् बलवान्'—इति वि० ।

¶ 'सप्तिर्न—सप्तिरश्वोऽभिधीयते'—इति वि० । "सप्तिः"—इति निघण्टावश्वनामसु पञ्चमं पदम् ( १, १४, ) ।

"वाचं" शब्दं "जनयन्" उत्पादयन् "असिष्यदत्" पात्रेषु स्यन्दति ॥

"मीढ्वान्"--"मेल्हा"—इति पाठौ ॥ ३ ॥ १८

३र ४ ५ र २ ३ ४र ५
॥ आतीषादीयम् ॥ सोमःपुना । हो । नऊर्म्मिणा

५ १ र २ २ २ २ ३ २ १
ईए । अव्यंवारंविधा१वा३तो । अग्रेवा२३४५ । चा २

१ १ १ २ १ २ १ ३ ५र र २
३४५ः । पवमा२३ना३ः । का२ना२३४औहोवा । क्रद

३ १ १११ ३र ४ ५ र २ ३ ४र ५ ५
दे२३४५ ॥(१) धीभिर्मृजा । हो । तिवाजिनाईमे ।

१ र र २ २ २ ३ ३ १
वनेक्रीडन्तमा१त्या३वायिम् । अभित्रा२३४५यि । पा२

१ १ १ २ १ २ १ ३ ५र र २
३४५ । ष्टुम्मता२३या३ः । सा२मा२३४औहोवा । स्वर

३ १ १ ११ ३ ४ ५ र २ ३ ४र ५ ५
न्नै२३४५ ॥(२) असर्ज्जिका । हो । लशा ँ अभीईए ।

१र र २ २ २ ३ ३ १ १ १ १ २
मीढ्वान्सप्तिर्न्नवा१जा३यूः । पुनानो२३४५वा२३४५ । च

१ २ १ ३ ५र र २ ३ १ १
ञ्जना२३या३न् । आ२सा २ ३ ४ औहोवा । ष्यददे २ ३

१ १
४ ५ (३)॥ १७ * ॥ [१]

---

* ऊ० गा० २प्र० २ख० १७सा० ।

॥ सुज्ञानम् ॥ सोमःपुना। नऊर्म्मिणा। अव्यवा
रा२म्। विधावतायि। अग्रेवाचा२ः। पव। मा२
ना२३४औहोवा। कनिक्रदद्दे३ ॥(१) धीभिर्मृजा। ति
वाजिनाम्। वनेक्रायिडा२। तमत्यवायिम्। अभि
वायिपा२। ष्टम्म। ता२या२३४औहोवा। समस्वरन्ने
२ ॥(२) असर्ज्जिका। लशा०अभायि। मीढान्त्सा
यिः। नवाजयुः। पुनानोवा२। चन्त्र। ना२या२३
४औहोवा। असिष्यददे३उपा२३४५ (३)॥ ९ * ॥ [२]

॥ शुध्यम् ॥ सोमःपुना२नः। ऊर्म्मिणोवा। अव्यं
वाराम्। विधावतायि। अग्रे वाचःपवमानःक। ना२
३यि। क्रदाउवा। ऊधिया२ ॥(१) धीभिर्मृजा२न्ति।
वाजिनोवा। वनेक्रीडा। तमत्यवायिम्। अभिन्त्रिपृष्ठ

* ऊ० गा० ७प्र० २ख० ६सा०।

भ्रतयःसम् । आ२३ । स्वराउवा । अूधिया २ ॥(२)
असर्ज्जिका २ ल । भ्रा ऽ अभोवा । मीढात्सप्तायिः । न
वाजयूः । पुनानोवाचञ्जनयन्न । सा २ ३यि । ष्यदाउ
वा । अूधिया २ । ए२३हिया३४३ । ओ २ ३ ४ ५ ई ।
डा (३)॥ ४ * ॥ [३]

॥ ओश्म् ॥ सोमाः । पुनानानऊर्म्मि । णा । हो
ई २ । हो । वाहोयि । अव्यंवारंविधावतायि । अग्रा
यिवा१चा२३ः । पा३वामा३नाः । कना२३यिक्रदा३४३
त् ॥(१) धीभीः । मृजन्तिवाजि । नम् । होई २ ।
हो । वाहोयि । वनेक्रीडन्तमत्यायिम् । अभायित्रा१
यिपा२३ । ष्टा३म्माता३याः । समा२३स्वरा३४३न् ॥(२)
असा । जिकलशा ऽ अ । भि । होई २ । हो । वा

* ऊ० गा० ६प्र० २ख० ४गा० ।

१ २ २ २ २ १ २ २
होयि । मौदात्मप्निन्नवाजयूः । पुनानो१वार३ । चा३

१ २ २ १ २ १
ञ्जाना३यान् । असार३यिष्यदा३४३त् । ओ३४५ई ।

डा (३)॥ ११ * ॥ [४] १८

अथ चतुर्थतृचे† — प्रथमा ।

१ २ ३ १ २ ३ १
सोमःपवतेजनितामतीना

२ ३२ ३१ २ ३२२ ३ २
ञ्जनितादिवोजनितापृथिव्याः ।

३ १ २र ३ २र
जनिताग्नेर्जनितासूर्यस्य

३१ २ ३१ २र
जनितेन्द्रस्यजनितोतविष्णोः ॥ १ ‡ ॥

"सोमः" अभिषूयमाणः "पवते" पात्रेषु चरति । कीदृशः ? "मतीनां" बुद्धीनां [ यद्वा, मननीयानां ] "जनिता" जनयिता, [ "जनिता मन्त्रे ( ६, ४, ५३ )"—इति निपातनादिलोपः ] किञ्च "दिवः" द्युलोकस्य "जनिता" प्रादुर्भावयिता, तथा

* ऊ० गा० १५प्र० २अ० ११सा० ।

† 'वात्सप्र' साम सोमस्यायं स्तुतिः'—इति वि० ।

‡ ऋ० आ० ६, १, ४, ५ ( २ भा० ११७पृ० ) = ऋ० वे० ७, ४, ६, ५ ।

"पृथिव्याः" "जनिता", "अग्नेः" 'जनिता" प्रकाशयिता, "सूर्य्यस्य" सर्वस्य प्रेरकस्यादित्यस्य "जनिता", "इन्द्रस्य" "जनिता" तेन मदस्य जनयिता "उत" अपिच "विष्णोः" व्यापकस्य "जनिता" जनयिता;—एतत्सर्वं सोमेऽभि षूयमाणे भवतीति॥ १॥

अथ द्वितीया।

३ २ ३ १ १ ३ २ ३ २
ब्रह्मादेवानाम्पदवीःकवीना*

२ १ २ ३ २ ३ १ २
मृषिर्विप्राणाम्महिषोमृगाणाम्।

२ १ २ ३ १ २ ३ १ ३
श्येनोगृध्राणाᳬस्वधितिर्वनानाᳬ

१ २ ३ २ ३ १ २ ३ १ २
सोमःपवित्रमत्येतिरेभन्॥ २ †॥

"सोमः" एवंरूपो भवति—"देवानां" स्तोत्रकारिणा मृत्विजां "ब्रह्मा" ब्रह्माख्यर्त्विक्स्थानीयो भवति [यद्वा, "देवानां" द्योतमानानामिन्द्रादीनां "ब्रह्मा" राजा भवति] तथा "कवीनां" क्रान्त-प्रज्ञानां "पदवीः" [स्खलन्ति पदानि साधुत्वेन यो योजयति स पदवीः, वी गत्यादिषु (अदा०, उभ०)—इत्येतस्मात् क्विपि

---

* "दवीष्कवीना"—इति क० पु० पाठः। † ऋ० वे० ७, ४, ७, १।

रूपम्], तथा "विप्राणां" मेधाविनां मध्ये "ऋषिः" भवति [यः परोक्षं पश्यति स ऋषिः "ऋषिर्दर्शनात् (निरु० २, ११)"—इति,] "मृगाणां" "महिषो" भवति महिषाख्यो बलवान् राजा भवति तथा "गृध्राणां" पक्षिविशेषाणां "श्येनः" शंसनीयः पक्षिराजो भवति, "वनानां" [वनतिर्हिंसाकर्मा] हिंसकानां छेदकानां मध्ये "स्वधितिः"—एतन्नामकश्छेदकोऽसि। एवम्प्रभावः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन कृतम् "अत्येति" अतिगच्छति * ॥ २ ॥

---

* अत्राह यास्कः—"ब्रह्मा देवानामित्येष हि ब्रह्मा भवति देवानां देवनकर्मणामादित्यरश्मीनां पदवीः कवीनामित्येष हि पदं वेत्ति कवीनां कवीयमानानामादित्यरश्मीनामृषिर्विप्राणामित्येष हि ऋषिणो भवति विप्राणां व्यापनकर्मणामादित्यरश्मीनां महिषो मृगाणामित्येष हि महान् भवति मृगाणां मार्गणकर्मणामादित्यरश्मीनां श्येनो गृध्राणामिति श्येन आदित्यो भवति श्यायतेर्गतिकर्मणो गृध्र आदित्यो भवति गृध्यते स्थानकर्मणो यत एतस्मिंस्तिष्ठति स्वधितिर्वनानामित्येष हि स्वयं कर्माण्यादित्यो धत्ते वनानां वननकर्मणामादित्यरश्मीनां सोमः पवित्रमत्येति रेभन्नित्येष हि पवित्रं रश्मीनामत्येति स्तूयमान एष एवैतत्सर्वमक्षरमित्यधिदैवतमथाऽध्यात्मं ब्रह्मा देवानामित्ययमपि ब्रह्मा भवति देवानां देवनकर्मणामिन्द्रियाणां पदवीः कवीनामित्ययमपि पदं वेत्ति कवीनां कवीयमानानामिन्द्रियाणामृषिर्विप्राणामित्ययमप्यृषिणो भवति विप्राणां व्यापनकर्मणामिन्द्रियाणां महिषो मृगाणामित्ययमपि महान् भवति मृगाणां मार्गणकर्मणामिन्द्रियाणां श्येनो गृध्राणामिति श्येन आत्मा भवति श्यायतेर्ज्ञान-कर्मणो गृध्राणीन्द्रियाणि गृध्यतेर्ज्ञान-कर्मणो यत एतस्मिंस्तिष्ठन्ति स्वधितिर्वनानामित्ययमपि स्वयंकर्माण्यात्मनि धत्ते वनानां वननकर्मणामिन्द्रियाणां सोमः पवित्रमत्येति रेभ न्नित्ययमपि पवित्रमिन्द्रियाण्यत्येति स्तूयमानोऽयमेवैतत्सर्वमनुभवत्यात्मगतिमाचष्टे ॥"—इति निरु० प० २, १२।

अथ तृतीया।

१ २ ३ २ ३ २ २
प्रावीविपद्वाचऊर्म्मिन्नसिन्धु
२३ २ २ १ २ ३ ३ २
र्गिरस्तोमान्पवमानोमनीषाः।
३ २ २र ३२३१ २ ३ १
अन्तःपश्यन्वृजनेमावराण्या
२ ३ १ २र ३ २
तिष्ठतिवृषभोगोषुजानन्॥ २ * ॥ १९

"पवमानः" सोमः "मनीषाः" मनसईषिता हृदयङ्गमान् "प्रावीविपत्" प्रकर्षेण विपर्यति † प्रेरयति "सिन्धुर्न" स्यन्द-मान-नदीव "वाचः" शब्दस्य "ऊर्मिं न" सङ्घं यथा प्रेरयति तद्वत्। किञ्च "वृषभः" कामानामुदकानां वा वर्षकः सोमः "अन्तः" अन्तर्हितं वस्तुजातं ‡ "पश्यन्" "अवराणि" दुर्व्वलैः वारयितुमशक्यानि "इमा वृजना" ¶ इमानि बलानि "आ तिष्ठति" आसीदति। किं कुर्व्वन्? "गोषु जानन्" § गवां जयाय जानानः सन् परबलानि प्रविशति॥

"स्तोमान्"-"स्तोमः"—इति पाठौ॥ ३॥ १९

* ऋ॰ वे॰ ७, ४, ७, २। † 'वेपयति'—इति वि॰।

‡ 'अन्तः हृदये'—इति वि॰।

¶ 'वृजना वृजनानि छिद्राणि शरीरावस्थितानि'—इति वि॰।

§ 'गोषु जानन्—गोशब्देन रश्मयः ता एव नाड्यो गृह्यन्ते; वृषभो वर्षिता; गोषु अप्सु नाडीषु जानन्'—इति वि॰।

२र र र १
॥ महावात्सप्रम् ॥ हाउहाउहाउ । औ । होहो

२ २ २ र १ २ १ २
वा । ओ । होहोवा । सोमःपवा । तेऽजनि । ताऽ

र र र र र र १र
मतीनाम् । मतीनाम् । मतीनाम् । जनितादायि ।

२ १ १ र र र
वोऽजनि । ताऽपृथिव्याः । पृथिव्याः । पृथिव्याः । ज

१र २ १ र २ र र
निताग्नायिः । जनिता । सूऽरियस्या । रियस्या । २ ।

१र २ १ २ र र
जनितेंद्रा । स्याऽजनि । तोऽतविष्णोः । तविष्णोः । २ ।

१र र २ १ २ र र र र
ब्रह्मादेवा । नाम्पद । वीःकवीनाम् । कवीनाम् ।

र र १ २ १ २ र र
कवीनाम् । ऋषिर्विंप्रा । णाम्महि । षोऽमृगाणाम् ।

र र र १र २ १ २ र
मृगाणाम् । २ । श्येनोगृध्रा । णाॅंस्वधि । तिर्वना

र र र र १ २ १ २र
नाम् । वनानाम् । २ । सोमःपवायि । त्राऽमति । एऽ

र र र १र २ १ र
तिरेभन् । तिरेभन् । २ । प्रावीविपात् । वाऽचऊ ।

२ १ र
मिन्नसिधुः । नसिन्धुः । नसिन्धः । गिरःस्तोमान् ।

२ १ र    २ र    र    १
पवमा। नोऽमनीषाः। मनीषाः। २। अन्तःपश्यान्।

२ १ र    २ र    र    र १
वृजने। माऽवराणी। वराणी। २। आतिष्ठतायि।

२ १    २ र    र    २र
वृषभः। गोऽभुजानन्। भुजानन्। २। हाउ। ३।

१    २    १    २
ओ। होहोवा। २। ओ। हो। होर। वा२३४

५र र    ३११११
औहोवा। ई२३४५ (३)॥ १९ *॥ [१]

२र १    २र १    २
॥ जनित्राद्यम् ॥ हाउजनत्। सोमःपवा। ते२

१    २ ३ र ५    २ १र    २ १    १
जेनि। तामतीनाम्। जनितादायि। वो३जनि। ता

२ ४ ५    २ १र    २ १ र    २ ३ ४ ५
पृथिव्याः। जनितान्नायिः। जनिता। हरियस्या।

२ १र    २ १    २    २ ४
जनितेद्रा। स्याइजनि। तो२४३। ता३वा५यिष्णो६५

२ १र र    २ १    २ ३ ४ ५    २
ई:॥(१) ब्रह्मादेवा। ना३पद। वीःकवीनाम्। ऋ

२    २ १ २    ३ ४ ५    २र १र    २
षिर्विप्रा। णा३म्महि। षोम्हगाणाम्। श्येनोगृध्रा। णा

१    २ ३ ४ ५    २र १    २ १
३ऽस्वधि। तिर्वनानाम्। सोमःपवायि। त्वा३मति।

---

* ऊ० गा० २प्र० २अ० १९सा० ।

२ २ २र१र
आ३४३यि। नी३रा५यिभाई५३न्॥(२) प्रावीविपात्।
२ १र २३४५ २१र २१र
वा३चऊ। भिन्नसिंधूः। गिरस्स्तोमान्। पवमा।
२३४५ २१ २१र २३४५ २र
नोमनीषाः। अन्तःपश्यान्। वृजने। मावराणी। हा
१ २र१ २१ २ २
उजनत्। आतिष्ठतायि। वृषभः। गो३४३। पू३
४
जा५ना६५६न्(३)॥१*॥[२]

४र ३ ४ २ ४
॥यज्ञायज्ञीयम्॥ सोमाऽ५ःप। वा३तारयिजनि
५ १र र र र २ १ २
ता। मीन्तीनाञ्जनितादिवोजनायि। ता३पार्थी२यि
२ १ १र र र २ १
व्याः। जना२यिताग्नेर्ज्जनि। तासू२३री। ऊम्मायि।
२ २ १ऽ र र २ २ १
या३स्या। जानितेन्द्रस्यजनितोता२विष्णाउ॥(१) ब्रो
२ १र र र र र र र र र २
भ्री। ह्मादेवानांपदवीःकवीनामृषिर्विप्राणाम्महायि। षो
१ २ २ १र १र र र
३माग्गी३णाम्। श्येनो२गृध्राणाᳩस्वधितिर्वीनाना२३ᳩ
२ १ २ २ १ र ३र २
सो। ऊम्मायि। मा३ःपा। वायिन्नमत्येता२ यिरेभा

* ऊ० गा० दश० २ख० १सा०।

१ २ १र र र र र
भान्प्रा। वीविपद्वाचऊर्म्मिं न्नसिन्धुर्गिरस्स्तोमान्यवमा।
२ १ २ र १ १ र र र
नो३माना३यिषाः। अन्ता२ःपश्यन्वृजनेमाव। राणा
२ १ २ २ १ र र
२३आ। ऊम्मायि। ता३यिष्ठा। तायिवृषभोगोषू२
३र २ १११
जानाउ। वा३४५(३)॥ १० *॥ [३]

१र २ १ २र१ र
॥ श्यावाश्वम्॥ सोमःपवा। तेजनितामता२यि
१ १ र र र १
नाउया२। जनितादिवोजनिताष्ठथा२यिव्याउवा२३४।
२१ ३र २ १ र र२१ १ ३र १
जना३४यिताग्नेः। जनितासूरियास्या२। जानितेन्द्रा।
२ १ ३ ५ ४ ५ १ २र
स्याजनिता२३। तोवा। वा५यिष्णो६हायि॥(१) ब्रह्मा
र १ २र १ र १ १ र र
देवा। नाम्पदवीःकवा२यिनाउवा२। ऋषिर्विप्राणां
र १ ३र २ १ २ १र
महिषोमृगा२णाउवा२३४। श्येनो३४गृध्रा। णा६स्व
२ १ १ २ १ २ १
धितिर्वनाना२म्। सोमःपवायि। आमतिया२३यि।
४ ५ ४ ५ १र २र १ २र १
तोवा। रा५यिभो६हायि॥(२) प्रावीविपात्। वाच

* ऊ० गा० २३प्र० १ख० १०सा०।

र  १  १ र र  र र
ऊम्मि न्नसा २यिन्वाउवा २ । गिरस्तोमान्यवमानोमना

१  २ २  ३ २  १ र र २ १
२यिषाउवा२३४ । अन्ता३४:पश्यान् । वृजनेमावराणा

१  २ १  २र १  ४ ५  ४
२यि । आतिष्ठतायि । वार्षभोगो२३ । पोवा । जा५

५
नो६हायि (३)॥ १६ * ॥ [४] १९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य
षष्ठः खण्डः† ॥ ६ ॥

---

अथ तृचत्रयात्मके सप्तमे खण्डे‡,

प्रथमतृचे¶—प्रथमा ।

३ १र २ ३ २ २  ३ १ २  ३ १ २
अग्निं वोवृधन्तमध्वराणाम्पुरूतमम् ।

२  ३ २ ३ १ र
अच्छानप्त्रे सहस्वते ॥ १§ ॥

---

० ऊ० गा० २३प्र० १अ० १६सा० ।

† 'यज्ञायज्ञीयमग्निष्टोमीयं साम'—इति वि० ।

‡ 'इदानीमुक्थानि'—इति वि० ।

¶ 'सौरभं ब्रह्मसाम वसिष्ठस्य प्रियतम मच्छावाकसाम'—इति वि० ।

§ छ० आ० १, १, ३, १ (भा० १२७ पृ०) = ऋ० वे० ७, ७, १०, ३ ।

"अध्वराणाम्" अहिंस्यानां बलिनां "नप्त्रं" बन्धुं "सहस्वते" बलवन्तं [ विभक्तिव्यत्ययः ( ३, १, ८५ ) ] "वृधन्तं" ज्वालाभिर्वर्द्धमानं "पुरुतमम्" अतिशयेन बहुमग्निं हे ऋत्विजः ! "वः" यूयम् "अच्छ" अभिगच्छत । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥१॥

अथ द्वितीया ।

३ १र २र ३ २ ३ १ २ ३ २ ३ १ २
**अयंयथानआभुवत्त्वष्टारूपेवतक्ष्या ।**

३ २उ ३ १ २
**अस्यक्रत्वायशस्वतः ॥ २* ॥**

"अयम्" अग्निः "नः" अस्मान् "तक्ष्या" विकर्त्तव्यानि "रूपेव त्वष्टा" रूपाणि वर्द्धकिरिव "यथा" येन प्रकारेण "आभुवत्" आ भवति प्राप्नोति, तथैनमग्निमभिगच्छतेत्यर्थः । किञ्च वयम् "अस्य" अग्नेः "क्रत्वा" † प्रज्ञानेन युक्ताः "यशस्वतः" यशस्वन्तो ‡ भवामेति शेषः ॥ २ ॥

अथ तृतीया ।

३ १ २र ३ २उ ३ २ ३ १ २
**अयंविश्वाअभिश्रियोग्निर्देवेषुपत्यते ।**

२उ ३ १ २
**आवाजैरुपनोगमत् ॥ ३¶ ॥ २०**

---

* ऋ० वे० ७, ७, १०, २ ।

† 'क्रत्वा—तृतीयैषा षष्ठी-स्थाने द्रष्टव्या क्रतोः' इति वि० ।

‡ 'यशस्वतो यशसा सम्पन्नस्य'—इति वि० ।

¶ ऋ० वे० ७, ७, १०, ४ ।

मनुष्याणां "विश्वाः" सर्व्वाः "श्रियः" सम्पदः * "देवेषु" देवानां मध्ये यः "अयम् अग्निः"† "अभिगच्छति, सः अग्निः "नः" अस्मानपि "वाजैः" अन्नैः "उपागमत्" उपागच्छतु॥३॥२०

॥ स्वारसैन्धुक्षितम्॥ अग्निर्वोवृधान्ताम्। आध्व राणाम्। पुरूतामौ। होवा३हाथि। आच्छा२नाप्न्ने२३। सहो२३४वा। सा५तोऽ६हायि॥(१) अयंयथानआभूवात्। त्वाष्टारूपे। वर्ताच्चायौ। हौवा३हाथि। आस्या२क्का ला२३। यशो२३४वा। सा५तोऽ६हायि॥(२) अयंवि श्वाअभिश्रायाः। आग्निर्द्देवे। षुपात्यातौ। होवा३हा यि। आवा२जायिह्रूर२३। पनो२३४वा। गा५मोऽ६हा यि (३)॥ २० ‡ ॥ [१]

---

* 'अभिश्रियः—अभिश्रयणमालम्बनं सर्व्वाणालम्बनानि'—इति वि०।

† 'अग्निः देवेषु भवति यदा अरणिभ्यां पत्यते। पत्यत इति छान्दसः प्रयोगो न दोषः'—इति वि०।

‡ ऊ० गा० २प्र० २अ० २०सा०।

२ २ र
॥ सत्रासाहियम् ॥ अग्ना ३ ४ यिम्। वोवृधन्तम्।
५ ५ १ र र र १ १
ओ६वा। अध्वराणाम्पुरुहूता२माम्। आ२च्छा। ना
२ १ ऽ २र ३र २ १ ५ ५
२३प्त्रे। सहौ२हो। वाहा२४३यि। स्वा२३४तो६हा
२ २ र र ५ ५
यि ॥(१) अया ३ ४ म्। यथानआभुवत्। ओ६वा।
१ र र र १ १ २ १ ऽ
त्वष्टारूपेवतक्ष्या२या। आ२स्या। क्रा२३त्वा। यशौ२
२र ३र २ १ ५ ५ २ २
३हो। वाहा२४३यि। स्वा२३४तो६हायि ॥(२) अया
र ५ ५ १ रर
३ ४म्। विश्वाअभिश्रियः। ओ६वा। अग्निर्देवेषुपत्या
२ २ १ ऽ २र ३र
२तायि। आ२वा। जा२३यिद्ध। पनौ ३ हो। वा
२ १ ५ ५
हा२४३यि। गा२३४मो६हायि(३) ॥ ११ * ॥ [२] २०

* ऊ० गा० ६प्र० २ख० ११सा०।

अथ द्वितीयतृचे—प्रथमा ।

२१ १ २ १ २ ३ २ ३ १ २ ३ १ २
इममिन्द्र सुतम्पिब ज्येष्ठममर्त्त्यम्मदम् ।

३ १ २ ३क २र १ २ ३ २ ३ १ २
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ १ * ॥

हे "इन्द्र !" "सुतम्" अभिषुतम् "इमं" सोमं "पिब" कीदृशम् ? "ज्येष्ठम्" अतिशयेन प्रशस्यं "मदं" मदकरम् "अमर्त्त्यम्" अमारकम् [सोमपान-जन्यो मदो मदान्तरवत् मारको न भवतीत्यर्थः] तथा "ऋतस्य" यज्ञस्य सम्बन्धिनि "सादने" गृहे वर्त्तमानाः "शुक्रस्य" दीप्तस्यास्य सोमस्य "धाराः" "त्वाम्" "अक्षरन्" आभिमुख्येन सञ्चलन्ति त्वां प्राप्नुं स्वयमेवा—गच्छन्तीत्यर्थः [ज्येष्ठं—प्रशस्य-शब्दादियसुनि "ज्य च (५,३,६१)"—इति ज्यादेशः । अक्षरन्—क्षर सञ्चलने (भ्वा०, प०) छान्दसो लङ् (३, ४, ६) ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ १ २ ३ २ ३ १ २ ३ १ २
नकिष्टद्रथीतरो हरी यदिन्द्र यच्छसे ।

२ ३ १ २ ३ २ ३ २ ३ १ २
नकिष्ट्वानु मज्मना नकिः स्वश्व आनशे ॥ २ † ॥

* ऋ० सा० ४, २, १, ३ ( १ भा० ७०२ पृ० )=ऋ० वे० १, ६, ५, ४ ।

† ऋ० वे० १, ६, ६, १ ।

हे "इन्द्र!" "यद्" यस्मात् त्वं "हरी"—एतत्सञ्ज्ञावश्वौ* "यच्छसे" रथे योजयसि, तस्मात् "त्वत्" त्वत्तोऽन्यः कश्चित् "रथीतरः" अतिशयेन रथवान् "नकिः" नास्ति [अन्येषामीदृगश्वयुक्तरथाभावात्]"त्वा" त्वाम् "अनु" लक्ष्य "मज्मना" [बलनामैतत् (निघ० २, ८, २३)] बलेन सदृशोऽपि "न किः" नह्यस्ति "स्वश्वः" शोभनाश्वो "न किः आनशे" न प्राप [इन्द्रस्य बलाश्वयोरसाधारणत्वात् इन्द्रसदृशो बलवान् अश्ववान्] लोके कश्चिदपि नास्तीत्यर्थः [न किष्वत्—"युष्मत्तत्तक्षुष्वन्तः पादम् (८, ३, ११३)"—इति षत्वम्। रथीतरः—अतिशयेन रथी; तरपि "ईद्रथिनः"—इति ईकारान्तादेशः। यच्छसे—यमेर्व्यत्ययेनात्मनेपदम्। स्वश्वः—बहुव्रीहावाद्युदात्तं द्वसोत्युत्तर-पदाद्युदात्तत्वं। आनशे—"अश्नोतेश्च (७,४,७२)"—इति अभ्यासादुत्तरस्य नुट्]॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २
इन्द्रायनूनमर्चतोक्थानिचब्रवीतन।
३ १ २ ३ १ २ ३ १ २ ३ १ २
सुताअमत्सुरिन्दवोज्येष्ठन्नमस्यतासहः॥ ३ †॥२१

---

* "हरी इन्द्रस्य"—इति नैघण्टुकम् १,१५,१।

† ऋ० वे०,१,६.५,५।

हे ऋत्विजः! "इन्द्राय"* "नूनं" क्षिप्रम्† "अर्चत" पूजनं कुरुत। एतदेव स्पष्टीक्रियते—"उक्थानि" अप्रगीत-मन्त्र-साध्यानि शस्त्राणि स्तोत्राणि च "ब्रवीतन" ब्रूत। "सुताः" अभिषुताः "इन्दवः" सोमाः त्वाम् "अमत्सु" आगत मिन्द्रं मत्तं कुर्वन्तु, अनन्तरं "ज्येष्ठ" प्रशस्यतमं "सहः" सहस्विनं बलवन्तम् तमिन्द्रं नमस्यत नमस्कुरुत [ब्रवीतन—ब्रवीते लोटि "तप्तनप्तनथनाश्च (७,१,४५)"—इति तनबादेशः। अमत्सु—मदी हर्षे( भ्वा०,आ० )छान्दसः प्रार्थनायां लुङ्, आगमानुशासनस्यानित्यत्वादिड़भावः। नमस्यत—"नमोवरिवश्चित्रङः (३,१,१९)"—इति क्यच्। सहः—"युगकारिकाररेफाश्च वक्तव्याः—इति मत्वर्थीयस्य लुक्॥ ३ ॥ २१

२ १ ४ ५ ४ ५ ४ ५

॥ वसिष्ठप्रियम् ॥ इममी२३। द्रसुतम्पिब। ज्येष्ठा

० १ ७ १ २ १

म्। अमा३र्त्त्यम्मादा२म्। शुक्रास्यत्वा३। भिया२

३ ५ १ २ ३ ५ २ २ २ ५

क्षा२३४रान्। धाराओ२३४वा। आर्त्तीओ२३४वा।

४ २ १ ४ ५ ४र ५ ४ ५

स्यसा५दनायि ॥ १) नकिष्टू२३। वद्रथीतरः। हारी।

० १ ७ १ २ १ ३

यदी३न्द्रायच्छासा२यि। नकायिष्टूवा३। नुमा२ङमा२३४

---

* 'इन्द्रायेति चतुर्थी द्वितीयार्थे द्रष्टव्या, इन्द्रम्'—इति वि०।

† 'नूनं निश्चितम्'—इति वि०।

ना। नाकाओ२३४वा। सूवाओ२३४वा। स्वआ५नणा यि ॥(२) इन्द्राया२३ । नूनमर्च्चं । तोक्था । निचा३आवी१ नाना२। सुताअमा३। त्सुरी२न्दा२३४वाः। ज्यायि ष्ठाओ२३४वा। नामाओ२३४वा। स्यता५सद्दाः। हो ५ई। डा(३) ॥ १ * ॥ [१]

॥ आसितादम् ॥ इमिमन्द्रसुताम्। पिबा। ज्येष्ठम मर्त्तियम्मा२३दाम्। शुक्रा२स्यात्वा२। भियक्षरान्। धारा२आर्ता२। स्यसोवा३ओ२३४वा। दा५नोईहा यि ॥(२) नकिष्ट्वाद्रथायि। तरो। हरीयदिन्द्रयच्छा२३सा यि। नाका२यिष्टूवा२। नुमज्मना। नाका२यिसूवा २। स्वओवा३ओ२३४वा। ना५शोईहायि॥ इन्द्रा यनूनमा। चता। उक्थानिचब्रवीता२३ना। सूता२

* ऊ० गा० ३प्र० १अ० १सा०।

१ २ १ १
आमा२। त्वरिन्द्रवाः। ज्यायिष्ठा२न्नामा२। स्वतो

२ १ ५ ४ ५
वा३ओ२३४वा। सा५होई२हायि(३)॥ १७ *॥ [२]

५ ३ १ ४ ५
॥ गौरीवितम्॥ इमम्। इन्द्रा२। सुतम्पिबा।

१२ १ १ ४
ज्येष्ठममर्त्त्यम्मदा२३म्। शुक्रस्यत्वा२१२३। भियाक्षर

१ २ २ ४ ५ ४ ५
रान्। धाराऋतस्य२१२३। स्वशोवा। दा५नोई२हायि॥(१)

५ ३२ ४२ ५ १२
न,कः। तुवा२त्। रथीतराः। हरीयदिन्द्रयच्छसा

१ २ ४ १
२३यि। नाकिष्टुवा२१२३। नुमा५ज्मना। नाकिसुवा

४ ५ ४ ५ ५२ ३२
२१२३। स्वशोवा। ना५शोई२हायि॥(२) इन्द्रा। यन्ू३।

४ ५ १२ १२ २
नमर्चता। उक्थानिब्रवीतना२३। सूतात्रमा२१२३।

४ १ २ ४ ५ ४
त्सुरी५द्रवाः। ज्यायिष्ठन्नमा२१२३। स्वतोवा। सा५

५
होई२हायि(३)॥ २ †॥ [३] २१

---

* ऊ० गा० २२प्र० १अ० १७सा०।

† ऊ० गा० २३प्र० १अ० २सा०।

अथ तृतीयतृचे*—प्रथमा।

१ २ ३ १ ३ २ ३ १ २ ३ १ २
इन्द्रजुषस्वप्रवहायाहिशूरहरिह।
१ २ ३ १ २ ३ १ १ २ र ३ २उ २ १ २
पिबासुतस्यमतिर्न्नमधोश्चकानश्चारुर्मदाय॥ १॥

यानि मया हवींषि दत्तानि तानि "प्र वह" "आ याहि" आगच्छ "शूर" वीर्यवन्! उपसर्गाक्षराणि—"हरिह" [अथवा हरितवर्णा हया यस्य स हरिहयः, तस्य सम्बोधनं क्रियते—हे हरिह! छान्दसो यकारलोपः] "पिबा"† "सुतस्य" सोमस्य उपसर्गाक्षराणि—"मतिर्नमधोश्चकानः", "चारुः" शोभनः "मदाय" भक्षणाय॥ १॥

---

* 'इदानीं चतुर्थेऽहनि षोडशी भवति। तस्य षोडशिनः महान् विचारः इन्द्रस्य वृतस्य सत्यभवता मित्यारभ्य महान् विचारो निदानकृतेत्युक्तः चतुस्त्रिंशदक्षराणि स्तुता भवन्ति। तमुपसृत्य प्रवहादीनि उपसर्गाक्षराणि निरूप्यन्ते। तथा सति आदित्रयाणां पादानां त्रीणि त्रीणि उपसर्गाक्षराणि पादान्तेषु भवन्ति'—इति वि० एवञ्च—

प्रथमर्चि—"प्रवह","हरिह","मतिर्न"—इति नव,

द्वितीयर्चि—"नव्यन्न","दिवोन" "स्वरर्न" इति नव,

तृतीयर्चि—"मिवोन","यतिर्न","भृगुर्न"—इति नव,

किञ्च प्रथमर्चि चतुर्थपदादौ च "मधोः३श्चकान"—इति सप्त, तदित्थं सङ्कलनया चतुस्त्रिंशदुपसर्गाक्षराणि सम्पद्यन्ते। अत्र च "स्वर३र्न","मधो३"—इत्युभयत्र विभावस्य द्व्यक्षरत्वेन ग्रहणं बहुविचारेण सम्पादितम्॥

† "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति दीर्घः।

अथ द्वितीया।

१ २ ३ २३२ ३ २३ १२ १ २ ३ १

इन्द्रजठरन्नव्यन्नपृणस्वमधोर्दिवोन।

३ २ ३ २ ३ १ १ २ ३ १ २ ३ १ २

अस्यसुतस्यस्वा३ऽर्नोपत्वामदाःसुवाचोअस्थुः॥ २॥

हे "इन्द्र!" "जठरम्" उदरं "नव्यं न" नवतरं "पृणस्व" पूरयस्व "मधोः" मधुरस्य "दिवो न" "अस्य" सोमस्य "सुतस्य" अभिषुतस्य "स्वर्न" स्वर्गस्येव "उप त्वा" उप समीपे त्वाम् "मदाः" "सुवाचः" शोभनवाचः "अस्थुः" स्थितवन्तः॥ २॥

अथ तृतीया।

१ २ ३ २ ३ २उ ३ १ २ ३ २उ ३ २

इन्द्रस्तुराषाण्मित्रोनजघानवृत्रं यतिर्न।

३ १ २ ३ २उ ३ १ २ ३ २उ ३ २ ३ १ २

विभेदवलम्भृगुर्नससाहेशत्रून्मदेसोमस्य॥ ३॥ २२

"इन्द्रः "तुराषाट्" [तुरि सीदति यः सः तुराषाट्] "मित्रो न" मित्र इव "जघान" "वृत्रं" शत्रुं "यतिर्न"—उपसर्गाक्षराणि "विभेद" भिन्दस्व "बलं" बलोनाम दानवस्तं बलं "भृगुर्न" त्रीणि त्रीणि पदान्तेषु उपसर्गाक्षराणि भवन्ति "ससाह" सहितवान् "शत्रून्" "मदे" भक्षणे कृते सोमस्य तथाच निविदापदे विहतस्य षोड़शिनः। अस्य मदे जरित इत्यारभ्य बहूनि वीर्ययुक्तानि कर्माणि*॥ ३॥ २२

---

* एतदृचस्य व्याख्यानं विवरणकृत्कृतानुकृतमेवेति नानयोर्विशेषः।

॥ गौरीवितम्* ॥ इन्द्र । जुषा३ । स्वप्रवद्दा । आ
याहिशूरहरिद्दा२३ । पाहिबासुता३१२३ । स्यमतिर्न्नी
पूमधोः । चाकानश्चा३१२३ । रुम्मीवा । दा५योऽ६हा
यि ॥(१) इन्द्र । जठा३ । रन्नव्यन्ना । पृणस्वमधोर्हिं
वोना२३ । आस्युसुता३१२३ । स्यस्वर्न्ना५उपा । त्वाम
दाःसू३१२३ । वाचोवा । आ५स्योऽ६हायि ॥(२) इन्द्रः ।
तुरा३ । पाणिमसोना । जघानवृत्रं यतिर्न्ना२३ । बायि
भेदवा३१२३ । सम्भूगुर्न्ना५ससा । हेशत्रून्मा३१२३ । दे
सोवा । मा५स्योऽ६हायि(३) ॥ २ † ॥ [१]२२

इति सामवेदार्थप्रकाशे उत्तरायन्यस्य पञ्चमस्याध्यायस्य
सप्तमः खण्डः ॥ ७ ॥

---

* "गौरीवीतम्"—इति ख० पु० पाठः ।

† ऋ० गा० ३प्र० १अ० २ खा० ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ५ ॥

॥ इति तृतीयस्यार्द्धः-प्रपाठकः* ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे उत्तराग्रन्थे पञ्चमोऽध्यायः ॥

---

* 'इति तृतीय-प्रपाठकस्य प्रथमार्द्धः । चतुर्थमन्त्रः परिसमाप्तः'—इति वि० ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ६ ॥

## ॥ अथ षष्ठोऽध्याय आरभ्यते* ॥

तत्र,

गोवित्पवस्वेति प्रथमे खण्डे —

प्रथमा ।

२ १२ ३१२ ३१
गोवित्पवस्ववसुविद्धिरण्यवि
२ ३ १२ ३१२ ३१२
द्रे तोधाइन्दोभुवनेष्वर्पितः ।
२ ३ १२ ३ २उ
त्वꣳसुवीरो असिसोमविश्ववित्त-
३ २३१२ ३१र २र
न्त्वानरउपगिरेमआसते ॥ १† ॥

हे "इन्दो" सोम ! त्वं "पवस्व" क्षर‡ । कीदृशस्त्वं ? "गोवित्"¶ गवां लम्भकः, "वसुवित्"§ धनस्य लम्भकः, "हिरण्य-

---

* 'इदानीं पञ्चमतहरच्यते'—इति वि०।

† ऋ० ९० ७,२, १९, ४।

‡ 'पवस्व पूयस्व'—इति वि० ।

¶ 'गोवित्—गावो यस्य विद्यन्ते स गोवित्'—इति वि० ।

§ 'वसुवित्—वसु धनं तेन तद्वान्'—इति वि०।

वित्''* हिरण्यस्य लम्भकः, "रेतोधाः" रेतउदकं तस्य धातौ-षधीनां यद्वा रेतः प्रजनन-सामर्थ्यं तस्य धारयिता "भुवनेषु" उदकेषु "अर्पितः"; भो सोम! कीदृशस्त्वं? "सुवीरोऽसि"† शोभनवीर्योऽसि भवसीति, "विश्ववित्" सर्वस्य वेत्तासि। यस्मादेवं तस्मात् तादृशं "त्वा" त्वाम् "इमे" "नरः"‡ नेतारः "गिरा" स्तुत्या "उपासते"¶ ॥

"नरः"-विप्राः"—"इति पाठो ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ १ ३
त्वन्नृचक्षाअसिसोमविश्वतः

१ २ ३ १र २र
पवमानवृषभताविधावसि।

१ २ ३ १ २ ३ १ २ ३ १
सनःपवस्ववसुमद्धिरण्यवद्वय९

२ ३ १ २ ३ १ २
स्यामभुवनेषुजीवसे ॥ २ § ॥

---

* 'हिरण्यवित्--हिरण्यविशिष्टं वस्तु'—इति वि०।

† 'सुवीरः—शोभनवीरः'—इति वि०।

‡ 'नरः—ऋत्विजः'--इति वि०।

¶ 'उपासते—उप समीपे स्थित्वा आसते, समीपे उपविश्य गिरा स्तुतिलक्षणया वाचा इमे आसते स्तुतिं कुर्वाणाः'--इति वि०।

§ ऋ० वे० ७, ३, १८, ४,।

भो "सोम!" त्वं "विश्वतः" सर्वतः सर्वेषु "भुवनेषु"* "नृचक्षाः† असि" नृणां द्रष्टा भवसि। हे "पवमान" पुनान सोम! "वृषभ" अपां वर्षक! "वाः" अपः "वि धावसि" विविधं गच्छसि, स त्वं "नः"‡ अस्माकं "पवस्व" क्षर किञ्च "वसुमत्" बहुभिर्वसुभिर्वासकैर्गवादि-द्रव्यैर्युक्तं, तथा "हिरण्यवत्" बहुभिः हिरण्यैर्युक्तं धनं। वयञ्च वसुभिर्हिरण्यैश्च युक्ताः "भुवनेषु" लोकेषु "जीवसे" जीवितुं प्रभवः "स्याम" भवेम॥ २॥

अथ तृतीया।

३ २ ३ १र २र ३ १ २
ईशानइमाभुवनानिईयसे

३ १ २ ३ १ २ ३ १ २र
युजानइन्दोहरितःसुपर्ण्यः॥

१ २ ३ १ २ ३ २उ ३
तास्तेक्षरन्तुमधुमद्घृतम्पय

१ २ ३ १ २ ३ १ २
स्तवव्रतेसोमतिष्ठन्तुकृष्टयः॥ २ ¶॥ १

हे "इन्दो" सोम! "ईशानः" सर्वस्य स्वामी त्वम् "इमा" इमानि "भुवनानि"§ भूतजातानि "ईयसे" गच्छसि [ईङ्

---

* 'भुवनेषु—भुवनानि चतुर्द्दश'—इति वि०।

† 'नृचक्षाः—नृणां चक्षुभूतः'—इति वि०।

‡ 'नः—अस्मभ्यम्'—इति वि०।

¶ ऋ० सं० ७, ३, १९, २।

§ 'भुवनानि—चतुर्द्दश'—इति वि०।

गतौ ( दि० आ० ), "दिवादिभ्यः श्यन् (३,१,६९)"—इति श्यन् ]। किङ्कुर्वन् ? "हरितः" हरितवर्णाः "सुपर्ण्यः" सुपतनास्त्वश्वा रथे "युजानः" योजयन्, "ताः" सुपर्ण्यः "ते" तव सम्बन्धिन्यः "मधुमत्" माधुर्योपेतं "घृतं" दीप्तं "पयः" उदकं "क्षरन्तु"। हे सोम ! तव "व्रते" कर्मणि तिष्ठन्तु "कृष्टयः"* मनुष्याः सर्वे ॥

"ईयसे"–"वीयसे"—इति पाठौ ॥ ३ ॥ १

४र ३ ४ ३ ४ र
॥ द्विरभ्यस्तं लौशोत्तरम ॥ गोवित्पवस्ववसुविद्धिर।

३ २ २ १ १ १ १ ३र २ २र र
ण्यवायित्। ण्यवा२३४५यित्। रेतो३१२३४। धाइन्दो

र १ २ १ २ ३ २ २ र र
भुवनेष्व। पिताःपिताः। तुवा३१२३४म्। सुवीरोअसि

र १ २ १ २ ३ २ २
सोमवि। श्ववायिच्छूवायित्। तन्वा३१२३४। नरउप

र ३ २ ४ ३ ४ ३ ५र ३ ४र
गिरे। मआ२सा५ता६५६यि ॥(१) त्वन्नृचक्षाअसिसो

५ ३ २ ३ १ १ १ १ ३ २ २र
मवि। श्वताः। श्वता२३४५ः। पवा३१२३४। मानवृष

र र १ २ १ २ ३ २ २
भताविधा। वसायिवसायि। सना३१२३४ः। पवस्वव

१ २ १ २ ३ २ २र र
सुमद्धिर। ण्यवाण्यवात्। वया३१२३४म्। स्यामभुवने।

१ २ ४ ४र र ३ ४ ३र ४ ५र र
षुजा३यिवा५सा६५६यि ॥(२) ईशानइमाभुवनानिई।

* 'कृष्टयः—कवयः पण्डिताः मेधाविनः'—इति वि० ।

२ १ ३ १ १ १ १ ३ २ २ ८

यसायि। यसा२३४५यि। युजा३१२३४। नइन्दो हरितः

१ २ १ २ ३र २ २

सुप। णियाणियाः। तास्ता२१२३४यि। चरन्तु मधु

१ २ १ २ ३ २ २ र र

मद्युतम्। पयाःपयाः। तवा३१२३४। व्रतेसोमतिष्ठ।

२ २ ४

तुका२३र्षा५या६५६ः(३) ॥ ७ * ॥ [१]

२र १ २ १२१ २

॥ श्येनम्॥ गोवित्पवस्ववसुवायित्। हा२३यिरा।

१ १र १ २र ३ २ र १ र

ण्यावित्रेतो३आउवा२३। धाइया। दोभुवनेषुवार्पायि

२ १ ६ २ १ र २ २र १

ताः। त्वꣳसौ३हो। वायिरोअसा३१उवा२३। सोम

२ १ २ १ ६ २ १ र २

आ। विश्वविक्तन्वाना१रा२ः। उयौ३हो। गायिरेम

२ २ ३ २ १ २ १ र २

आ३१उवा२३। ए३। सतआ३२॥(१) त्वन्नृचक्षाअसि

१ २ १ २ २र ३ २

सो। मा२३वायि। स्वातःपवा३१उवा२३। मानआ।

१र ६ २ १ ६ २ १ २

वृषभताविधावासायि। सनौ३हो। पावस्ववा३१उवा

२ ३ २ १ २ १ ६ १

२३। सुमदा। हिरण्यवद्धयाꣳस्या१मा२। भवौ३हो।

---

* क० गा० ८प्र० २श्र० ७गा०।

१　२　　　　　　२　२ ३ १　　　　२र २ १ २ १र
नायिषुजा३१उवा२३। ए३। वस्त्रा३२॥(२) ईशानइमा
२ १　　　　२　१ र १　　　　२र ३ २
भुवना। ना२३ई। यासेयुजा३१उवा२३। नाइया।
र १　　　२　१र ऽ ऽ　१　२
दोहरितःसुपार्णायाः। ताक्षौ३हो। चारन्तुमा३१उवा
२ ३ १　　१　　२　　　१र ऽ　२
२३। धूमदा। घृतम्पयस्तवाब्रा१ता२ रयि। सोमौ३हो।
२　　२　　　२　　२३ १
तायिष्ठन्तुका३१उवा२३। ए३। ष्टयश्रा३२(३)॥१८*॥ [२]१

अथ द्वितीयतृचे—

प्रथमा।

१ २　　　३ २ ३ १ २
पवमानस्यविश्वचित्प्रतेसर्गाअसृक्षत।
१ २　३ २ ३ १ २
सूर्यस्येवनरश्मयः॥ १ † ॥

हे "विश्ववित्" विश्वस्य द्रष्टः सोम! "पवमानस्य" क्षरतः "ते" तव "सर्गाः"‡ सृज्यमाना धाराः "सूर्यस्येव रश्मयः" सूर्यस्य किरणा इव प्रकाशमानाः "न"—इति सम्प्रत्यर्थे। इदानीं "प्रासृक्षत" प्रासृज्यन्त॥ १॥

* क० गा० २३प्र० १ख० १८सा०।

† ऋ० वे० ७, १, ३७, १।

‡ 'सर्गाः—सृष्टयः उदकसङ्घाताः'—इति वि०।

अथ द्वितीया।

३ २ ३ २ ३ २उ ३ १ २ ३ १ २

केतुं कृण्वन्दिवस्परि विश्वा रूपाभ्यर्षसि।

३ १ २

समुद्रः सोम पिन्वसे॥ २ *॥

हे "सोम!" "समुद्रः"† समुद् द्रवन्ति यस्माद्रसाः स समुद्रः स त्वं "केतुं"‡ प्रज्ञानं "कृण्वन्" कुर्वन् अस्माकं "विश्वा रूपा" विश्वानि रूपाणि "दिवः"¶ अन्तरिक्षात् "अभ्यर्षसि"§ अभि पवसे "पिन्वसे" नानाविधानि च धनानि अस्मभ्यं प्रयच्छसि॥२॥

अथ तृतीया।

३ १र २र ३ १ २ ३ १ २

जज्ञानो वाचमिष्यसि पवमान विधर्मणि।

१ २ ३ १र २र

क्रन्दन्देवो न सूर्यः॥ ३ ‖॥ २

हे "पवमान" सोम! "देवः न सूर्यः" द्योतमानः सूर्य इव "जज्ञानः" प्रादुर्भूतस्त्वं "विधर्मणि" विधारके** दशापवित्रे "क्रन्दन्" ध्वनन् "वाचम्" शब्दम् "इष्यसि" प्रेरयसि॥

---

* ऋ० वे० ७, १, २७, २।

† 'समुद्रः—समुद्रभूतस्त्वम्'—इति वि०।

‡ 'केतुर्ध्वजः तम्'—इति वि०।

¶ 'दिवस्परि—द्युलोकस्योपरि—इति वि०।

§ 'अभ्यर्षसि—आभिमुख्येन रक्षसि'—इति वि०।

‖ ऋ० वे० ७, १, २७, ४।

** 'विधर्मणि—विविधे कर्मणि'—इति वि०।

"जज्ञानः"-"हिन्वानः" —इति पाठौ, "क्रन्दन्" "अक्रान्"—इति च ॥ ३ ॥ २

प्रसोमासइति सप्तर्चं तृतीयं सूक्तम्;

तत्र, प्रथमा।

१र २र २ १ १ ३ १ २
प्रसोमासोअधन्विषुःपवमानासइन्दवः।
१ २ ३ १ २
श्रीणानाअप्सुवृञ्जते ॥ १ * ॥

"पवमानासः" पूयमानाः "इन्दवः" दीप्ताः "सोमासः" सोमाः "प्राधन्विषुः" [धन्वति गतिकर्मा (निघ० २,१४,६४)] प्रगच्छन्ति किञ्च "श्रीणानाः"† गोभिः श्रयमाणाः "अप्सु" वसतीवरीषु‡ "वृजन्ते" गच्छन्ति [व्रज व्रजी गतौ (भ्वा०,प०)] सम्पृक्ता भवन्तीत्यर्थः॥

"वृजन्ते"-"मृजन्त"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

३ १र २र ३ २ ३ २ ३ १ २ ३ २
अभिगावोअधन्विषुरापोनप्रवतायतीः।
३ १र २र
पुनानाइन्द्रमाशत ॥ २ ¶ ॥

* ऋ० वे० ६, ८, १४, १।

† 'श्रीणानाः—श्रीणनं मिश्रणं, मिश्रयमाणाः'—इति वि०।

‡ 'अप्सु—सप्तम्या बहुवचनमिदं तृतीया-बहुवचनस्य स्थाने द्रष्टव्यम्, अद्भिः'—इति वि०।

¶ ऋ० वे० ६, ८, १४, २।

"गावः" गमनशीलाः* "इन्दवः" सोमाः "अभि अध-न्विषुः" दशापवित्रमभिगच्छन्ति। किमिव? "प्रवता" प्रवणवता देशेन "यतीः" गच्छन्त्यः "आपः नः" आपइव †, पश्चात् "पुनाना" "इन्द्रं" प्रणीयितुम् आशत व्याप्नुवन् ॥२॥

अथ तृतीया।

१ २ ३ १२ २२ ३ १ २
प्रपवमानधन्वसिसोमेन्द्रायमादनः।
१ २३ १२ २२
नृभिर्यतोविनीयसे ॥ ३‡ ॥

हे "पवमान" सोम! "इन्द्राय" इन्द्रस्य "मादनः" मादयिता त्वं "प्रधन्वसि" प्रगच्छसि पवित्रम्। तदेवाह—"नृभिः" नेतृभिर्ऋत्विग्भिः "यतः" गृहीतः¶ "विनीयसे"§ हविर्द्धानात्‖॥

"मादनः"–"पातवे"—इति पाठौ ॥३॥

---

* 'गावः—आदित्यरश्मयः उदकानि सोमरसा गावश्च'—इति वि०।

† 'आपोन—न-शब्द उपमार्थीयः आपइव "प्रवता यतीः" यथा प्रवणेन आपो गच्छन्ति तद्वत् सोमेन अभिषूयमाणेन गावो धन-धान्य-देवताश्च प्रवणा भवन्ति, अतउक्तं पुनाना इन्द्रमाशत'—इति वि०।

‡ ऋ० वे० ६, ८, १४, ३।

¶ 'यतः—नियतः संयत इति यावत्, अथवा यमु बन्धने ऋत्विग्भिर्बद्धः सोमवह्नेन'—इति वि०।

§ 'विनीयसे—विविधं नीयसे'—इति वि०।

‖ 'अथवा पवमान प्रधन्वसि पात्रं प्रतीन्द्रपानाय तदर्थं हविर्धानात् विनीयसे'—इति ऋग्वेदेऽधिका व्याख्या।

अथ चतुर्थी ।

२ ३　१र २र　३ २ ३ १ २　३ १ २
इन्दोयदद्रिभिःसुतःपवित्रम्परिदीयसे ।
२ ३ १ २ ३ १ २
अरमिन्द्रस्यधाम्ने ॥ ४ * ॥

हे "इन्दो" त्वं "यद्" यदा "अद्रिभिः" ग्रावभिः "सुतः" अभिषुतः "पवित्रं" दशापवित्रं † "परिदीयसे" परिगच्छसीत्यर्थः । तदा "इन्द्रस्य" "धाम्ने" स्थानाय धारकायोदराय वा "अरं" पर्याप्तोऽसि ॥

"परिदीयसे"-"परिधावसि"—इति पाठौ ॥ ४ ॥

अथ पञ्चमी ।

१ २　३१ २ ३ १२　३ १ २
त्वꣳसोमनृमादनःपवस्वचर्षणीधृतिः ।
२ ३ १ २ ३ १ २
सस्निर्यो अनुमाद्यः ॥ ५ ‡ ॥

हे "सोम !" "नृमादनः नृणां मादयिता "चर्षणीधृतिः" चर्षणीभिः ऋत्विग्भिः प्रजाभिः धृतस्त्वं "पवस्व" । "यः" त्वं "सस्निः" शुद्धः "अनुमाद्यः" स्तुत्यः¶ स पवस्वेति समन्वयः ॥

"चर्षणीधृतिः"-"चर्षणीमहे"—इति पाठौ ॥ ५ ॥

---

* ऋ० वे० ९, ८, १४, ४ ।

† 'पवित्रं परिदीयसे—द्वितीयैकवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् पवित्रस्योपरि दीयसे'—इति वि० ।

‡ ऋ० वे० ९, ८, १४, ५ ।

¶ 'अनुमाद्यः—यस्य पश्चात् देवता माद्यन्ति स अनुमाद्यः'—इति वि० ।

अथ षष्ठी।

१ २ ३ १ २ ३ १ २ ३ १ २

पवस्ववृत्रहन्तमउक्थेभिरनुमाद्यः।

१ २ ३ १ र २र

शुचिःपावकोअद्भुतः॥ ६* ॥

हे सोम! "वृत्रहन्तमः" शत्रूणामतिशयेन हन्ता त्वं "पवस्व" क्षर। कीदृशस्त्वम्? "उक्थेभिः" शस्त्रैः "अनुमाद्यः" स्तुत्यः "शुचिः" शुद्धः† "पावकः" अन्यस्य शोधकः‡ "अद्भुतः" महान्¶, एवं महानुभावः पवस्व॥

"वृत्रहन्तमः"-"वृत्रहन्तम"—इति पाठौ॥ ६॥

अथ सप्तमी।

१ २ ३ १ २ ३ १ २ ३१र २

शुचिःपावकउच्यतेसोमःसुतःसमधुमान्।

३ १ २ ३ २

देवावीरघशꣳसहा॥ ७§ ॥ ३

"सुतः" अभिषुतः "मधुमान्" माधुर्योपेतः "सः" सोमः "शुचिः" स्वयं शुद्धः "पावकः" शोधकश्च उच्यते तथा "देवावीः" देवाना-

---

* ऋ० वे० ६, ८, १४, ६।

† 'शुचिः—दीप्तः'—इति वि०।

‡ 'पावकः—पावनस्वभावः'—इति वि०।

¶ 'अद्भुतः—अपूर्वः नान्यो द्वितीयः'—इति वि०।

§ ऋ० वे० ६ ८, १४, ७।

सविता तर्पयिता* "अघशंसहा" अघं पापं शंसतीत्यघशंसा असुरास्तेषां हन्तेति चोच्यते ॥

"सुतःसमधुमान्"-"सुतस्यमध्वः"—इति पाठौ ॥ ७ ॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीय-खण्डे—

प्रकविरिति सप्तर्चं प्रथमं सूक्तम्;

तत्र, प्रथमा ।

२ ३ २ ३ १ २ ३ २ ३ १ २
प्रकविर्देववीतयेव्यावारेभिरव्यत ।
२ १ २र ३ १र २र
साह्वान्विश्वाअभिस्पृधः ॥ १† ॥

"कविः" मेधावी सोमः "देववीतये" देवानां पानाय "अव्यावारेभिः" अविसम्बन्धिभिः वालैः दशापवित्रेण "अव्यत" अव्यते प्राप्यते, "साह्वान्" शत्रूणां साढा‡ सोमः "विश्वाः स्पृधः" सर्वान् सङ्ग्रामान् हिंसकान् वा अभिभवतीति शेषः ॥

"अव्यावारेभिरव्यत"-"अव्योवारेभिरर्षति"—इति पाठौ ॥ १ ॥

---

* 'देवावीः—देवानां भक्षस्वभूतः'—इति वि० ।

† ऋ० वं० ६, ८, १०, २।

‡ 'साह्वान्—साधन-स्वभावः'—इति वि० ।

अथ द्वितीया।

१र १र ३ २ ३२उ ३ १ २ ३ १ २
सहिष्मा जरितृभ्य आ वाजं गोमन्तमिन्वति।

१ २ ३ १ २
पवमानः सहस्रिणम्॥ २ *॥

"स हि ष्म" स खलु "पवमानः" सोमः "जरितृभ्यः" स्तोतृभ्यः "गोमन्तं" "बहुभिर्गोभिर्युक्तं" "सहस्रिणं" सहस्र-सङ्ख्याकं† "वाजम्" अन्नम् "आ" आभिमुख्येन "इन्वति" व्याप्नोति प्रयच्छतीत्यर्थः॥ २॥

अथ तृतीया।

२३ १ २ ३ १ २ ३ २३ १ २ ३ २
परि विश्वानि चेतसा मृज्यसे पवसे मती।

१ २ ३ १ २
स नः सोम श्रवो विदः॥ ३ ‡॥

हे "सोम!" त्वं "चेतसा" स्वीयेनास्मदनुकूलेन चित्तेन "विश्वानि" सर्वाणि धनानि "मती" मत्या अस्मत्स्तुत्या "मृज्यसे" दशापवित्रेण शोध्यसे। ततः "पवसे" रसं क्षरसि।

---

* ऋ० वे० ६, ८, १०, २।

† 'सहस्रिणं—सहस्र-पोषण-समर्थम्'—इति वि०।

‡ ऋ० वे० ६, ८, १०, ३।

एवम्भूतः "सः" त्वं "नः" अस्मभ्य "अवः" अन्नं* "विदः"† देहीति शेषः ॥

"मृज्यसे"-मृशसे"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी ।

२क २र ३ १ १   २र ३ १ २   ३ २ ३ २
अभ्यर्ष बृहद्यशोमघवद्भ्योध्रुवᳫंरयिम् ।
१ २ ३   २ ३ १ २
इषᳫंस्तोतृभ्यआभर ॥ ४ ‡ ॥

हे "सोम !" त्वं "बृहद् यशः" महतीं कीर्त्तिम् "अभ्यर्ष" अभिगमय, "मघवद्भ्यः" हविष्मद्भ्यः¶ अस्मभ्यं "ध्रुवं"§ रयिं "धनं" च अभ्यर्ष । किञ्च "इषम्" अन्नं‖ "स्तोतृभ्यः" अस्मभ्यम्** "आभर" आहर ॥ ४ ॥

अथ पञ्चमी ।

१   ३र   ३ १र   २र २ १ १   २
त्वᳫंराजेवसुव्रतोगिरःसोमाविवेशिथ ।
३ १ २
पुनानोवह्निअद्भुत ॥ ५ †† ॥

---

* 'अवः—अन्नं यशो वा'—इति वि० ।

† 'विदः—विद ज्ञाने, विद्लृलाभे, विद सत्तायाम् । अन्नलाभकरः'-इति वि० ।

‡ ऋ० वे० ६, ८, १०, ४ ।

¶ 'मघवद्भ्यो यजमानेभ्यः—इति वि० ।

§ 'ध्रुवं स्थिरं'—इति वि० ।

‖ 'इषम् अन्नं हविं वा'—इति वि० ।

** 'स्तोतृभ्यः यष्टृभ्यः'—इति वि० ।   †† ऋ० वे० ६, ८, १०, ५ ।

हे "वह्ने" यज्ञादेर्वोढः! "अद्भुत!"* "सोम!" "सुव्रत" सुकर्मा "पुनानः" त्वं "राजा इव" "गिरः" अस्मदीयाः "स्तुतीः "आविवेशिथ" आविशसि ॥ ५ ॥

अथ षष्ठी ।

१र २र ३ २ ३१२ ३ १ २ ३ १ २
स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः ।
१ २ ३ १ २
सोमश्चमूषु सीदति ॥ ६ † ॥

"सः" सोमः "वह्निः" यज्ञादेर्वोढा "अप्सु" अन्तरिक्षे वर्त्तमानः "दुष्टरः" दुःखेन अन्यैस्तरणीयः "मृज्यमानः" शोध्यमानः "गभस्त्योः" हस्तयोः‡ एवम्भूतः सन् "चमूषु" पात्रेषु "सीदति"¶ ॥ ६ ॥

अथ सप्तमी ।

३ २ ३ १र २र ३ २ ३ १ २
क्रीडुर्मखो न मंहयुः पवित्रं सोम गच्छसि ।
१ २ ३ २ ३ १ २
दधत्स्तोत्रे सुवीर्य्यम् ॥ ७ § ॥ ४

---

* 'अद्भुत अभूतपूर्व'—इति वि० ।

† ऋ० वे० ६, ८, १०, ६ ।

‡ 'गभस्त्योः—अङ्गुल्योः'—इति वि० ।

¶ 'चमूषु सीदति—भक्षणीयेषु तिष्ठति'—इति वि० ।

§ ऋ० वे० ६, ८, १०, ७ ।

हे "सोम!" "क्रोड्" क्रोड़न-शीलस्त्वं "मंहयुः"* [मंहति-दानकर्मा (निघ०३,२०,१०) दानेच्छुः "मखो न" दानमिव "पवित्र" "गच्छसि"। किं कुर्वन्? "स्तोत्रे" स्तुतिकर्त्रे "सुवीर्यं" शोभन-वीर्यं "दधत्" प्रयच्छन् ॥ ७॥ ४

अथ यवंयवमिति चतुर्ऋचं द्वितीयं सूक्तं;

तत्र, प्रथमा।

यवंयवन्नोअन्धसापुष्टम्पुष्टम्परिस्रव।

विश्वाचसोमसौभगा ॥ १† ॥

हे "सोम"! त्वं "नः" अस्मभ्यम् "पुष्टंपुष्टम्"‡ अत्यन्तं बहुलं "यवंयवं"¶ पुनःपुनर्युतं रसम् "अन्धसा" अन्नरूपया धारया "परिस्रव" क्षर [तत्र प्रार्थयितुस्तृष्णयात्यन्तं पीड़ितत्वात् "आबाधे च (८,१,१०)"—इति द्विर्भावः। आबाधनमाबाधः पीड़ा प्रयोक्तृधर्मो नाभिधेयधर्म इत्युक्तम्]। अपिच "विश्वा" विश्वानि "सौभगा"§ सौभगानि धनानि परिस्रव अस्मभ्यं प्रयच्छेत्यर्थः ॥ १ ॥

* 'मंहयुः—पूजेयुः अथवा मंहयुः पूजाकारः'—इति वि०।

† ऋ० वे० ७, १, १२, १।

‡ 'परिस्रवसानान्या पुष्टिः धनधान्यादिना वर्धेयिकी पुष्टिः यज्ञमिष्या-दिका'—इति वि०।

¶ 'यवं—अभ्यासे भूयानर्थः प्रतीयते। यवं धान्यविशेषं चरुपुरोडाशेभ्यो वे प्र-भूतम्'—इति वि०

§ "सुपांसुलुक् (७, १, ३९)"—इत्याकारः।

अथ द्वितीया ।

२ ३ २ ३ २ ३ २ ३ १ २ ३ १र २र

इन्दोयथातवस्तवोयथातेजातमन्धसः ।

२ ३ १ २ ३ १ २

निर्वर्हिषिप्रियेसदः ॥ २* ॥

हे "इन्दो" सोम ! "अन्धसः" अन्नरूपस्य "तव" सम्बन्धी "स्तवः" स्तवनं स्तोत्रं† तथा "ते" तव "यथा जातं" यथा प्रादुर्भूतमस्ति, तथा त्वं "प्रिये" प्रीणयितरि "बर्हिषि" अस्मदीये "नि सदः"‡ निषण्णो भव ॥ २ ॥

अथ तृतीया ।

२ १ २ ३ १ २ ३ १र २र ३ १ २

उतनोगोविदश्ववित्पवस्वसोमान्धसा ।

३ १ २ ३ १ २

मक्षूतमेभिरहभिः ॥ ३¶ ॥

"उत" अपिच हे "सोम !" "नः"§ अस्माकं "गोवित्" गोप्रदः‖ "अश्ववित्" अश्वप्रदश्च त्वं** "मक्षुतमेभिः" मक्षुतमैः अतिशयेन शीघ्रैः "अहभिः" अहोभिर्हेतुभिः "अन्धसा पवस्व" अन्नरूपया धारया क्षर ॥ ३ ॥

* 'तव स्तवः क्रियते स्तोत्र-शस्त्रात्मकः' —इति वि० ।

† ऋ० वे० ७, १, १२, २ ।

‡ 'नि—नितराम्'—इति वि० ।

¶ 'नः—अस्मभ्यम्'—इति वि०

§ ऋ० वे० ७, १, १२, ३ ।

‖ 'गोवित्—गोमान्'—इति वि०

** 'अश्ववित्—अश्ववान्'—इति वि० ।

अथ चतुर्थी ।

२ ३ २ ३ १र २र३२ १२ ३ १ २
योजिनातिनजीयतेहन्तिशत्रुमभीत्य ।
१ २
सपवस्वसहस्रजित् ॥ ४ * ॥ ५

हे "सहस्रजित्" असङ्ख्यात-शत्रूणां जेतः ! † सोम ! "यः" भवान् "जिनाति" शत्रून् जयति स्वयं शत्रुभिः "न जीयते"। प्रकारान्तरेण तदेवाह—"शत्रुमभीत्य" स्वयमेव शत्रुमागत्य "हन्ति" किन्तु तेन न हन्यते इति शेषः। एवम्भूतः स त्वं धारया चर ॥ ४ ॥ ५

अथ तृचात्मके तृतीयसूक्ते—

प्रथमा ।

२ ३ १ २ ३ १र २र ३ १ २
यास्तेधारामधुश्चुतोऽसृग्रमिन्दऊतये ।
१ २ ३ २ ३ १ २
ताभिःपवित्रमासदः ॥ १ ‡ ॥

भो "इन्दो" सोम ! "ते" तव "मधुश्चुतः" मधुर-रसस्य स्रोतयित्र्यः "याः" "धाराः" "ऊतये" रक्षणाय "असृग्र" सृज्यन्ते "ताभिः" धाराभिः त्वं "पवित्रम्"¶ "आसदः" आसीद ॥ १ ॥

* ऋ० वे० ७, १, १२, ४ ।

† 'स पवस्व सहस्रजित् सहस्राणां जेता'—इति वि० ।

‡ ऋ० वे० ७, १, २५, २ ।

¶ 'पवित्र'—इत्यपवित्रम्'—इति वि० ।

अथ द्वितीया।

२ ३ १ २ ३१ २ ३ १र २र ३ १ २

सोअर्षेन्द्रायपीतयेतिरोवाराण्यव्यया।

१ २ ३ २ ३ २ ३ २

सीदन्नृतस्ययोनिमा ॥ २ * ॥

हे सोम! "सः" अभिषुतः त्वम् "अव्यया" अविमयानि "वाराणि" वालानि "तिरः" तिरस्कुर्वन् "ऋतस्य" यज्ञस्य "योनिं" कारणभूतं दशापवित्रम् "आसीदन्" आभिमुख्येन उपविशन् "इन्द्राय" इन्द्रस्य "पीतये" पानाय "अर्ष" चर॥

"ऋतस्ययोनिमासीदन्"-"योमावनेषु"—इति पाठौ॥२॥

अथ तृतीया।

१ २ ३१ २ ३१ २ ३ १ २

त्वꣳसोमपरिस्रवस्वादिष्ठोअङ्गिरोभ्यः।

३ ३१ १र २र

वरिवोविद्घृतम्पयः॥ ३ † ॥ ६

हे "सोम!" "स्वादिष्ठः" स्वादुतमः "वरिवोवित्" ‡ अस्म-दभिलषितस्य धनस्य लम्भकश्च त्वम् "अङ्गिरोभ्यः" अङ्गिरसा-

---

* ऋ० वे० ७, १, २५, २।

† ऋ० वे० ७, १, २५, ४।

‡ 'वरिवोवित्—वरिवः=वरिष्ठः, वित्=भवः'—इति वि०।

मर्थाय* "घृतं" दीप्तं† "पयः" क्षीरवत् सारभूतं रसं "परिस्रव" परिक्षर ॥

"त्वं सोम"-"त्वमिन्द्री" —इति पाठौ ॥ ३ ॥ ६ ॥

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य
द्वितीयः खण्डः‡ ॥ २ ॥

---

अथ तृतीय-खण्डे¶—

प्रथम-तृचे, प्रथमा ।

१ ३ १ २ ३क २र २ ३ २
तवश्रियोवर्ष्यस्येवविद्युतो

१र २ ३ १ २ ३ १ २
अग्नेश्चिकित्रउषसामिवेतयः ।

१र २र ३ १ २ ३ १ २ ३
यदोषधीरभिसृष्टोवनानिच

१ २ ३ १ २ ३ १र १र ३ १ २
परिस्वयञ्चिनुषेअन्नमासनि ॥ १ §॥

"अग्नेः" अङ्गनादि-गुण-युक्तस्य "तव" "श्रियः" रश्मि-लक्षणा विभूतयः "चिकित्रे" प्रज्ञायन्ते । तत्र दृष्टान्तः—"वर्षस्येव||

---

* 'आङ्गिरोभ्यः—आङ्गिरो नाम देवास्तेभ्योऽर्थं'—इति वि० ।

† "घृतमाज्यम्"—इति कश्चिद्व्याख्या ।

‡ 'उक्तं वहिष्पवमानं । त्रिवृतं सौमिकञ्च तत् । पञ्चममहः'—इति वि० ।

¶ 'इदानीमाज्यानि; आग्नेयम्प्रथममाज्यम्'—इति वि० ।

§ ऋ० वे० ८, ४, २०, ५ ।

मूले तु "वर्षस्येव „ —इति स-वकारः श्रूयते ।

विद्युतः" यथा वर्षितुर्मेघस्य सम्बन्धिन्यो विद्युतः, "उषसामिवेतयः" यथा चोषसाम् 'एतयः' गमनशीलाः व्याप्ताः प्रकाशाः प्रज्ञायन्ते, तद्वदित्यर्थः। कदेत्यत्राह—"यद्" "यदा" त्वम् "ओषधीः" व्रीहियवाद्याः "वनानि" अरण्यानि च अभिसृष्टो सृष्टः दग्धुं विसृष्टः सन् "स्वयम्" आत्मना "आसन्" आस्ये मुखे "अन्नम्" अदनीयं स्थावर-लक्षणं "परि चिनुषे" परिक्षिपसीत्यर्थः॥

"विद्युतोऽग्ने:"-"विद्युतस्त्विषा"—इति, "उषसामकेतवः"-"उषसामिवेतयः"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ २ ३उ ३ १ २
वातोपजूतइषितोवशाᳬअनु

३ २उ ३ १ २ ३ १ २
तृषुयदन्नावेविषद्वितिष्ठसे।

१ २ ३ २ १ २ १ २
आतेयतन्तेरथ्योऽ३ऽयथापृथक्

१ २ ३ १ २ ३ १ २
शर्द्धाᳬस्यग्ने अजराणिधक्षतः॥ २*॥

हे "अग्ने!" त्वं "यद्" यदा "वातोपजूतः" वायुना कम्पितः† "वशान्" कान्तान् वनस्पतीन् 'अनु' प्रति "तृषु" क्षिप्रम्

* ऋ० वे० ८, ४, २१, २।

† 'वातोपजूतः—वातयुक्तः'—इति वि०।

"इषितः" प्रेषितश्च* सन् "अन्ना" अन्नानि अदनीयानि वनस्पत्यादीनि स्थावराणि "वेविषत्" व्याप्नुवन् "वितिष्ठसे" इतस्ततो गच्छति; तदानीम् "अजरस्य" जरा-रहितस्य "धक्षतः" दहतः "ते" तव "ध्रजांसि"† तेजांसि "यथा" "रथ्यः" रथिनः तद्वत् "आ पृथक्" पृथगायन्त गच्छन्ति ॥

"अजरस्य"-"अजराणि"—इति पाठौ ॥ २ ॥

अथ तृतीया।

२    २ ३ १ २   ३ १ २
मेधाकारं विदथस्य प्रसाधन

३ १र    २र    ३ १ २   ३ २
मग्निꣳ होतारम्परिभूतरम्मतिम्।

१र   २र   ३ १ २    ३ २उ
त्वामर्भस्य हविषः समानमित्त्वां

३ १ २   ३ २
महो वृणते नान्यन्त्वत्॥ ३‡ ॥ ७

"मेधाकारं" प्रज्ञायाः कर्त्तारं "विदथस्य" यज्ञस्य "प्रसाधनम्" प्रकर्षेण साधकं "होतारं" देवानामाह्वातारं "परिभूतरम्" अतिशयेन शत्रूणा मभिभवितारं "मतिं" मन्तारं "यं" "त्वाम्" "अग्निम्" वयमृत्विजः वृणीमहे—इति शेषः। हे अग्ने! "त्वामित्" त्वामेव "अर्भस्य" अल्पस्यास्य "हविषः"

---

* 'इषितः—इषु इच्छायाम्, इच्छासंयुक्तः'—इति वि०।

† 'ध्रजांसि—वस्त्राणि'—इति वि०।

‡ ऋ० वे० ८, ४, १६, ३।

पुरोडाशादिकस्य भक्षणार्थमिति शेषः। "समानमित्" सहैव ऋत्विजः "वृणते" प्रार्थयन्ते "महः" महतः सोमात्मकस्य हविषः भक्षणार्थं त्वामेव वृणते "त्वत्" त्वत्तः "अन्यम्" अतिरिक्तं देवं "न" वृणते ॥

"परिभूतरं"-"परिभूतमम्"—इति छन्दोगबह्वृचानां पाठौ, "त्वामर्भस्यहविषः"-"तमिदर्भेहविषि"—इति, "इत्त्वाम्महो"-"तमिन्महो"—इति च ॥ २ ॥ ७

अथ द्वितीय-तृचे—प्रथमा।

३ १ २ ३ १र २र ३ १ २
पुरूरुणाचिद्ध्यस्त्यवोनूनंवांवरुण।

२ ३१ २ ३ २
मित्रवꣳसिवाꣳसुमतिम्॥ १ * ॥

हे मित्रावरुणौ ! "वां" युवयोः "पुरूरुणा" [प्रथमार्थे तृतीया (३,१,८५)† पुरोरपि बहु उरु बहुतरम् अथवा पुरु च तदुरु च पुरूरु] अत्यन्तं बहुतरमित्यर्थः, तादृक् "अवः" रक्षणं "नूनं" निश्चयेन "अस्ति हि" [हि प्रसिद्धौ; चिदिति पूरणः] हे "वरुण!" हे "मित्र!" "वां" युवयोः "सुमतिम्" अनुग्रहबुद्धिम् "वंसि"‡ सम्भजेयम्॥ १ ॥

---

* ऋ० वे० ४, ४, ८, १।

† "अत्र सोः सुपांसुलुगित्याकारः"—इति ऋ०-व्याख्या।

‡ 'वंसि—वासयसि'—इति वि०।

अथ द्वितीया।

२ २ ३ १ २ ३ १ ३ १ २
ताबा॑ सम्यगद्रुह्वाणेषमश्यामधामच।

३ १ २
वयंवांमित्रास्याम ॥ २* ॥

हे "अद्रुहाणा" हे अद्रोग्धारौ! "ता" तौ प्रसिद्धौ "वां" युवां सम्यक् स्तुमइति शेषः। स्तोतारः "वयम्" "इषम्" अन्नं "धाम च" आधारम् "अश्याम" प्राप्नुयाम। हे "मित्रा" मित्रावरुणौ! "वां" स्तोतारो वयं "स्याम" भवेम सर्व्वदा इति शेषः, युवाभ्यां स्वभूता वा स्याम॥

"धामच"-"धायसे"—इति पाठौ, "मित्रा"-"रुद्रा"—इति च॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ १ २ ३ २
पातन्नोमित्रापायुभिरुतत्रायेथा सुत्राता।

३ २ ३ १ २ ३ १ २
साह्यामदस्यून्तनूभिः॥ ३† ॥ ८

हे "मित्रा" मित्रावरुणौ देवौ! युवां "नः" अस्मान् "पायुभिः" रक्षणैः "पातं" रक्षतम्। "उत" अपिच "सुत्राता" शोभनेन

* ऋ० वे० ४, ४, ८, २।

† ऋ० वे० ४, ४, ८, ३।

त्राणेन "त्रायेथां" पालयेथाम् [इष्टप्राप्तग्रनिष्ट-परिहार-भेदेन भेदः —स्त्रोत्रादि-वैकल्याच्छत्रोर्वा त्रायेथाम् अभिमत-प्रापणेन रक्षतमित्यर्थः ]। वयञ्च "तनूभिः" * पुत्रादिभिः सहिताः स्त्रोयैरङ्गैर्वा "दस्यून्" शत्रून् "सह्याम" अभिभवेम ॥

"मित्रा"-"रुद्रा"—इति पाठौ, "त्रायेथां"-"त्रायेताम्" —इति, "सह्याम"-"तुर्याम"—इति च ॥ ३ ॥ ८

अथ तृतीय-तृचे †—

प्रथमा ।

३ २ ३ १ २ ३ २ ३ १र २र

उत्तिष्ठन्नोजसासहपीत्वाशिप्रे अवेपयः ।

१ १ ३ २ ३ २

सोममिन्द्रचमूसुतम् ॥ १‡ ॥

हे "इन्द्र !" त्वं "पीत्वा" "ओजसा" बलेन "सह" "उत्तिष्ठन्" ¶ "शिप्रे" हनू "अवेपयः" अकम्पयः मदावेशादिति भावः । किं पीत्वा ? "चमू" चम्वोरधिषवण-फलकयोः "सुतम्" अभिषुतम् "सोमम्" ॥

"पीत्वा"-"पीत्वी"—इति पाठौ ॥ १ ॥

---

* 'तनूभिः—त्रिभिः युष्माभिः शरीरैरभिष्टुतैरिति वाक्यशेषः'—इति वि० ।

† 'ऐन्द्रसाम्यम्'—इति वि० ।

‡ य० वे० ८, ३९ = ऋ० वे० ६, ५, २८, ४ ।

¶ 'उत्तिष्ठन्—ओजसा सह वीर्येण उत्थानं कुरु । सोमं पिब । पीत्वा शिप्रे हनूनासिके च मत्तः सन् अवेपयः'—इति वि० ।

अथ द्वितीया ।

१ २ ३ १ २　३ १र　३र
अनुत्वारोदसीउभेस्पर्द्धमानमददेताम् ।
२ ३　१ २ ३ १ २
इन्द्रयद्दस्युहाभवः ॥ २* ॥

हे "स्पर्द्धमान" शत्रुभिः सह स्पर्द्धाङ्कुर्वाण इन्द्र ! "त्वा" त्वाम् "अनु" लक्ष्य "उभे रोदसी" उभे अपि द्यावापृथिव्यौ "मददेतां" हृष्येताम् "यद्" यदा "दस्युहा भवः" शत्रूणां हन्ता भवसि, तदा मददेतामिति सम्बन्धः ॥

"स्पर्द्धमानमददेतां"-"कृष्यमाणमकृपेताम्"—इति पाठौ ॥२ ॥

अथ तृतीया ।

१ २३१ २　३१र ३र　३ १ २
वाचमष्टापदीमहन्नवस्रक्तिमृतावृधम् ।
२ ३　१　२ ३क २र
इन्द्रात्परितन्वम्ममे ॥ ३† ॥ ९

"अष्टापदीम्" अष्टाभिर्दिग्भिर्विदिग्भिश्चाष्टापदीं,‡ "नवस्रक्तिम्" उपरिस्थितेनादित्येन नवस्रक्तिम् आसु दिक्षु व्याप्तामि-

---

* ऋ० वे० ६, ५, २८, ५ ।

† ऋ० वे० ६, ५, २९, ३ ।

‡ 'अष्टापदीम्—चत्वारो वेदाः शाखाणि च अष्टापदानि'—इति वि० ।

त्यर्थः*, "ऋतावृधं" यज्ञस्य वृद्धिं कुर्वन्तीं,† "वाचं" स्तुतिमयीं; परिपूर्णात्‡ "तन्वं तनूं न्यूनां सतीम्¶ "अहम्" "परि ममे" न्यूनयन्तां करोमीत्यर्थः§। कार्त्स्न्येन स्वरूपं स्तुत्या विषयीकर्तुमशक्यत्वादितिभावः॥

"ऋतावृधम्"-"ऋतासृप्रम्"—इति पाठौ॥ २॥ ९

अथ चतुर्थ-तृचे ||—

प्रथमा।

१ २   ३ २ ३ २   १र   २र<br>
इन्द्राग्नीयुवामिमेऽ३भिस्तोमा अनूषत।

१ २   ३ २<br>
पिबतꣳशम्भुवासुतम्॥ १** ॥

हे "इन्द्राग्नी!" "युवाम्" "इमे" "स्तोमाः" स्तोतारः†† "अभ्यनूषत" अभिष्टुवन्ति। हे "शम्भुवा" सुखस्य भावयितारा विन्द्राग्नी "सुतम्" अभिषुतम् अस्मदीयं सोमं "पिबतम्"॥ १॥

---

* 'नववास्तिं—नव वास्तयः कोणाः ताः बर्हिष्पवमानाः ऋचो नव अथवा नववास्तिं त्रिवृत्स्तोमिकम्'—इति वि०।

† 'ऋतावृधम्—ऋतो यज्ञः अथवा ऋत मन्त्रं तं वर्द्धयतीति ऋतावृधम्'-इति वि०।

‡ 'इन्द्रात् परि—उपरि'—इति वि०।

¶ 'तनुं—शरीरम्'—इति वि०।

§ 'ममे—मिनोति'—इति वि०।

|| 'ऐन्द्राग्नमाज्यम्'—इति वि०।

** ऋ० वे० ४, ८, २४, २।

†† 'स्तोमाः त्रिवृत्पञ्चदशादयः'—इति वि०।

अथ द्वितीया ।

२ ३　　१ २ ३ १ २ ३ १ २ ३ १ २
यावाꣳसन्तिपुरुस्पृहोनियुतोदाशुषेनरा ।
१ २ ३ २ ३ १ २
इन्द्राग्नीताभिरागतम् ॥ २* ॥

हे "नरा" नेतारौ ! "इन्द्राग्नी !" "वां" युवयोः स्वभूताः "पुरुस्पृहा" पुरुभिर्बहुभिः स्पृहणीयाः† "दाशुषे" हवींषि दत्तवते यजमानार्थम् उत्पन्नाः "नियुतः" अश्वाः "सन्ति"‡ हे इन्द्राग्नी ! "ताभिः" "नियुद्भिः" सह "आगतम्" आगच्छतम् ॥ २ ॥

अथ तृतीया ।

२ ३ १ २　　३ २ ३ १र　　१र　　३ २
ताभिरागच्छतन्नरोपेदꣳसवनꣳसुतम् ।
१ २ ३ १ २
इन्द्राग्नीसोमपीतये ॥ ३¶ ॥ १०

हे "नरा" नेताराविन्द्राग्नी ! [ सूयतेऽभिसूयतइति सवनः सोमः] "इदं सवनम्"§ इमं सोमं "सुतम्" अभिषुतम् "उप"

---

* ऋ० वे० ४, ८, २४, २ ।

† 'पुरुस्पृहा—पुरुस्पृहौ बहुभिः स्पृहणीयौ'—इति वि० ।

‡ 'सन्ति—बहुवचनमिदं द्विवचनस्य स्थाने द्रष्टव्यम्, सतः'—इति वि० ।

¶ ऋ० वे० ४, ८, २४, ४ ।

§ 'इदं प्रातःसवनं सुतं सोमम्'—इति वि० ।

प्रति* [यद्वा, इदं प्रातःसवनम् उप अस्मिन् सवने सुतमभिषुतं सोमं प्रति] "ताभिः" नियुद्भिः† आगच्छतम्। किमर्थम्? "सोमपीतये" अस्य सोमस्य पानार्थम् ॥ ३ ॥ १०

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य

तृतीयः खण्डः‡ ॥ ३ ॥

---

अथ चतुर्थ-खण्डे¶, प्रथम-तृचे—

प्रथमा।

१ २ ३ १ २ ३ १र २र ३ १ २

अर्षा सोम द्युमत्तमोभि द्रोणानि रोरुवत्।

२ ३ २ ३ २ ३ २

सीदन्योनौ वनेष्वा ॥ १§ ॥

हे "सोम" पवमान! "द्युमत्तमः" अतिशयेन दीप्तिमान् "वनेषु" अरण्येषु मध्ये॥ "योनौ" स्वकारण-भूते पर्वतादि-

---

* 'उप—समीपे'—इति वि०।

† 'ताभिः—तृतीया-बहुवचनमिदं, स्त्रीलिङ्ग व्यत्ययेन तैः पालनैः'—इति वि०। "नियुतो वायोः"—इति च निघ० १, १५, १०।

‡ 'उक्तं प्रातःसवनम्'—इति वि०।

¶ 'इदानीं माध्यन्दिनं सवन मभिधीयते'—इति वि०।

§ ऋ० आ० ६, १, २, ७ (२भा० ६२ पृ०) = ऋ० वे० ७, २, ४, ४।

‖ 'वषु—उदकेषु'—इति वि०।

स्थाने * "आसीदन्" सर्वतो गच्छंस्त्व "द्रोणानि" [प्रयोग-बाहुल्यापेक्षमेतत् बहुवचनम्] द्रोणकलशान्† "अभि" लक्ष्य "रोरुवत्" पुनः पुनः भृशं वा शब्दं कुर्वन् "अर्षा" ‡ आगच्छ दशापवित्रमध्यान्निर्गतः सोमः अविच्छिन्न-धारया द्रोणकलशे पतन् शब्दं करोति खलु ॥

"यौनौवनेष्वा"-"श्येनोमयोनिमा"—इति पाठो ॥ १ ॥

अथ द्वितीया ।

३ १र　२र　३ २३१२　३ १ २
अप्सा इन्द्राय वायवे वरुणाय मरुद्भ्यः ।
१ २　३ १ २
सोमा अर्षन्तु विष्णवे ॥ २¶ ॥

"अप्साः" वसतीवरी-नामधेयानामपां सम्भक्तारः [वनषण सम्भक्तौ (भ्वा, प०); "जनसनेति (३,२,६७,) विट्, आत्वं विड्-वनोरिति (६,४,४१,) तादृशाः] "सोमाः" "अर्षन्तु" द्रोण-कलशमागच्छन्तु । किमर्थम्? "इन्द्राय" सर्वदेवानां प्रथमत एव इन्द्रः सोमान् पिबति, तस्मात् तदनु वायुरुक्तः तस्मै च "वायवे", तदनन्तरं वरुणः सोमान् पिबति तस्मै च "वरुणाय", ततो "मरुद्भ्यः" एतन्नामकेभ्यो देवेभ्यः, "विष्णवे" सर्वजगद्-

---

* 'यौनौ—द्रोणकलशे'—इति वि० ।

† 'द्रोणानि—द्रोणकलशसम्बन्धानि पात्राणि'—इति वि० ।

‡ "द्व्यचोऽतस्तिङः (६,१,१३५)"—इति दीर्घः ।

¶ऋ० वे० ७, २, ५, १ ।

व्यपिने एतन्नामकाय देवाय च,—एतेभ्यः सर्वेभ्यः सोमा आगच्छन्त्वित्यर्थः ॥

"सोमा अर्षन्तु"-"सोमो अर्षति"—इति पाठौ ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २ २ १ २
इषन्तोकायनोदधदस्मभ्यꣳसोमविश्वतः।

१ २ ३ १ २
आपवस्वसहस्रिणम् ॥ ३* ॥ ११

हे "सोम!" त्वं "नः" अस्माकं "तोकाय" † पुत्राय "इषम्" अन्नं "दधद्" विदधत् प्रयच्छन् "सहस्रिणं" सहस्र-सङ्ख्याकं धनं "विश्वतः" सर्वतः "अस्मभ्य" च "आपवस्व" आ आपय अस्मभ्यं पुत्राय च अन्न-धनादिकं प्रयच्छेत्यर्थः ॥ ३ ॥ ११

१ र र १ २ १ र र
॥ शाकलम् ॥ अर्षासोमा२द्युमत्तमाः। अभिद्रोणा

२ १र २ १ १ र २ १
निरोंहू२३वात्। सायिदा२न्। योनौवना २ ३ यि।

१ २ ५ १र २ १
ऊम्। षू३४५वोऽ६हायि ॥(१) अप्साइन्द्रा२यवायवायि।

र २१ २ १ १ २ १
वरुणायमरुद्भ्या२३याः। सोमा२ः। आर्षन्तुवा२३यि।

---

* ऋ० वे० ७,२,५,१,।

† 'पुत्राय पौत्राय'—इति वि०।

१ २ ५ १ २ २ १
ऊम्। ष्णा ३ ४ ५ वो६हायि ॥(२) इषन्तोका २यनोद

२ १ २ ११ २ १ १
धात्। अस्मभ्य२सोमविश्वा२३ताः। आपा२। वाख

२ १ १ २ ५
सद्दा२३। ऊम्। स्ता३४५यिणो६हायि(३) ॥ ३* ॥ [१]

२ २ २ १ २ २ १ २
॥ वार्शम् ॥ अर्षासोमा। द्युमात्ता३माः। अभि

२ १ ७ ३ ५ १ २ २
द्रो। णा। निरोरक्ष२३४वात्। साथिदन्यौना२उ।

६ २ १२ १ २ ५२ २ २ २
ई३या। वने। पूरवा२३४औहोवा ॥(१) अप्सा३इन्द्रा।

१ २ २ १ २ २ १ ७ ३ १
यवाया३वायि। वरुणा। या। मरुद्भ्या२३४याः। सो

२ ६ २ १ ३ ५ २ २
माअर्षा३। ई३या। तुवि। ष्णा२वा२३४औहोवा ॥(२)

२ २ १ २ २ १ १ ७
इषन्तोका। यनोदा३धात्। अस्मभ्यम्। सो। मवा

३ ५ १ २ ६ २ १
२यिश्वा२३४ताः। आपवस्वा३। ई३या। सद्द। स्ता

३ ५ २ २ २ ५
२यिणा२३४औहोवा। ऊ३२३४पा(३) ॥ ४† ॥ [२]

१ २ १ २
॥ सन्तनि ॥ अर्षाहाउ। सोमद्युमा३१उवा२३।

* ऊ० गा० ३प्र० १अ० ३सा०।

† ऊ० गा० ३प्र० १अ० ४सा०।

५ १ र २र १र ३ ११११११ र १
तार३४माः। अभिद्रोणानिरोहवा२३४५त्। सीदान्हा

१ र २ ५ १ १र
उ। योनौवना३१उवा२३यि। पूर२३४वा ॥(१) अप्सा

र १र १२र१ २र १ २ ३ १ १ १ १ १र २
इन्द्रायवायवेवरुणायमरुद्भियार ३ ४ ५ः। सोमाद्दाउ।

१ २ ५ १ २र १र
आर्षन्तुवा३१उवा२३यिं। ष्णा२३४वे ॥(२) इषन्तोका

२र१ २ १ २र १ २ १ १ १ १ १र २ १
यनोदधदस्मभ्यꣳसोमविश्वता२३४५ः। आपाद्दाउ। वा

२ ५
स्वद्दा३१उवा२३। स्वो२३४णाम्(३) ॥ १३* ॥ [३]

१ २ र १र र २ १
॥ प्राकरवर्णम् ॥ आयिषाम्। तोकायनोदधात्।

२ १ र १ २ २
अस्मभ्यम्। सोमवा२यि। श्वता३१उवा२३। ऊ ३ ४

५ २र १ २ १ २ १ २
पा। आपवा२३स्वा। सद्द्विणा३माउवा२३। ऊ३२

५
३४पा(३) ॥ १९ ॥ [४]†

२ र १ २ १ र २ १ २ १
॥ जराबोधीयोत्तरम् ॥ इषन्तोकोवा। यानोदधात्। अस्मा

---

* ऊ० गा० ७प्र० २अ० १३सा०।

† ऊ० गा० १७प्र० १अ० १९सा०।

र १ र २ ४ ५
भ्यार२३९सो। मविश्वातोः। आपावा१श्वा२३सा। इ।

३ २
स्विणो३४५ई। डा(३) ॥ १५* ॥ [५]

१ र १ २ १
॥ मार्गीयवम् ॥ अप्सौहोवा। आयिन्द्रा२। यं

२ ३ ५ १ २र १ २ १र र
वाया२३४वायि। वरुणाय। मरुद्भ्या१या२ः। सोमाः।

२ २ ३ ५ १ ३ ५र र
द्दा। औ३होयि। आ२३४र्षा। द्व२वा२३४औहोवा।

२ १ ११११
ए३। प्पा.वा२३४५यि(२) ॥ २† ॥ [६] ११

अथ प्रथमखण्डे द्वितीयसूक्ते—

प्रथमा।

१ २ ३ २ ३ २ ३ २ ३ २ ३ १ २
सोमंउष्वाणःसोतृभिरधिष्णुभिरवीनाम्।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अश्वयेवहरितायातिधारयामन्द्रयायातिधारया ॥ १‡ ॥

---

* ज० गा० ११प्र० १अ० १५सा०।

† ज० गा० १९प्र० २अ० २सा०।

‡ ऋ० आ० ६, १, ३, ५ ( २भा० ८८पृ० )=ऋ० वे० ७, ५, १३, १।

"सोतृभिः" अभिषुण्वद्भिः ऋत्विग्भिः "स्वानः"* अभिषूयमाणः "सोमः" "अवीनां" "स्नुभिः"† ["सांम्प्रतम्स्नूनामुपसंख्यानम् (६,१,६३)"—इति सानु-शब्दस्य स्नु-भावः] समुच्छ्रितैर्वालैः पवित्रैः "अधि याति" अधिकं गच्छति। "उ"—इति प्रसिद्धौ। "अश्वया इव" वड़वया इव "हरिता" हरित-वर्णया धारया "याति" "मन्द्रया" मदकारिण्या द्रोणकलशमधिगच्छति॥

"उष्वाणः"-उषुवाणः"—इति पाठौ॥ १॥

अथ द्वितीया।

३ २उ ३ १ २ ३ १ २ ३१ २
अनूपेगोमान्गोभिरक्षाःसोमोदुग्धाभिरक्षाः।

३ २उ ३१२ ३ १र २र
समुद्रन्नसंवरणान्यग्मन्मन्दीमदायतोशते॥ २‡॥ १२

"गोमान्" गोयुक्तः सोमः "अनूपे" निम्ने देशेण कलशे "गोभिः" गोर्विकारैः क्षीरादिभिः§ सह "अक्षाः" क्षरन्ति।

---

* क्वचि तु "ष्वाणः"—इति मुर्द्धण्य-षकार-णकारोपेतः श्रूयते। तत्र "पुर्वपदात् (८, ३, १०६)"—इति षत्वम् सुतरां णत्वञ्च।

† "ष्णुभिः"—इति मूर्द्धण्यपाठौ क्वचि, "पूर्वपदात् (८, ३, १०६)"—इति च तत्र दीर्घः।

‡ 'अनूपे—उच्चैः प्रदेशे'—इति वि०।

§ 'गोभिः—उदक-सङ्घातैः गोभिर्वा'—इति वि०।

तदेवोच्यते—"सः" सोमः आत्मनोमिश्रणार्थं "दुग्धाभिः गोभिः" सह "अच्चाः" चरति [ चरतेर्लुङि रूपम् ]। किञ्च "समुद्रं न" यथा समुद्रमुदकानि गच्छन्ति तद्वत् "संवरणानि" सम्भजनीयानि रसरूपाणि अन्नानि* द्रोणकलशम् "अग्मन्" गच्छन्ति [ गमेर्लुङि च्लेर्लुकि रूपम् ] किञ्च "मन्दी" मदकरः सोमः "मदाय" मदार्थं "तोशते"† हन्यते अभिषूयते [ तोशतिर्वधकर्मा ( निघ० २,१९,२९) ] ॥ २ ॥१२

१ २ २ १ २२ १ २
॥ मानवोत्तरम् ॥ होवायि। सोमउष्वाणःसोतृभिः।

१ २ २ १ २२ १ ७ २
होवायि। आधिष्णुभिरवीनाम्। आश्वयेव। हारिता

२ ७ ३ ५ २ १ २ १
या३१। तिधा२रा२३४या। मन्द्राया२३४या३। ता२

३ ५२ २ ३ ५ १ २ १२२
यिधा२३४औहोवा। रा२३४या। होवायि। मन्द्रया

१२ २२ १ २ २ २ २
यातिधारया। होवायि। मन्द्रयायातिधारया। आ

७२ २२ १ ७२ २ ३ ५ २२ १
नूपे। गोमान्गो३१। भा२यिरा२३४वाः। सोमोदू२३

२ १ ३ ५२ २ ३ ५
ग्धा३। भा२यिरा२३४औहोवा। आ २ ३ ४ स्राः ॥(२)

* 'संवरणानि—उदकानि'—इति वि०।

† 'तोशते—तुशि व्याप्तौ व्यापयति'—इति वि०।

१ २ २ २१२ २२ १ २
होवायि। सोमोदुग्धाभिरच्चाः। होवायि। सोमोदु
२ २ ७ १ १ ७ १ ७ २
ग्धाभिरच्चाः। सामुद्रन्न। संवरणा३१। नियार२आ२३
५ २ १ २ १ ३ ५२ २
४५मान्। मन्दायिमा२३दा३। या२तो२३४औहोवा।
३ ५
ग्रा२३४ते(३)॥ ५* ॥[१]

१ १ १२ २ २ १ २
॥ आनूपन्ध्यस्वम्॥ सोमाःसोमाः। उग्वाणा३ःसोतृ
१ २ १ २ १
१भी२ः। आधिष्णुभिः। आवा१यिना२म्। आश्वा
१ १ २ २ २१२ २ १ २ २
२श्येवा२। हरितायातिधारा२३या। मन्द्राया३या३।
१ ४ २ ५ १ २ १ १ २
तार२३धा३। रा३४५योई्हायि॥(१) मन्द्रामन्द्रा। या
२ १ १ १ २२ २ १ २
याती३धारा१या२। मान्द्रयाया। तिधारा१या२।
१ १ १२ २ २ १ २ १२ २ २
आनू२पेगो२। मान्गोभिरा२३च्चाः। सोमोदूइग्धा३।
१ ४ २ ५ १२ २ १२ २
भार३यि३। राआ२३४५चोई्हायि॥(२) सोमाःसोमाः।
२ १ २ १ १२ २ २ १ २
दुग्धा३भायिरा१च्चा२ः। सोमोदुग्धा। भायिरा१च्चा

* ऊ० गा० ३ प्र० १ अ० ५ सा०।

१ १ १ र २१ २ १
२ः। साम्२द्रान्ना२। संवरणानियार३म्मान्। मन्दा
२ ३ १ ४ २ ५
यिमा३दा३। यार३तो३। प्पा ३ ४ ५ तो ६ हायि(३)
॥ ६* ॥ [२]

२र २ र ५र २ १
॥ वाभ्रम् ॥ सोमउष्वाणःसो। हा३हा३यि। तर
४ ५ १ १
३४। भिस्तुभीवा। अधाहो२यि। ष्णुभायिर्हो२।
१ २ १ २र १ २ २ १
आवा१यिना२म्। आश्वयेव। हरायिताया। तिधा
२ ४ १ १ १
उवा३। ऊ२३४पा। रया२। मान्द्रा२याया२।
१र २ ५र र ४ ३ ४र ५र र
तिधा। रा२या२३४ औहोवा ॥(१) मन्द्रयायातिधा।
२ २ १ र ५ १
हा३हा३यि। रा२३४। यारयोवा। मान्द्राहो२यि।
१र १ २ १ र२रर १ १
यायाहो२। तायिधा१राया२। आनूपेगो। मान्गो।
२ २ २ ५ १ १ १
भिश्राउवा३। ऊ३४पा। अश्रा२ः। सोमो२दूग्धा२भि
१ ३ ५र र ३र ४र ३र ४ ५र २
रा२। हा२३४ औहोवा ॥(२) सोमोदुग्धाभिरा। हा३

* ऊ०गा० ३प्र० १अ० ६सा०।

हा३यि। आ२३४। त्वाःत्वोवा। सोमोहो२यि। दुग्धाद्धो२। भायिरा१त्वा२ः। सामुद्रन्न। संवारा णां। नियाउवा३। ऊ२३४पा। अग्मा२न्। मान्दो २मादा२। यतो। म्रा२ता२३४औहोवा। ऊ२३२३४ पा(३)॥ ७* ॥ [३]

॥ अग्नेस्त्रिणिधनम् ॥ सोमउष्वा। णःसोतृ२३४भीः। अधायिष्णु भिरा३१उवा२३। वी२३४नाम्। आश्वाये२ ३४वा। हरितायातिधा३१उवा२३। रा२३४या। मा न्द्राया२३४या। तिधा३१उवा२३। रा २ ३ ४ या ॥(१) मन्द्रयाया। तायिधारा२३४या। मन्द्रयायातिधा३१उ वा२३। रा२३४या। आनूपे२३४गो। मान्गोभिरा३१ उवा२३। आ२३४त्वाः। सोमोदू२३४ग्धा। भिरा३१

* ऊ० गा० ३प्र० १अ० ७सा०।

५ २र र २
उवा२३ । आ२३४त्वाः ॥(२) सोमोदुग्धा । भायिरा२
५ २र १र र २ ५
३ऽत्वाः । सोमोदुग्धाभिरा३१उवा२३ । आ२३४त्वाः ।
२ ३ ५ २ १ २
सामूद्रा२३४न्ना । संवरणानिआ३१उवा२३ । आ २ ३ ४
५ २ ३ ५ २ १
ग्मान् । मान्दीमा२३४दा । यतो३आउवा२३ । आ
५
२३४ते(३) ॥ ८* ॥ [४]

५ ४ २ ४ ५र ४ ५ १
॥ अभीवर्त्तः ॥ मन्द्रा३या२या ऽतिधारयोवा । मान्द्र
२र र १ २ १ रर ५र
याया । तिधारा१या२ । आनूपगो३१२३४ । मान्गो ।
१ २ र १ २ ३ २ १
भायिरा१त्वा२ः । सोमोदू१ग्धा२ । भिरा३ । आ२३४
३ १ १ १ १
५ । आ२३४५ः(२) ॥ ३† ॥ [५]

५र र २ ४र ५ ४ ५ २र १ २ १
॥ कालेयम्‡ ॥ सोमोदू३ग्धाभिरत्वाः । सोमोदुग्धा ।
२ १ २ ३ २ १ २ ४र ५
भिरत्वा२३ः । समुद्रन्ना२ । सा२३४म् । वरणानि ।

* ऊ० गा० ३प्र० १अ० ८सा० ।

† ऊ० गा० ८प्र० २अ० ३सा० ।

‡ "महाकालेयम्"—इति ख० पु० पाठः ।

२ २ १ ३ २ २ ५ ४

आ३ग्मान् । मन्दा:यिमदौ । वा३४३ओ३४वा । यतो५

४

शतायि । ह्वो५ई । डा(२) ॥ ४* ॥ [६]

२ र २३ ५

॥ मानवाद्यम् ॥ मन्द्रयाया । तिधारा२३४या ।

२ ३ ५ १ २र र १ २

तायिधारा २ ३ ४ या । मान्द्रयाया । तिधारा१या २ ।

१र २र १ ७र २ १ ३ ५ १र २र

अ । नू । पे । गोमान्गो३ । भा२यिरा२३४त्वा: । सोमो

१ १ २ ५र र २ ५

दुग्धा२३ । भा२यिरा२३४औहोवा । आ२३४त्वा:(२) ।

॥ १२† ॥ [७]

२ र र र र ३

॥ आग्नेक्षिणिधनम् ॥ अनूपेगो । मान्गोभायिरा

५ २र १र र १

२३४त्वा: । सोमोदुग्धाभिरा३१उवा२३ । आ२३४त्वा: ।

२ ३ ५ २ १ र २

सामूद्रा२३४न्ना । संवरणानिया३१उवा२३ । आ २ ३ ४

५ २ ३ ५ २ १

ग्मान् । मान्दीमा२३४दा । यतो३आउवा२३ । प्रा२

५

३४ते(२) ॥ ३‡ ॥ [८]

---

* ज० गा० ८प्र० २अ० ४सा० ।

† ज० गा० ९प्र० २अ० १२सा० ।

‡ ज० गा० १९प्र० २अ० ३सा० ।

२र १
॥ वैष्णवाद्यम् ॥ सोमउष्वा। णःसो२तृभायिः। तृ
र १ र र र
भिः। अधिष्णुभिरा२वीनाम्। वीनाम्। अश्वयेवह
र र १ र र र १
रितायातिधा२रया। रया। मन्द्रयायातिधा२रया२३।
१ ३ ५र र २ र
रा२। या२३४। औहोवा ॥(१) मन्द्रयाया। तिधा२
१ र र र १ र र र
रया। रया। मन्द्रयायातिधा२रया। रया। अनूपे
र र र १ र र र १
गोमान्गोभिरा२क्षाः। क्षाः। सोमोदुग्धाभिरा२क्षा२३ः।
१ ३ ५र र २र र
आ२। क्षा२३४। औहोवा। सोमोदूग्धा। भि
१ र र र १
रा२क्षाः। क्षाः। सोमोदुग्धाभिरा२क्षा२३ः। आ२।
३ ५र र २र र १
क्षा२३४। औहोवा ॥(२) सोमोदुग्धा। भिरा२क्षाः।
र र र १
क्षाः। सोमोदुग्धाभिरा२क्षाः। क्षाः। समुद्रन्नसंव
र १ र र १
णानिया२ग्मान्। ग्मन्। मन्द्वौमदायतो२श्मता२३यि।
१ २ ५र र २ ५
श्मा२। ता२४३। औहोवा। ऊ२३४पा(३) ॥१८*॥ ९]

* ऊ० गा० २०प्र० १अ० १८ सा०।

१र २ र १ २ र
॥ वैष्णवोत्तरम् ॥ सोमः । सोमाः । उष्वाणःसोतृ
१ २ २ १ २ २ १
भिः । अधायिष्णू३भायिः । आऔ३हो । वायिना२
१ र र र २ २ २ १ २ २
म् । अश्वयेवहरितायातिधा१रा३या । मन्द्राऔ३हो ।
१ र २ १ ५ ४ ५
यायातिधो२३४वा । रा५यो६हायि(१) ॥ २०* ॥ [१०]

१र २ र १
॥ यौक्तस्रुचम् ॥ सोमउष्वाणःसो । तृभायि३ । अ-
२१ २ १ १र र र २
धिष्णुभिरवा२३यिनाम् । आश्वा२ । येवहरितायाति
१र २ १ १ र २ १ ५ ३
धारा२३या । मान्द्रा२ । यायातिधो२३४वा । रा२३४
५ २१ र २र १ र र २ १र
या ॥(१) मन्द्रयायातिधा । रया । मन्द्रयायातिधारा
२ १र र र र २१ २ १
२३या । आनू२ । पिगोमान्गोभिरा२३क्षाः । सोमा
१ २१ ५ ३ ५ १र २र
२ः । दुग्धाभिरो२३४वा । आ२३४क्षाः ॥(२) सोमोदु
१र २१ र र र २१ २ १
ग्धाभिरा । क्षाः । सोमोदुग्धाभिरा२३क्षाः । सामू२ ।
१ र २१ २ १ १ र २१
द्रन्नसंवरणानिया२३ग्मान् । मान्दी२ । मादायतो२३४
५ ३ ५
वा । शा२३४ते(३) ॥ १† ॥ [११] १२

* ऊ० गा० २०प्र० १अ० २०सा० ।

† ऊ० गा० २०प्र० २अ० १सा० ।

अथ तृतीय-तृचे—

प्रथमा ।

१ २ ३ १ २ २र ३ १र २र ३ १ २

यत्सोमचित्रमुक्थ्यन्दिव्यम्पार्थिवंवसु ।

१ २ ३ १र २र

तन्नःपुनानआभर ॥ १* ॥

हे "सोम !" "यत्" "चित्र" चायनीयम् "उक्थ्यम्"† स्तुत्यं "दिव्यं" दिवि भवं "पार्थिवं" पृथिवी-सम्बन्धञ्च यत् "वसु" धनमस्ति "तत्" "नः" अस्मभ्यम् "पुनानः" पूयमानः सन् "आभर" आहर ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १र २र ३ २ ३ १ २ ३ १ २

वृषापुनानआयूꣳषिस्तनयन्नधिबर्हिषि ।

२ ३ २उ ३ १ २

हरिःसन्योनिमासदः ॥ २‡ ॥

हे सोम ! "आयूंषि" यजमानादीनामृत्विजां जीवितकालान् "पुनानः" शुद्धान् कुर्वन् "वृषा" कामानां वर्षकस्त्वं "स्तनयन्" शब्दं कुर्वन् "अधि बर्हिषि" [ अधीति सप्तम्यर्थानुवादी ] आस्तीर्णे दर्भे "हरिः सन्" हरितवर्णः सन् "योनिं" स्वकीयं स्थानम्¶ "आसदः" आसीद ॥

---

* ऋ० वे० ६, ८, ९, १ ।

† 'उक्थ्य'—नामरूपम्'—इति वि० ।

‡ ऋ० वे० ६, ८, ९, २ ।

¶ 'योनिं—द्रोणकलशम्'—इति वि० ।

"आयूंषि"-"आयुःषु"—इति पाठौ, "आसदः"-"आसदत्"—इति च ॥ २ ॥

अथ तृतीया ।

३ १र २र ३ १ २ ३ १ २
युवꣳहिस्थःस्वःपतीइन्द्रश्चसोमगोपती ।
३ १ २ ३ १ २
ईशानापिप्यतन्धियः ॥ ३* ॥ १३

हे "सोम!" त्वम् "इन्द्रश्च" युवं हि" युवां खलु "स्वःपती" सर्वस्य स्वामिनौ "स्थः" भवथः । तथा "गोपती" गवां पालकौ† "ईशाना" ईश्वरौ सन्तौ "धियः" अस्मदीयानि कर्माणि‡ "पिप्यतम्" प्याययतम¶ ॥

"युवंहिस्थःस्वःपती"-"युवंहिस्वःस्वर्पती"-इति पाठौ ॥ ३ ॥ १३

२र १ २ १र
॥ ग्रैष्मवम् ॥ यत्सोमचित्रमुक्थायाम् । दिव्यम्पार्थिवंवसू । तन्नःपू२३४ना । नआ३भा५रा६५६ ॥(१) वृषा
२ १ ५ ३ २ ४ १ र
पुनानआयूꣳषी । स्तनयन्नधिबर्हिषायि । हरिःसा२३
र र १ २ १ २ १
४न्यो । निमा३सा५दा६५६ः ॥(२) युवꣳहिस्थःस्वःपा
५ ३ २ ४ २ १

---

* ऋ० वे० ६, ८, ९, २ ।

† 'गोपती—गवां पती, उदकानामादित्यरश्मीनां वा'—इति वि० ।

‡ 'धियः—बुद्धयः'—इति वि० ।

¶ 'पिप्यतं—पालयतम्'—इति वि० ।

१ १ २ २ २१२१२ ५ ३ २
ती। इन्द्रस्यसोमगोपतायि। ईशानार२३४पी। प्यता
४
इन्नाप्याइ५६:(३) ॥ ८* ॥ [१] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य
चतुर्थः खण्डः† ॥ ४ ॥

---

अथ पञ्चम-खण्डे‡ प्रथम-तृचे—

प्रथमा।

२ ३ १ २ ३ १ २ ३ १२ २२
इन्द्रोमदायवावृधेशवसेवृत्रहानृभिः।
२उ ३ २ ३ २ ३१२ २२ ३
तमिन्महत्स्वाजिषूतिमर्भेहवामहे
१२ २२३१२
सवाजेषुप्रनोविषत् ॥ १¶ ॥

---

* ऊ० गा० ३प्र० १अ० ९सा०।

† 'उक्तो माध्यन्दिनः पवमानः'—इति वि०।

अतोऽनन्तरं विवरणकृता इहैव ऋक्तोः प्रस्तुत्य ता एव व्याख्याताः। तथाहि—'इदानीं छष्ठानि भवन्ति, तत्र पञ्चमेऽहनि ऋक्चयः छष्ठं भवति ता उच्यन्ते ; —छन्दो-दैवत-ब्राह्मणानि परिभाषासिद्धानि "विदा मघवन्" सर्वज्ञः त्वं मघवन्'—इत्यादि। एवञ्चैतन्मते उत्तराग्रन्थीयएव महानाम्न्यार्चिकः न तु ग्रन्थान्तरच्छन्दआर्चिकपरिशिष्ट-भूतः, परमेतदतीव चित्रं मूलपुस्तकदर्शनेन तथात्वे व्याघातात्।

‡ 'बार्हद्गिरं ब्रह्मसाम'—इति वि०।

¶ ऋ० आ० ५, १, ३, २ (१भा० ८३६पृ०) = ऋ० वे० १, ६, १, १।

"वृत्रहा" वृत्रस्यावरकस्य वृष्टि-निरोधकस्य मेघस्यासुरस्य वा हन्ता। यद्वा, आवरकाणां शत्रूणां हन्ता, "इन्द्रः" "मदाय" हर्षार्थं "शवसे" [बलनामैतत् (निघ०२,९,२) बलार्थञ्च "नृभिः" यज्ञस्य नेतृभिः ऋत्विग्भिः "वृधे" स्तोत्र-शस्त्र-रूपाभिः स्तुतिभिः प्रवर्द्धितो बभूव। स्तुत्या हि देवता प्राप्त-बला सती प्रवर्द्धते। "तम् इत्" तमेवेन्द्रम् "महत्सु" प्रभूतेषु "आजिषु" सङ्ग्रामेषु "ऊति" रक्षां कुर्वन्तमितिशेषः "हवामहे" अस्माकं रक्षणाय आह्वयामहे। [ "उत" अपिच "ईम्" एनम् एवम्भूतमिन्द्रम्*] "अर्भे" अल्पे सङ्ग्रामे हवामहे अस्माभिराहुतः सचेन्द्रः "वाजेषु" सङ्ग्रामेषु "नः" अस्मान् "प्राविषत्" प्रावतु प्रकर्षेण रक्षतु॥ [ "ऊतिमर्भे"-"उतेमर्भे"—इति पाठौ॥ वावृधे—वृधेः कर्मणि लिट् तुजादित्वादभ्यासस्य दीर्घत्वम्†। नृभिः—"सावेकाच (६,१,१६८)"—इति प्राप्तस्य विभक्त्युदात्तत्वस्य "नृचान्यतरस्यां (६,१,१८४)"—इति प्रतिषेधः। हवामहे—ह्वयतेर्लटि "ह्वः (६,१,३२)"—इत्यनुवृत्तौ "बहुलञ्छन्दसि (६, १, ३४)"—इति सम्प्रसारणम् , अपि गुणावादेशौ। अविशत्—अवरक्षणे (भ्वा०,प०) लेटड़ागमः, "इतश्च लोपः (३, ४, ९)—इति इकारलोपः, "सिब्बहुलं लेटि (३,१,३४)—इति सिप् , तस्यार्द्धधातुकत्वात् वलादिलक्षण इट् ]॥ १॥

---

* ऋग्वेदीय-पाठमनुसृत्येदं व्याख्यानम्।

† परं चिन्त्यमेतत्—"संहितायामभ्यासस्य अन्येषामपिदृश्यतइति दीर्घत्वम्। तुजादित्वे हि तूतुजान इति वत् पदकाले दीर्घः श्रूयेत"—इति ऋग्वेद-व्याख्यावसरेऽयमेव सायणः।

अथ द्वितीया ।

२ ३ १ २ ३ १उ ३ १ २ ३ २
असिह्विवीरसेन्योसिभूरिपराददिः ।
१ २ ३ १ २ ३ १र २र
असिदभ्रस्यचिद्वृधोयजमानाय
३ १र २र ३ १ २
शिक्षसिसुन्वतेभूरितेवसु ॥ २* ॥

हे "वीर !" शत्रु-क्षेपण-कुशलेन्द्र ! त्वं "सेन्यः असि" सेनार्हो भवसि†, त्वमेकोऽपि सेना-सदृशो भवसीत्यर्थः । "हि"‡ यस्मादेवं तस्मात् प्रभूतं शत्रूणां धनं "पराददिः" परादाता शत्रूणां पराङ्मुखं यथा भवति तथा आदाता "असि" भवसि "दभ्रस्य चित्" अल्पस्य नामैतत्¶ अल्पस्यापि तव स्तोतुः§ "वृधः" वर्द्धयितासि, तथा "यजमानाय" यागं कुर्वते "सुन्वते" सोमाभिषवं कुर्वते पुरुषाय "शिक्षसि" अपेक्षितं धनं ददासि [ शिक्षतिर्दानकर्मा (निघ० ३,२०,८) ] यस्मात् "ते" तव वसु"

* ऋ० वे० १, ६, १, ९ ।

† विवरण-नये 'वीरसेन्यः'—इत्येकं पदम्, अत एवैवं व्याख्यातम्—'वीरसेन्यः—
३
वीराः सेन्या यस्य असौ वीरसेन्यः'—इति । परन्त्वेतत् पदग्रन्थ-विरुद्धम्, तत्र "वीर ।
१२र स
सेन्यः"—इति छेद-स्वरयोर्दर्शनात् ।

‡ 'हीति पदपूरणः'—इति वि० ।

¶ "दभ्रम्"—इति निघण्टौ तृतीयस्य द्वितीये ह्रस्वनामसु अष्टममिति दर्शनात् ।

§ 'दभ्रस्य—ध्वंसकस्य'—इति वि० ।

धनं "भूरि" बहुलं अक्षयं धनं विद्यते तस्मात् ददासीति भावः॥ [पराददिः—डु दाञ् दाने (जुहो०उ०) "आदृगमहन जन (३,२,१७१)"—इति कि-प्रत्ययः; लिड्वद्भावाद् द्विर्वचने ह्रस्वत्वम्, "आतो लोप इटि च (६,४,६४)"—इत्याकारलोपः। वृधः—वृधेरन्तर्भावितण्यर्थादिगुपध-लक्षणः कः। सुन्वते—"शतुरनुमः (६,१,१७३)"—इति विभक्तेरुदात्तत्वम्॥ २॥

अथ तृतीया।

२ ३ १ २  ३ १२ ३ १ २   ३ १ २
यदुदीरत आजयो धृष्णवे धीयते धनम्।
३ १  २ ३ २ ३ २ ३ २उ  ३ १ २र
युङ्क्ष्वा मदच्युता हरी कंहनः कं वसौ
२ १  २ ३ १ २
दधोऽस्माꣳइन्द्र वसौदधः॥ ३*॥ १४

[अत्रेदमाख्यानम्—'रहूगण-पुत्रो गोतमः कुरु-सृञ्जयानां† राज्ञां पुरोहित आसीत्, तेषां राज्ञां परैः सह युद्धे सति स ऋषिः अनेन सूक्तेन इन्द्रं स्तुत्वा स्वकीयानां जयं प्रार्थयामास'—इति। तस्य च तत्पुरोहितत्वं वाजसनेयिभिराम्नातम्—"गोतमो ह वै राहूगण उभयेषां कुरु-सृञ्जयानां‡ पुरोहित आसीत्"—इति।] "यत्" यदा "आजयः" सङ्ग्रामाः "उदीरते" उद्गच्छन्ति उत्पद्यन्ते तदानीं "धना" धनं "धृष्णवे" यो धृष्णुः धर्षयिता

---

* ऋ० आ० ५, १, २, ९ (१भा० ८४४पृ०) = ऋ० मं० १, ९, १, ३।

†, ‡ "सञ्जयानां"—इति रा० शा० पु० पाठः।

शत्रूणां जेता भवति तस्मै "धीयते" निधीयते, जयतो धनं भवतीत्यर्थः। हे इन्द्र! त्वं तादृशेषु युद्धेषु प्रवृत्तेषु "मदच्युता" शत्रूणां मदस्य गर्वस्य च्यावयितारौ "हरी" त्वदीयावश्वौ "युङ्क्ष्व" स्व-रथे योजय, योजयित्वा च कञ्चिद्राजानं तव परिचरणम-कुर्वन्तं "हनः" हन्याः कञ्चन त्वां परिचरन्तं "वसौ" वसुनि धने "दधः" स्थापय॥ [ उदीरते—ईरगतौ ( आ० ) आदा-दिकः, "अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे (६,१,१८६) धातु-स्वरएव शिष्यते, "यद्वृत्तान्नित्यम् ( ८,१,६६ )"—इति निघात-प्रतिषेधः। धना-—"सुपां सुलुक् ( ७,१,३९ )"—इति डादेशः। युङ्क्ष्वा—युजिर् योगे (रु० उभ०), अन्तर्भावित-ण्यर्थाल्लोटि "बहुलञ्छन्दसि (२,४,७३)—इति विकरणस्य लुक्, "द्व्यचो-ऽतस्तिङः (६,३,१३५)"—इति संहितायां दीर्घत्वम्। हनः—हन्तेर्लेटि सिप्यडागमः, हनस्य दधस्य चार्थप्रतीतिः "चादिलोपे विभाषा (८,१,६३)"—इति प्रथमायास्तिङ्विभक्तेर्निघात-प्रतिषेधः। वसौ—लिङ्ग-व्यत्ययः। दधः—दध धारणे (भ्वा०आ०) लेटि व्यत्ययेन परस्मैपदम्॥ ३॥ १४

१ २ १ र २
॥ सन्तनि॥ इन्द्रोहाउ। मादायवा३१उवा२३।
५ १ २र १र २ १ २ १ २र १२र१ र २
वा२३४र्इं। श्रवस्त्वेवृत्रहानृभिस्तमिन्महत्स्वाजिषूतिमर्भेह
र ३ ११११ १ २ १ २ १
वामहा२३४५यि। सवाहाउ। जायिषुप्रनो३आउवा२३।

५ १ २ १ र २ १ र र २ १ र २ र १ २ १
वा२३४यिषात् ॥(१) असिद्धिवीरसेन्योसिभूरिपरादादिर

२ १ २ १र २र र ३ १ १ १ १ १ २
सिदभ्रस्यचिद्वृधोयजमानायशिक्षसा२३४५यि। सुन्वाद्वा

१ र २ ५ १ २
उ। तायिभूरिता३१उवा२३यि। वा२३४सू ॥(२) यदु

१र २र १ र २ १ र२र १र २ १र २ १ २र १२र१
दीरतआजयोधृष्णवेधीयतेधनंयुङ्क्ष्वामदच्युताहरीकं

२ १ र ३ १ १ १ १ १ २ १ २
नःक्वंवसौदधा२३४५ः। अस्मान्हाउ। आयिन्द्रवसा३१उ

५
वा२३। दा२३४धाः(३) ॥ ४* ॥ [१] १४

अथ द्वितीय-तृचे†—

प्रथमा।

३ २ ३ १ २ ३ १ २
स्वादोरित्थाविषूवतो

१ २ ३क २र
मधोःपिबन्तिगौर्यः।

१ २र ३ १ २ ३
याइन्द्रेणसयावरी

२ ३ १ २ ३ २ ३
वृष्णामदन्तिशोभथा

२ ३ १ २ ३ १ २
वस्वीरनुस्वराज्यम् ॥ १‡ ॥

* ऊ० गा० १९प्र० २ख० ४सा०।

† 'रायोवाजीयमच्छःवाकसाम'—इति वि०।

‡ ऋ० आ० ५, १, २, ३( १भा० ८३२पृ० ) = ऋ० वे० १, ६, ६, ५।

"स्वादोः" स्वादुभूतस्य रसयुक्तस्य "इत्था विषूवतः" इत्थ मनेन प्रकारेण सर्वयज्ञेषु व्याप्तियुक्तस्य "मध्वः" मधोः मधुर-रसस्य सोमस्य "क्रियाग्रहणं कर्त्तव्यम् (१,४,३२ वा०)"—इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी। एवंविधं सोमं "गौर्यः" गौरवर्णा गावः पिबन्ति। या गावः "शोभथाः" [वचन-व्यत्ययः] इन्द्रेण सह शोभन्ते "वृष्णा" कामाभिवर्षकेन्द्रेण "सयावरीः" सह यान्त्यो गच्छन्त्यः सत्यः "मदन्ति" हृष्टा भवन्ति। ता इन्द्रपीतस्य सोमस्य शेषं पिबन्तीत्यर्थः। "वस्वीः" पयः-प्रदानेन निवासकारिण्यः ता गावः "स्वराज्यै" स्वस्येन्द्रस्य यत् "राज्यं" राजत्वं तदनु लच्यावस्थिताइति शेषः ॥ [ विषूवतः—विष्लृ व्याप्तौ (जु०उभ०) अस्मादौणादिकः कुप्रत्ययः ततो मतुप् ह्रस्वनुड्भ्यां मतुप् (६,१,१७६)"—इति मतुप उदात्तत्वम्, "अन्येषामपि दृश्यते (६,३,१३७)"—इति संहितायां दीर्घः, व्यत्ययेन मतोर्वत्वम्। मध्वः—"जसादिषु छन्दसि वा वचनम् (१,४,७)"—इति "घेर्ङिति (७,३,१११)"—इति गुणा-भावे यणादेशः। गौर्यः—"षिद्गौरादिभ्यश्च (४,१,४१)"—इति ङीष्, जसि यणादेशे "उदात्तस्वरितयोर्यणः (८,२,४)"—इति परस्यानुदात्तस्य स्वरितत्वम्। सयावरीः—या प्रापणे (अदा०प०) "आतोमनिन् (३,२,७४)"—इति वनिप्, "वनोरच (४,१,७)"—इति ङीब्रेफौ। मदन्ति—मदी हर्षे (दि०प०), श्यनि प्राप्ते व्यत्ययेन (३,१,८५) शप्। वस्वीः—"वस निवासे (भ्वा०प०)शृस्वृस्निहि (उ०,१,१०)"—इत्यादिना वसे रुप्रत्ययः, "धान्ये नित् (उ०१,८)"—इत्यनुवृत्तेराद्युदात्तत्वम्, "वोतो

गुणवचनात् (४४,४,१)"—इत्यत्र "गुणवचनात् ङीबाद्युदात्तार्थम् (४, १, ४४ भा०)"—इतिवचनात् वसुशब्दात् ङीपि यणादेशः, जसि "वाच्छन्दसि (६,१,१०६)"—इति पूर्वसवर्णदीर्घत्वम्। स्वराज्यं—"अकर्मधारये राज्यम् (६,२,३०)"—इत्युत्तरपदाद्युदात्तत्वम्] ॥ १ ॥

अथ द्वितीया।

१ २ २ ३ १ ३ १ २ ३ १ २
ताअस्यपृशनायुवःसोमꣳश्रीणन्तिपृश्नयः।

३ १र २र २ ३ ३ १ २ ३ १ २ ३
प्रियाइन्द्रस्यधेनवोवज्रꣳहिन्वन्तिसायकं

२ ३ १ २ ३ १ २
वस्वीरनुस्वराज्यम् ॥ २* ॥

"ताः" पूर्वोक्ताः† "अस्य" इन्द्रस्य "पृशनायुवः" स्पर्शनकामाः पृश्नयः नानावर्णाः‡ गावः इन्द्रेण पातव्यं "सोमं" पयसा "श्रीणन्ति" मिश्रीकुर्वन्ति, "इन्द्रस्य" "प्रियाः" प्रीतिहेतुभूताः "ताः" "धेनवः" "सायकं" शत्रूणामन्तकारकं¶ "वज्रं" आयुधं "हिन्वन्ति" शत्रुषु प्रेरयन्ति इन्द्रो यथा शत्रुषु वज्रं प्रेरयति तथेन्द्रस्य मदमुत्पादयन्तीत्यर्थः। अन्यत् पूर्ववत् ॥ [हिन्वन्ति

* ऋ० वे० १, ६, ७, १।

† 'ताः—धेनवः'—इति वि०।

‡ 'पृश्नयः—गावः'—इति वि०।

¶ 'सायकं—शरणभूतं चेपणीयम्'—इति वि०।

ह्रिवि प्रीणनार्थः (भ्वा० प०), इदित्त्वान्नुम् । सायकं—षो अन्त-कर्मणि (दि० प०), ण्वुल्यात्वे युगागमः ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ १ २　३ २ ३ १ २
ताअस्यनमसासहःसपर्यन्तिप्रचेतसः ।
३ २ १　३ १ २ ३ १
व्रतान्यस्यसश्चिरेपुरूणिपूर्वं
२　३ २ ३ १ २ ३ १ २
चित्तयेवस्वोरनुस्वराज्यम् ॥ ३ * ॥ १५

"प्रचेतसः" प्रकृष्टाज्ञानाः "ताः" गावः "अस्य" इन्द्रस्य "सहः" बलं "नमसा" स्वकीयेन पयोरूपेणान्नेन "सपर्यन्ति" परिचरन्ति "पुरूणि" बहूनि "अस्य" इन्द्रस्य "व्रतानि" शत्रु-बधादि-रूपाणि वीर्य-कर्माणि "सश्चिरे" सेविरे ज्ञातव्यतया इत्यर्थः । किमर्थम्? "पूर्वचित्तये" युयुत्सूनां शत्रूणां पूर्वमेव प्रज्ञापनाय† [ अनेन युध्यमाना वृत्रादयः सर्वे मरणं प्राप्ताः किमर्थं भवद्भिः प्राणास्त्यजन्त इति तेषां बोधनायेत्यर्थः । अन्य-त्पूर्ववत् ॥ पूर्वचित्तये—चिती सञ्ज्ञाने (भ्वा० प०), भावे क्तिन्, मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ॥ ३ ॥ १५

* ऋ० वे० १, ६, ७, २ ।

† 'पूर्व-चित्तये—पूर्व-प्रसादनाय'—इति वि० ।

४र ३र ४ ३र ४ ५र २ २ ३र ४र ४
॥ श्यैतम् ॥ स्वादोरित्थाविषू । वता३४औहोवा ।
१ र २ १ ० ५ ५ १र र २
माधोःपिब । तिगौरियार३४ः । ओ६हा । याइन्द्रे ण
१र २र १ २ १ ३ ५
सयावरी२ । णोमार३दा । तिशो२ । भा२३४था ॥(१)
३र ४ ३ ४ ५र ३ २ ३र ४र ५ १ २र
ताअस्यपृश्नना । युवा३४औहोवा । सोमं श्रीण । ति
१ ० ५ ५ २ १र २ र १ १र १
पार्श्वयार३४ः । ओ६हा । प्रियाइन्द्रस्यधेनवोव । ज्रा
२ १ ३ ५ ३र ४ २
द्धा२३यिन्वा । तिसा२ । या२३४काम् ॥(२) ताअस्यन
४ ५र ३ २ ३र ५र ५ १ १ १ ०
मसा । सद्दा३४औहोवा । सापर्य्यन्ति । प्रचायितसा
५ ५ २ १र २ र १ २
र३४ः । ओ६हा । व्रतान्यस्यसश्चिरेपू । रूणा२३यिपू ।
३ ५ १ र २ २ १
वर्चा२यि । ता२३४यायि । वस्वीरनुस्वा३रा । ऊम्मायि ।
३ ५र र २ ५
जा२या२३४औहोवा । वा२३४सू(३) ॥ ४ * ॥ [१] १५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य

पञ्चमः खण्डः† ॥ ५ ॥

---

* ऋ० गा० १०प्र० १अ० ४सा० ।

† 'उक्तं माध्यन्दिनं सवनम्'—इति वि० ।

अथ षष्ठे खण्डे,* प्रथमतृचे—

प्रथमा ।

१ २ ३ १र २र२ १र २र ३ १
असाव्यꣳशुर्मदायाप्सुदक्षोगिरिष्ठाः ।

३ २उ ३ १ २
श्येनोनयोनिमासदत् ॥ १ † ॥

"गिरिष्ठाः" पर्वत-जातः "अंशुः" सोमः "मदाय" मदार्थम् "असावि" अभिषुतः "अप्सु" वसतीवरीषु "दक्षः" प्रवृद्धश्च भवति। किञ्च "श्येनो न" यथा श्येनः पक्षी वेगेनागत्य स्थानमासीदति तद्वदयं सोमः "योनिं" स्वकीयं स्थानम् "आसदत्" आसीदति ॥ १ ॥

अथ द्वितीया ।

१ १र २र ३१२ ३ २ ३ १र २र ३ २
शुभ्रमन्धोदेववातमप्सुधौतन्नृभिःसुतम् ।

१ २ ३ १ ३ १ २
स्वदन्तिगावःपयोभिः ॥ २ ‡ ॥

यत् "देववातं" देवैः प्रार्थितं¶ "शुभ्रं" शोभनम् "अन्धः" अन्नस्वरूपं "नृभिः" नेतृभिः "सुतम्" अभिषुतम् "अप्सु"

* 'इदानीं तृतीय-सवनमुच्यते'—इति वि० ।

† ऋ० आ० ५, २, ४, ७ ( २भा० २२४० )=ऋ० वे० ७, १, २४, ४ ।

‡ ऋ० वे० ७, १, २४, ५ ।

¶ 'देववातं—देवानां भक्षणीयम्'—इति वि० ।

वसतीवरीषु "धौतं" शोधितं सोमं "गाव:" पशव: "पयोभि:" आशिरै: "स्वदन्ति" स्वादयन्ति ॥

"धौतंसुतं"-"धूत:सुत:"—इति पाठौ ॥ १ ॥

अथ तृतीया।

२ ३ २ ३१र २र ३१ २ ३१२
आदीमश्वन्नहेतारमशूशुभन्नमृताय।
२३१२ ३१२
मधोरसꣳसधमादे ॥ ३ * ॥ १६

"आत्"† अनन्तरं "हेतारं" प्रेरकम्‡ "ईम्"¶ एनं "मधो:" मधुरस्य सोमस्य "रसं" "सधमादे" यज्ञे "अमृताय" अमरणाय "अशूशुभत् ऋत्विज: शोभयन्ति। तत्र दृष्टान्त:— "अश्वं न" यथा प्रेरका अश्वं सङ्ग्रामे शोभयन्ति तद्वत् ॥

"हेतारं"-"हेतार:"—इति पाठौ, "मधो:"-"मध्व:"—इति च ॥ ३ ॥ १६

१ २ १ २
॥ सन्तनि ॥ असाहाउ। वायाꣳशुर्मा३१उवा२३।
५ २ १ र २ ३ २ र २ १
दार३४या। अप्सुदक्षोगिरिष्ठा१:। श्येनोहाउ। ना
र १ ५ २ १
योनिमा ३१ उवा २ ३। सा २ ३ ४ दात् ॥(१) शुभ्रम

* ऋ० वे० ७, १, २५, १।

†, ¶ "आत्"—"ईम्"—इत्येतावुपसर्गौ—इति वि०।

‡ 'हेतारं—शीघ्रगामिनम्'—इति वि०।

२र र १ र २ १२र १ २ ३ २ २ १
मन्धोदेववातमप्सुधौतन्नृभीःसुता१म्। खदाहाउ। ता
२ २ ५ १र २र १ २ १
यिगावःपा३१उवार२३। यो२३४भीः ॥(२) आदीमश्वन्न
र २र १ र २ १ २र ३ १ १ १ १ १ २ १
ह्वेतारमग्ढ्ग्ड्भनन्मृतायार२३४५। मधोर्हाउ। रास ँ
१ ५
सदाधा३१उवा२३। मा२३४दे(३) ॥ १० * ॥ [१]

॥ गौषूक्तम् ॥ १ र २ १ र र २
असाव्य ँ ग्ड्ुम्मौ। हौहोवाहायि।
र १ २ १ र २ १
दाया। अप्सुदचोगिरो२। ऊवायि। ऊवा२यि। ष्टा२ः।
र १र २ २ १ १
श्येनोनयोनिमौ२। ऊवायि। ऊवा२यि। सादार२त्।
१ ३ ५र र २ १ र २र र र २
होर्२वार२३४औहोवा ॥(१) ग्ड्भ्रमन्धोदेवौ। हौहोवाहा
र १ २ १ र २ १
यि। वाताम्। अप्सुधौतन्नृभौ२। ऊवायि। ऊवा
१ १ र २ १
२यि। सूता२म्। खदन्तिगावःपौ२। ऊवायि। ऊ
१ १ ३ ५र र
वा२यि। यौभा२३यिः। हो२वा २ ३ ४ औहोवा ॥(२)
१र २र १ २ १ र र १२ र १ र
आदीमश्वन्नहौ। हौहोवाहायि। ताराम्। अग्ढ्ग्ड्

* ऊ० गा० ६प्र० १ख० १० सा०।

२ १ १ १ २
भन्नमौ२। ऊवायि। ऊवा२यि। ताया२। मधोर

२ १ १
सꣳसधौ२। ऊवायि। ऊवा२यि। मादा २ ३ यि।

१ ५र र २ १ र २३ ११११
हो२वा२३४औहोवा। अग्निराऊता२३४५:(३)॥ १८* ॥[२]

१ र २ १
॥ ऐड न्ध चितम् ॥ असाव्यꣳशो। हायि। मदा

२ १ र २ २ २ र र ३
२३या। अप्सु३त्तोगा१यिरा३यिष्ठाः। श्ये नोनयो२३४

५ १ २ २ १ ४ ५
हायि। नायिमा२हायि। सदात्। औ२३होवा ॥(१)

२ १ २र१ २ १ र २
शुभ्रमन्धो। हायि। देववा२३ताम्। अप्सुधौतन्नृभा

२ २ ३ ५ १ २ २
१यिःसू३ताम्। स्वदन्तिगो२३४हायि। वा:पा३हायि।

र १ ४ ५ १र२र १ २
योभायिः। औ२३होवा॥ (२) आदीमश्वो। हायि। न

१र २ १ र २ २ २ र ३
हेता२३राम्। अशूशुभन्नमा१र्ता३या। मधोरसो२३

५ १ २ २ र १ २ ४ ५
४हायि। साधा३हायि। मादा। औ३होवा।

हो५ई। डा(३) ॥ ४ † ॥ [३]

---

* ऊ० गा० ७प्र० २अ० १९सा०।

† ऊ० गा० १६प्र० १अ० ४सा०।

॥ अध्वर्य्यवंसोमसाम ॥ २ र　र　२
असाव्यᳪंशुर्म्मदाया ३ ए।
१　र　२र १र　२१　१
अप्सुदक्षोगिरिष्ठाः। श्येनोनयार२३। हायि। नायि
२　१ २　२　र र १　२
माउवा। सादाउवा३ ॥(१) शुभ्रमन्धोदेववाता३मे।
१ र　२ १　२　१
अप्सुधौतन्नृभिःसुताम्। स्वदन्तिगार२३। हायि। वाः
२　१ २　२र र　र र　२
पाउवा। योभाउवा३ ॥(२) आदीमश्वन्नहेतारा३मे।
१ र　र　२ १र　२　१ २
अशूशुभन्नमृताया। मधोरसार२३म्। हायि। साधा
१ २　२
उवा। मादाउवा३। ऊ३२३४पा(३) ॥ २ * ॥ [४] १६

अथ प्रगाथरूपे द्वितीय-सूक्ते†—

प्रथमा।

२ २ ३ २　३ २उ ३ १ २　३ १ २　३ २
अभिद्युम्नम्बृहद्यशइषस्पतेदिदीहिदेवदेवयम्।
१र　२र　३ १ २
विकोशम्मध्यमंयुव ॥ १ ‡ ॥

हे "इषस्पते" अन्नस्य पते! "देव!" स्तोतव्य सोम! "द्युम्नं" द्योतमानं "बृहत्" प्रभूतं "यशः" अन्नरूपं "देवयु"

---

* ऊ० गा० २०प्र० २अ० २सा०।

† 'श्यावनं साम'—इति वि०।

‡ छ० आ० ६, २, ४, २ ( २भा० १२६पृ० )=ऋ० वे० ७, ५, १८, ४।

देवान् कामयमानं हविर्लक्षणं त्वदीयं रसम् "अभि दीदिहि" अस्मभ्यमाभिमुख्येन प्रकाशय प्रयच्छेत्यर्थः । [यद्वा, हे सोम! यशोऽत्र देवयु देवानिच्छन्तं यजमानमभिलक्ष्य प्रकाशय । आमन्त्रितस्याविद्यमानवत्त्वेन (८,१,१९) पादादित्वादनिघातः । किञ्च "मध्यमम्" अन्तरिक्ष-स्थितं "कोशं" मेघं "वियुव" वृष्ट्यर्थं विगमय विश्लेषय ॥

"देवयु"-"देवयुः"---इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ ३ ३ २र ३ २ ३ २उ २ २ २ १ २
आवच्यस्व सुदक्षचम्वोः सुतोविशांवह्निर्नविश्पतिः ।
३ २ ३ १ २ ३ २ ३ २उ ३ १ ३ ३ १ २
वृष्टिन्दिवःपवस्वरीतिमपोजिन्वन्गविष्टयेधियः ॥ २ *॥ १७

हे "सुदक्ष" शोभन-बल ! "चम्वोः" अधिषवण-फलकयोः "सुतः" अभिषुतः त्वं "वह्निः न विश्पतिः" सर्वासां प्रजानां वोढा राजेव "विशां" प्रजानां वोढा सन् "आ वच्यस्व" आगच्छ कलशमापवस्व [वचेर्गत्यर्थस्य व्यत्ययेन श्यनि रूपम्! किञ्च त्वम् "अपः" अपाम् उदकादीनां "रीतिं" व्याप्तां गतिं वृष्टिं "दिवः" द्युलोकात् "परस्व" कुरु। किं कुर्वन्? "गविष्टये" गामात्मन इच्छते यजमानाय "धियः" कर्माणि "जिन्वन्" प्रेरयन् ॥

"अपोजिन्वन्"-अपाञ्जिन्व"—इति पाठौ ॥ २ ॥ १७

---

* ऋ० वे० ७, ५, १८, ५ ।

२ ५ २
॥ च्यावनम् ॥ अभा२३४यि । द्यु म्नम् । बृहा२३४

५ ५ २ ३ ५ २ २ २
द्यशा६ः । हाउ । आयिषत्या२३४ता यि । द्दिवो हिदेव

२ ५ २ २ १
देवायू२३४५हायि । वायिकोशा३म्मा३ । ध्यामा२३५

२ १ ५ ६ २ ५
हा३४३यि । यू२३४वो६हायि ॥(१) विको२३४ । शम्म ।

२ ५ ५ २ ३ ५ ३
ध्यमा२३४युवा६ । हाउ । आवच्या२३४स्वा । सुदत्त

२ १ ५ १ २ २ १
चमुवोः ह्रुतो२३४हायि । वायिश्रांवा३क्का३यिः । नावा२३

२ १ ५ ५ ३
हा३४३यि । श्या २ ३ ४ तो६हायि ॥(२) विश्रा२३४म् ।

५ ४ ५ ५ २ २
वह्निः । नवा३४यिश्पतो६ः । हाउ । वाहिं न्दा२३४यि

५ २ २ १ ५ १ २ २
वाः । पवस्वरीतिमापो२३४हायि । जायिन्चान्गा३वा३यि ।

२ १ ५ ५
ष्टाया२३हा३४३यि । धा२३४यो६हायि(३) ॥ ११ * ॥ [१]

२ २ १ २
॥ ऐषिरम् ॥ अभिद्यु म्नम्बृहद्या३शाः । आयिषस्प

२ १ २ १ २ १
ते । दायिदी१हायिदे२ । वादा१यिवायू२म् । वायि

* ऊ०गा० ३प्र० १ख० ११सा० ।

२ ४ ५ ४ ५ २ १
को१शाम्मा२३। ध्यमोवा। यू५वो६हायि॥(१) विको
२ १ २ १० १ २
श्मध्यमंयू३वा। आवच्यस्व। सूदद्दाचा२। मूवो१ः
१ २ ४ ५ ४
सुता२ः। वायिशा१वाक्का२३यिः। नवोवा। श्या५तो
५ २१ २ १ २
६हायि॥(२) विश्वांवह्निर्न्नविश्पा३ती:। वाष्टिन्दिवः।
१० १ २ १ २
पावस्वारी२। नायिमा१पा२ः। जायिन्वा१न्गावा२३
४ ५ ४ ५
यि। ष्टयोवा। धा५यो६हायि(३)॥ १ *॥ [२]

२ १ २ ४ ५ २३ ५ २१
॥ सफम्॥ अभिद्यू३म्नम्। बृद्या२३४शाः। इष
२१ २१ १ २ २ २ ५
स्पतायिदी२। दीहिदायिवा३दा३यि। वा२२३४यूम्।
०१ १ २ २ ५
विको। श्मध्या३मा३म्। यू३४५वो६हायि(१)॥ १२†॥[३]

३ ४ ५ ० ३ ४ ५
॥ वाचःसाम॥ अभिद्युम्नाम्। होयि। बृहद्यशा
५ १ २१ १ २ १२२
६ए। आयिषस्पते। दायिदी१हायिदे२। वादेवयुम्।

---

* ऊ० गा० ५प्र० १अ० १सा०।

† ऊ० गा० ६प्र० १अ० १२सा०।

१ २ १ ४ २ ५
वायिकोश्माम्मार३। ध्यार३मा३म्। यू३४५वो६ हा

३ ४र ५ ३ ४ ५ ५ १ २
यि॥(१) विक्षोश्मम्मा। हौं। ध्यमंयुवा६ए। आवच्य

१० १र २ १ २०
स्व। हृदत्वाचा२। मूवोःसुतः। वायिश्वा१वाक्षा २३

१ ४ २ ५ ३ ४र
यिः। ना२३वा३यि। श्या३४५तो६हायि॥(२) विश्वा

५ २ ३ ४ ५ ५ १ २ १०
वक्षीः। हौयि। नविश्पता६ए। वार्ष्टिन्दिवः। पाव

१ २ १ २ १
द्वारी२। तायिमपः। जायिन्वा१न्गावा२३यि। ष्टार

४ २ ५
३या३। धा३४५यो६हायि(३)॥ १४ *॥ [४] १७

अथ तृतीय-तृचे*—

प्रथमा।

२ १र २र३ १ २ ३ २ ३ १ ३ १ २
प्राणाशिशुर्म्महीनाꣳहिन्वन्नृतस्यदीधितिम्।

२ ३ १ २ ३ १ २ ३ १ २ ३ २
विश्वापरिप्रियाभुवदधद्विता॥ १ †॥

---

* ऊ० गा० १४प्र० २अ० १४सा०।

* 'क्रोशं साम—इति वि०।

† ऋ० खा० ६, २, ३, ५ ( २भा० २१२५० ) = ऋ० वे० ७, ५, ४, १।

"प्राणा" ते [अनितेः शानचि "बहुलञ्छन्दसि ( २,४,७३ )" —इति विकरणस्य लुक्, "सुपां सुलुग् (७,१,३९)"—इति सुप-आकारादेशः ] यज्ञस्य प्रापयिता चेष्टयिता "मह्नीनां" महतीनां मंहनीयानां वा अपां "शिशुः" पुत्र-स्थानीयः सोमः "ऋतस्य" यज्ञस्य "दीधितिं" प्रकाशकं धारकं वा स्वीयं रसं "हिन्वन्" प्रेरयन् "विश्वा" सर्वाणि "प्रिया" प्रियाणि हवींषि "परिभुवत्" परिभवति व्याप्नोति। "अध" अपिच "द्विता" द्विधा भवति दिवि च पृथिव्याञ्च वर्त्तत इत्यर्थः ॥

"प्राणा"-"क्राणा"--इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३१ २ ३ १ १ २ ३ १२ २२ ३२
उपत्रितस्यपाष्योऽ३ऽरभक्तयद्गुहापदम्।

३ १ २ ३ १२ १२ ३ १ १ २ ३ २
यज्ञस्यसप्तधामभिरधप्रियम्॥ २* ॥

"त्रितस्य एतन्नामकस्य ऋषेस्तोतुर्मम यज्ञे "गुहा" गुहायां हविर्धाने वर्त्तमानयोः "पाष्योः" पोषणवद्दृढयोः अधिषवण-फलकयोः "पदं" स्थानं सोमः "यत्" यदा "उप अभक्त" सम-भजत। "अध" अनन्तरं "यज्ञस्य" "धामभिः" च धारकैः "सप्त" सप्तभिश्छन्दोभिः गायत्र्यादिभिः "प्रियम्" प्रीणयितारं सोमम् "अभि"ष्टुवन्ति ऋत्विजः [ अपि वा सप्त सर्पणशीलैर्वसतीवर्यादिभिरुदकैः सोममभिषुण्वन्ति ॥ २ ॥

* ऋ० वे० ९, ५, ४, २ ।

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १र २र ३ २

त्रीणित्रितस्यधारयापृष्ठेष्वैरयद्रयिम्।

२ ३ ३ १ २ ३ २ ३ १ २

मिमीतेअस्ययोजनाविसुक्रतुः॥ ३* ॥ १८

सोमः "त्रितस्य" मम यज्ञस्य स्वभूतानि "त्रीणि" सवनानि धारया आत्मीयया "वि धारया"। किञ्च पृष्ठेषु" सामसु "रयिं" दातारमिन्द्रम् "ऐरयत्" आयमतु "सुक्रतुः" शोभन-यज्ञः स्तोता "अस्य" इन्द्रस्य "योजना" संयोजनादीनि स्तोत्राणि "वि मिमीते" करोति† यस्मादेवं तस्मादिन्द्रं सामसु प्रेरय-त्वित्यर्थः॥

"ऐरयत्"—"एरया"—इति पाठौ॥ ३ ॥ १८

२र १ र २र १

॥ क्रोशम्॥ प्राणा। शिशुर्म्महो। नाम्। हो

१ २र १ र

ई२। हो। वाहोयि। हिन्वन्नृतस्यदीधिताथिम्।

२ १ २ २ १ २ २ १ २

विश्वापा१रा२३यि। प्री३याभू३वात्। अधा २ ३ हिता

२ १ र २र १ १

२४३॥(१) उपा। त्रितस्यपा। ष्योः। होई२। हो।

* ऋ० वे० ७, ५, ४, ३।

† 'विमिमीते--मा माने, मानं करोति'—इति वि०।

२र १ र २१ २
वाद्दोयि। अभक्तयद्गुह्वापदाम्। यज्ञास्या१सा २३।
२ १ २ २ १ २ २र१
:न्ना३धामा३भायि। अधा२३प्रिया३४३म् ॥(२) त्रीणी।
र २र १ १ २र २ र
त्रितस्यधार। या। द्दोई२। द्दो। वाद्दोयि। पृष्ठे
२ १ २ २ १ २ २
षै रयद्रयायिम्। मिमायिते१आ२३। स्या३योजा३ना।
१ २ १
विसू२३क्रतू३४३:। ओ२३४५ई। डा(३) ॥ १२*॥ [१]

२र र १ २ १
॥ त्रैतम् ॥ प्राणाशिशुर्महायिनाम्। हिन्वन्नृतस्य
र २ र र ऽ१ ५ १
दीधितायिम्। विश्वापरिप्रिया३भूवो२३४हायि। आ२
३ ५र र २ १ २ १ १ १ १ २
धा२३४औहोवा। ए३। द्विता२३४५ ॥(१) उपत्रितस्य
र १ २ १ र २ २ ऽ १
पाषायो: अभक्तयद्गुहापदाम्। यज्ञस्यसप्ताधा३माभी
५ १ ३ ५र र २ १ २ १ १ १ १
२३४हायि। आ२धा२३४औहोवा। ए३। प्रिया२३४५
२र र १ २ १ र र
म् ॥(२) त्रीणित्रितस्यधाराया। पृष्ठेषै रयद्रयायिम्।

---

* ऊ० गा० ३प्र० १अ० १६सा०।

२ र र   र ३ १   ५   १   २   ५र र
मिमीतेअस्थये३जाने२३४हायि। वा२यिस्२३४औहो

२   १ २ १ १ १ १
वा। ए३। क्रतू२३४५:(३) ॥ २* ॥ [२]

२र र   १र   २
॥ सुज्ञानम् ॥ प्राणाशिशूः। महीनाम्। हिन्व

१   र   २ र १   १र
न्नार्त्ता२। स्वदीधितायिम्। विश्वापारा२यि। प्रिया।

३   ५र र   १ २   २
भू२वा२३४औहोवा। अधद्वितए३ ॥(१) उपश्चिता। स्य

१ १   २ १   र १   २ १
पार्थियोः। अभक्काया२त्। गृहापदाम्। यज्ञस्यासा

१र   ३   ५र र   १ १
२। न्नधा। मा२भा२३४औहोवा। अधप्रियमे३ ॥(२)

२र   र १   २ र १   १
त्रीणिन्निता। स्वधारया। पृष्ठेषूवा२यि। रयद्रया

२ र १   १र   ३   ५र र
थिम्। मिमीतेआ२। स्थयो। जा२ना२३४औहो

१   २   १   १ १ १ १
वा। विसुक्रतुरे३उपा२३४५(३) ॥ २०† ॥ [३]

२र २   ३ २   ५
॥ दैवोदासम् ॥ प्राणा३१। शिशू३१२३४:। म।

१   २   ३ २   ३ १   ५र
हा३यिनाम्। हिन्वा३१न्। ऋता३१२३४। स्वदी।

* ज० गा० ४प्र० १अ० २सा०।

† ज० गा० ७प्र० २अ० २०सा०।

२ २ ३ २ ३२ ५र
धा३यितायिम्। विश्वा३१। परा३१२३४यि। प्रिया।
२ र ३ ० ३ २ १ ५ ३ २
भू३वात्। अधा३१। द्विता३। ओ२३४वा॥(१) उपा
१ २ ५र २ २ ३ २
३१। त्रिता३१२३४। स्वपा। षा३यो:। अभा३१।
२ २ ५र २ २ ३२ २
क्तया३१२३४त्। गुहा। पा३दाम्। यज्ञा३१। स्य
२ ५र २ २ ३२ ३ २
सा३१२३४। सधा। मा३भायि:। अधा३१। प्रिया३
१ ५ ३र २ ३ २
म्। ओ२३४वा॥(२) त्रीणी३१। त्रिता३१२३४। स्य
५र २ २ ३ २ २२ ५
धा। रा३या। पृष्ठा३१यि। ध्रुवा३१२३४यि। रयत्।
२ २ ३ २ ३र २ ५ र
रा३यायिम्। मिमा३१यि। तेश्रा३१२३४। स्ययो।
२ ३ ३२ ३ २ १ ५ २
जा३नां। विसू३१। क्रतू३:। ओ२३४वा। ऊ२३४
५
पा(३)॥ २१*॥ [४]

१र र र १ २ १ २
॥अध्यम्॥ प्राणाशिशू२र्मं। ह्वीनोवा। ह्विन्वन्
१ १ ३र २ १ २र १ २ १र २ १
ता। स्वदीधितायिम्। विश्वापरिप्रियाभुवद। धार

* ऊ० गा० ७प्र० २ ख० २१सा०।

२ १र १ २ १
३। ह्विताउवा। ऊधिया२। ए२३हिया३४३। ओ२
३४५ई। डा(१) ॥ १४* ॥ [५]

१र१र१ ५ २ ३ ५
॥ पौष्कलम् ॥ प्राणाशा३यिभुः। मा२हा२३४यिनाम्।
२ १ २ १ २ ३ ५ २ १
ह्विन्वानृता। स्वादा२यिधी२३४तीम। विश्वापरायि।
७ ३ २ १ ३ १ १ १ ११ २ १ २
प्रिया२भ२३४५वा६५६त्। अथह्विता२३४५ ॥(१) उपत्री३
४ ५ २ ३ ५ २ १ २ १ २ ३
तस्य। पा२षा२३४यो:। अभाक्तयात्। गूहा२पा२३४
५ २ १ ७ ३ २
दाम्। यज्ञास्यसा। प्रधा२मा२३४५भा६५६यिः। अ
१ ३ १ १ १ १ २र १ २ ४ ५ २ ३ ५
धा२प्रिया२३४५म् ॥(२) त्रीणित्री३तस्य। धा२रा२३४या।
२ १ २ १ २ ३ ५ २ १ र
पृष्ठायिषुवायि। रायद्रा२३४यायिम्। मिमायितेआ।
७ ३ २ १२ १ १ १ १
स्ययो२जा२३४५ना६५६। विमुक्तू२३४५ः(३) ॥ २*॥ [६]

१र२ र १ २ १ २
॥ ऋध्यम् ॥ प्राणाशिशू२र्म्म। हीनोवा। हिन्वन्नृ
१ २ ३र २ १ २र १ २ १र २ १
ता। स्वादीधितायिम्। विश्वापरिप्रियाभुवद्। धा२३।

* ऊ० गा० ९प्र० १अ० १४सा०।

† ऊ० गा० ९प्र० ३अ० २सा०।

२ १र १ र १
ह्निनाउवा। अूधियार२ ॥(१) उपक्षितार२स्य। पाषियो

२१ २ १ २ १र२ १ २१ २१र २
वा। अभक्तयात्। गुहापदाम्। यज्ञस्य सप्तधाममभि

१ २ १र १र
र। धार२३। प्रियाउवा। अूधियार२ ॥(२) त्रीणित्रि

र १ २१र२१ २ ३२ १
तार२स्य। धारयोवा। पृष्ठेषुवायि। रयद्र्यायिम्।

र १र र १२र १ २ १र
मिमीतेअस्ययोजनावि। सूर२३। क्रताउवा। अूधि

१ २ १
यार२। एर३ह्यिा३४३। ओर२३४५ई। डा(३)॥ ५*॥ [७]

२२र र र १ २
॥ वारवन्तीयोत्तरम्॥ प्राणाशिशाऔहोहायि। मा

३ ५ २ १ ५ १ र र
हार३४यिनाम्। हिन्वानार३४हा। तस्यदीधितिंविश्वा

२ ३र ४र ५ १ २ ५ २ ३ ५
पा३४। औहोवा। इहार३४हायि। उद्भवार३४रायि।

२ १र२ १ ७ २ ३र ४र ५ १ २ ५
प्रियाभु। वादधहा३४। औहोवा। इहार३४हायि।

३र २ ५र ५ २ र प
औहो३१२३४। ता। एह्यिा६हा ॥(१) उपक्षिताऔ

१ २ ३ ३ ५ २ १ ५ १ र
होहायि। स्वापाषार३४यो:। अभाक्तार३४हा। यद्गुहा

* ऊ० गा० १२प्र० १ अ० ५ सा०।

२ ३र ४र ५ १ ३ ५ २ २
पदंयज्ञस्या३४ । औहोवा । इहा२३४हायि । उक्तवा२
५ २ १र २ १ ७ २ ३र ४र ५ १ ३
३४सा । प्रधाम । भायिरधप्रा३४ । औहोवा । इहा
५ ३र २ ५र ५
२३४हायि । औहो३१२३४ । याम् । एहियाइहा ॥ (२)
२र र र १ २ ३ ५ २ १
त्रीणित्रिताऔहोहायि । स्याधारा२३४या । पृष्ठायिषू
५ १र र २ ३र ४र ५ १ ३
२३४हायि । ऐरयद्रयिम्मिमीता३४ । औहोवा । इहा
५ २ ३ ५ २ १र २ १ ७ २
२३४हायि । उक्तवा२३४आ । स्ययोज । नाविस्तुक्ता३
३र ४र ५ १ ३ ५ ३र २
४ । औहोवा । इहा२३४हायि । औहो३१२३४ । तूः ।
५ १ ५ ४
एहियायाइहा । होऽ५इ । डा (३) ॥ ८* ॥ [८]

२र र १ र २ १
॥ वार्शम् ॥ प्राणाशिशूः । माहा ३ यिनाम् । दिव
र ७ १ ३ ५ र
श्चन्नृतस्यदीधि । तायिम् । विश्वा२पार३४रायि । प्रि
र २ ३ २ १ ३ ५र र
याभुवा३त् । ई३या । अध । दार्यिता२३४औहोवा ॥ (१)
२ १ ३ २ १ र
उपन्निता । स्यपाषा३योः । अभक्तयद्गुहाप । दाम् ।

* ऊ० गा० १५प्र० २ अ० ८सा० ।

१ ३ ५ १ र २ ऽ २ १
यज्ञा२स्या२३४सा। प्राधामभा३यिः। ई३या। अध।

२ ५र र २र १ २ २
प्रा२या२३४औहोवा ॥(२) त्रीणिचिता। स्वधारा३या।

१ र र ७ ३ ५ १ र
पृष्ठेषैरयद्र। यायिम्। मिमार्२यिते२३४आ। स्वायो

२ ३ २ १ ३ ५र र २
जना३। ई३या। विद्ध। क्रा२तू२३४औहोवा। ऊ

५
२३४पा(३) ॥ ८* ॥ [९] १८

अथ चतुर्थ-तृचे†—

प्रथमा।

१ २ ३ १ २ ३ २ ३ १ २ ३ १
पवस्ववाजसातयेपवित्रेधारयासुतः।

१ २ ३ १ २ ३ २ २ १ २
इन्द्रायसोमविष्णवेदेवेभ्योमधुमत्तरः ॥ १‡ ॥

हे "सोम!" "सुतः" अभिषुतः त्वम् "इन्द्राय" "विष्णवे" च अन्येभ्यो मित्रादिभ्यः "देवेभ्यः" "मधुमत्तरः" अतिशयेन माधुर्य्योपेतः सन् "वाजसातये" अन्न-लाभाय "पवित्रे" "धारया" "पवस्व" क्षर॥

---

* ऊ० गा० १६प्र० २अ० ८सा०।

† "गौरीवितं साम"—इति वि०।

‡ ऋ० वे० ७, ४, २८, १।

"वाजसातये"-"वाजसातमः"—इति पाठौ, "मधुमत्तरः"-"मधुमत्तमः"—इति च ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
त्वाꣳरिहन्तिधीतयोहरिम्पवित्रे अद्रुहः।
३ २ ३ २उ ३ १२ ३ १ २ ३ १ २
वत्सञ्जातन्नमातरःपवमानविधर्मणि ॥ २* ॥

हे "पवमान" पूयमान सोम! "वि धर्मणि" विविधं हविषां धारके† यज्ञे "अद्रुहः" द्रोह-वर्जिताः "धीतयः" अङ्गुलयः [धीतय इति अङ्गुलिनाम (निघ० २,५,७)] "हरिं" हरित-वर्णं "पवित्रे" स्थितं "त्वां" "रिहन्ति" लिहन्ति निष्पीड़नार्थं स्पृशन्तीत्यर्थः। तत्र दृष्टान्तः—"वत्सं जातं न मातरः"; 'मातरः' मातृ-भूता गावः उत्पन्नं 'वत्सं' यथा 'लिहन्ति' तद्वत् ॥

"धीतयः"-"मातरः"—इति पाठौ, "मातरः"-"धेनवः"—इति च ॥ २ ॥

अथ तृतीया।

१र २र ३ १र २र
त्वन्द्यान्चमहिव्रतपृथिवीञ्चातिजभ्रिषे।
१ २ ३ १ २ ३ १२ ३ २
प्रतिद्रापिममुञ्चथाःपवमानमहित्वना ॥ ३‡ ॥ १९

---

* ऋ० वे० ७, ४, २८, २।

† 'विविधे कर्मणि'—इति वि०।

‡ ऋ० वे० ७, ४, २८, ४।

हे "महिव्रत" महाकर्मन् सोम! "त्वं" "द्यां" द्युलकं "पृथिवीं च" "अति जभ्रिषे" अत्यन्तं बिभर्षि [ डुभृञ् धारणपोषणयोः (त०उ०), तस्य छान्दसे लिटि ( ३,४,६ ) सर्वविधीनां छन्दसि वैकल्पिकत्वात् अत्र इडागमः। अन्तरिक्षे सोमात्मना,- पृथिव्यां लता-रूपेणेति एवं लोकद्वयवर्त्तिनम् ]। हे "पवमान' क्षरन्! त्वं "महित्वना" महत्त्वेन युक्तः सन् "द्रापिं" कवचं "प्रति अमुञ्चथाः" प्रतिमुञ्चसि संवृणोसि ॥ २ ॥ १९

५ ३ २ ४ र ५
॥ गौरीवितम् ॥ पव। स्ववा३। जसातयायि।
१र र र १ र २ ४
पवित्रे धारयासुता२३ः। आयिन्द्रायसो३१२३। मवा
१ र र २ ४ ५ ४
५यिष्णवायि। दायिवेभ्योमा३१२३। धुमोवा। ता५
५ ५ र ३ २ ४ र ५ १
रो६हायि ॥(१) तुवाम्। रिहा३। तिधीतयाः। ह
र १ र र ४
रिम्पवित्रेअद्रुहाः। वात्सञ्ज्ञाता३१२३म्। नमा५तराः।
१ र २ ४ ५ ५ ५
पावमाना३१२३। विधोवा। मा५णो६हायि ॥(२) तु
३ २ ४ ५ १ र र
वम्। द्याञ्चा३। महिव्रता। पृथिवीञ्चातिजभ्रिषा२३

---

* 'द्रापिं—दातव्यम् *** केषां? यजमानानाम्'—इति वि०।

यि। प्रातिद्रापा२१२३यिम्। अमूपुचथाः। पावमाना
२१२३। मह्दोवा। त्वापुनो६हायि(३)॥ १३॥ [१]

॥ पार्थम्॥ ओ३हो३होयि। पव। स्ववा२। ज
साता२३४यायि। पवि। चे धा२। रयासू२३४ताः।
इन्द्रा। थसो२। मवायिष्णा२३४वायि। देव। भ्यो
मा२३। धुमा३न्तापुरा६५६ः॥(१) तुवाम्। रिहा२।
तिधायिता२३४याः। हरिम्। पवा२यि। चे अद्रू२३
४हाः। वत्सम्। जाता२म्। नमाता२३४राः। पव।
माना२३। विधा३र्म्मापुणा६५६यि॥(२) तुवम्। द्या
म्वा२। मह्विव्रा२३४ता। पृथि। वीच्चा२। तिजभ्री
२३४षायि। प्रति। द्रापा२यिम्। अमुचा२३४थाः।
ओ३हो३होयि। पव। माना२३। महा३यित्वापुना
६५६(३)॥ १४†॥ [२]

* ऊ० गा० ३प्र० १ख० १३सा०।

† ऊ० गा० ३प्र० १ख० १४सा०।

२ १ २ २ ५ २
॥ रयिष्ठम्॥ पवस्खवा। जसाताश्यायि। औ३हो

२ १ २ २ २ १ ३ १ १ १ १ २ २
३वा। इन्द्रायसोमविष्णवा२ ३ ४ ५ यि। इन्द्रायसो।

१ २ २ ५ २ २ २ १२ १२ १ २ ३ १
मवायिष्णा३वायि। औ३हो३वा। देवेभ्योमधुमत्तरा२

१ १ १ २२ २ २ १ २ २ ७ २ २
३४५ः। देवेभ्योमा। धुमात्ता३राः। औ३हो३वा॥(१)

२ २ १ २ २ ५ २ २ १
तुवाᳬरिहा। तिधायिता३याः। औ३हो३वा। हरि

२ २ १ ३ १ १ १ १ २ २ १ २ २
म्पवित्रे अद्र् हा२३४५ः। हरिम्पवायि। त्रे आद्र् ३हाः।

७ २ २ १ २२ २ २२ ३ १ १ १ १ २ २
औ३हो३वा। वत्सञ्जातन्नमातरा २ ३ ४ ५ः। वत्सञ्जा

१ २ २ ५ २ २ १ २२ १ २
ताम्। नमाता३राः। औ३हो३वा। पवमानविधर्म्म

३ १ १ १ १ २ २ १ २ २ ५ २ २
णी२३४५। पवमाना। विधर्म्मा३णायि। औ ३ हो ३

२ २ १ २ २ ७ २
वा॥(२) तुवन्द्याञ्चा। मह्ययित्रा३ता। औ ३ हो ३

२ १२ २ २ ३ १ १ १ १ २ २
वा। पृथिवीञ्चातिजभ्रिषा२३४५यि। पृथिवीञ्चा। ति

१ २ २ ५ २ २ १ २२ १ २ ३ १ १
जाभ्री३षायि। औ३हो३वा। प्रतिद्रायिममुञ्चथा२ ३

१ १ २ २ १ २ २ ५ २ २
४५ः। प्रतिद्रापायिम्। अमूञ्चा३थाः। औ३हो३वा।

१ २र १ २ ३ ११११ १ २र ३ २ २ १
पवमानमहित्वना२३४५। पवमानमहित्वना१। पवमाना।
१ २ २ ५ २ २ ५ २ २ ५ ३
महायित्वा३ना। औ३हो३वा। औ३हो३वा। ई३या।
५ २ ५ २ २ ५
ई३या ३ ४। हा। हाउवा३। ऊ३२३४पा(४) ॥१*॥ [३]
५ ३ २ २ २
॥ द्विरभ्यस्तत्वाष्ट्रीसाम॥ पव। स्ववा३। हा३हा।
३ २र १ ५ ३र २ २ २ ३ २र
जसातायार२३४यि। पवि। त्रधा३। हा३हा। रया
१ ५र ३ २ २ २ ३ २ १
सूतार२३४ः। इन्द्रा। यसो३। हा३हा। मविष्णार
र ५र ३र २ २ २ ३ २ १
३४यि। देवे। भ्योमा३। हा३हा। धुमा३हो२३
५ ४ ५ ५ र ३ २
४। वा। ता५रो६हायि॥(१) तुवाम्। रिहा३।
२ २ ३ २र १ ५ ३ १ २
हा३हा। निधीतायार२३४ः। हरिम्। यवा३यि। हा
२ ३र २ १ ५ ३र २ २
३हायि। चन्द्रह्रा२३४ः। वत्सम्। जाता३म्। हा
२ ३ २र १ ५ ३र २ २ २
३हायि। नमातारा२३४ः। पव। माना३। हा३हा
३ २ १ ५ ४ ५ ५
यि। विधा३हो२३४। वा। मा५णो६यायि॥(२) तुव

* ऊ० गा० ८प्र० १अ० १सा०।

२र १ २ २ ३ २ १ ५
म्। द्यावा२। हा३हा। महिन्नाता२३४। पृथि।

३र १ २ ३ ३ २ १ ५ ३र
वौचा३। हा३हा। तिजभीषा२३४यि। प्रति। द्रा

२ २ २ ३ २ १ ५ ३र
पा३यिम्। हा३हायि। अमुन्वाथा२३४ः। पव। मा

२ २ ३ ३ २ १ ५ ४
ना२। हा३हायि। मद्दा३हो२३४। वा। त्वा५नो६

५
हायि(३) ॥ ६* ॥ [४]

२ २ २ ४र ५र २
॥ श्यावाश्वम् ॥ पवा ३१। स्वा२वा। जसा। ता

४२ ५ १ र र २र १
३ये। एह्हिया। पा। विन्नेधारा। या। सुतार्ः।

१र र १ र २ ४ ५ १र
एह्हिया२। इन्द्रायसोमा३वा२यि। चा२३४वायि। ऐ

१र र र १र २ ४ २
हा२यि। एह्हिया२। देवेभ्योमाधू३मा२। ता२३४४रो

५ ३ १ २ ४ ५र २
६हायि ॥(१) तुवा३१म्। रा३यिह्। निधी। ता२३ः।

५ १ २ १
एह्हिया। ह्वा। रिम्यविन्ने। अ। द्रुहा२ः। एह्हि

१र २ ४ ५ २र
या२। वत्सञ्ज्ञातान्नो३मा२। ता२३४राः। ऐहा२

* ऊ० गा० ८प्र० २अ० ६सा० ।

१र १र २ ४ २
यि। एँहिया२। पवमानावा३यिधा३। मा३४५णो६

५ ३ २ २ ४ ५ २ ४
हायि॥(२) तुवा३१म्। द्या३च्च। महि। व्रा३त।

५ १ र र २ १
एहिया। पा। र्थिवीञ्चातायि। ज। भ्रिषा२यि।

१र १र २ ४ ५ २र
एहिया२। प्रतिद्रापायिमा३सू३। चा२३४था:। ऐ

२र १र २ ४ २
हा२यि। एहिया२। पवमानामा३हा३यि। त्वा३४५

५
नो६हायि(३)॥ १८*॥ [५]

२ र २ १
॥ आन्धीगवम्॥ पवस्ववाजसा१तायायि। पवित्रे।

र २ १ १ र २ र १ ३ १
धारा२३या। ऊम्मा२१५२। सुतइन्द्रायसोमविष्णवा२

१ १ १ १ २ २ २ २
३४५यि। दायिवा३उवा। भ्यो२मा। धू२३मा। त

१ २ ४ ५ २र २ १
रा। औ३होवा॥(१) त्वाᳲरिहन्तिधा१यितायाः। ह

२ १ १ र २ १ १ २र १
रिम्प। विच२३ञ्चा। ऊम्मा२१५२। द्रुहोवत्सञ्जातन्न

२र १ ३ १ १ १ १ १ २ २ १
मातरा२३४५:। पावा३उवा। मा२ना। वा २ ३ यि

* ज० गा० १५प्र० २अ० १९सा०।

२ १ २ ४ ५ २
धा । मणा । औ३होवा ॥(२) त्वन्द्यान्च्चमहा १ यिन्ना

२ १ २ २ २ १ २
ता । पृथिवीम् । चाता२३यिजा । ऊम्मा २१ऽ२ । भ्रि

२ २२ १ २ ३ १११ १ १ २ २ १
षेप्रतिद्रापिममुञ्चथा१२३४५ः । पावा३उवा । मा २ना ।

२ १ १ ४ ५ ४
मा२३हायि । त्वना । औ३होवा । हो५ई । डा(३) ।

॥ २०* ॥ [६]

२ १ ४२ ५ १२ ३ ५
॥ आकूपारे ॥ पवस्वा२३वाज । साता२३४यायि ।

१ १२ २२ १ २ २ २ १
पवा २यिस्वधा । रयासुता: । इन्द्रायासो २ । मविष्ण

१२ २ १२ १ ४ २ १
वायि । देवेभ्योमा२३ । धू२३मा३ । ता३४५ रो ६ हा

२ १२ ४ ५ २२ ३ ५ १
यि ॥(१) तुवा०रा२३यिहन्ति । धीता२३४या: । हरा

१ २२ १ २ १ २ १
२यिम्पवायि । चे अद्रुहा: । वत्सञ्जाता २म् । नमात

२ १ १ ४ २ ५
रा: । पवमाना२३ । वा२३यिधा३ । मा३४५णो६हा

२१ ४ ५ २ ३ ५ १
यि ॥(२) तुवन्द्या२३च्चम । द्विन्ना२३४ता । पृथा २यि

---

* ऊ० गा० १५प्र० २ख० २०सा० ।

१र २ १ ० १ १
वीत्वा। तिजभ्निषायि। प्रतिद्रापा२यिम्। अमुञ्च
२ १ १ ४ २ ४
थाः। पवमाना२३। मा२३हा३यि। त्वा३४५नो६हा
यि(३) ॥ २१* ॥ [७]

२ १र २ १
॥ आत्रेयम्॥ पवस्वा। जसातार२३यायि। पा
२र १र २ १र २ १र र र
वित्रे धा। रयासू२३ताः। इन्द्रायसो। माविष्णावा२
१र १ २ ४ ५ ५
यि। देवेभ्योऽमा३। धुमोवा। ता५रौ६हायि ॥ (१)
२ र १र १ १ २ १ २र १
तुवाꣳरिहा। तिधीतार२३याः। हारिपवि। त्रे अद्र
२ १ र ७५ १ २ २
२३हाः। वत्सञ्जातम्। नामातारा२ः। पवामा३नार।
४ ५ ४ ५ २ र १
विधोवा। मा५णो६हायि ॥(२) तुवन्त्वाञ्चा। मधिन्ना
२ १ १र १ १ २ १ र
२३ता। पार्थिवीत्वा। तिजभ्नी२३षायि। प्रतिद्रापिम्।
० १ २ २ ४ ५ ४
आमुञ्चाथा२ः। पवामा३ना३। महोवा। त्वा५नो
५
६हायि(३) ॥ १०† ॥ [८]

* ऊ० गा० १५प्र० २अ० २१सा०।

† ऊ० गा० १६प्र० १अ० १०सा०।

४ २ * ४ ३ ४र
॥ यज्ञायज्ञीयम् ॥ पवाऽ५स्व । वा३जा३सा३साता

५ १ र २ १ २ २ १ १ र
यायि । पाविेत्रेधा । रा३यामू३ता: । इन्द्रा २य । सो

२ १ २ २ १ र र
मा२३वा । ऊम्मायि । ष्णा३वायि । दायिवेभ्योमधुमा

ऽ१ २ १ २ १र र र
२त्तराउ ॥(१) रास्व । वा७रिहन्तिधीतयोहरिम्पवायि ।

२ १ २ २ १ र १ २ १
त्रे३आद्र२्वा: । वत्सा२जा । तन्ना२३मा । ऊम्मायि ।

२ २ १ र ऽ ३ १ २ १
ता३रा: । पावमानविधा २ म्मणाउ ॥(२) णायित्व । व

र र २ २ २ २ १
न्वान्वमद्दिव्रतपृथिवीव्वा । ती३जाभ्री३षायि । प्राता २

१र २ १ २ २ १ र
यिद्रा । पिमा२३मू । ऊम्मायि । चा३था: । पावमान

ऽ ३ २ ऽ१ १ १
मह्वा२यित्वनाउ । वा३४५(३) ॥ ९ ॥ [९]

१ ५ २र१र
॥ आसदस्ववम् ॥ पा२३४ । व । स्वा । जासात

१ र ५ २र१र
या२३यि । पा२३४ । वि । त्रेधा । रायासुता२३: ।

१ र ५ २र१
आ२३४यि । द्रमयसो । माविष्णवा२३यि । दा२३४यि ।

* ऊ० गा० १६प्र० २अ० ९सा० ।

२ २ ५ २१ २ १ २
वे। भ्योमा। धुमत्तरा३१उ ॥(१) तू२३४। वाम्।
५ २१ १२ १ ५
रिहा। तीधीतया२३ः। हा२३४। रिम्। पवायि।
२२ १ १ २ ५ २२ १२
त्रे अद्र्‌हा२३ः। वा२३४। त्वम्। जाताम्। नामा
१ २ ५ २२१ २
तरा२३ः। पा२३४। व। माना। वीधर्म्म णा३१उ ॥(२)
१ २ ५ २२ १ १
तू२३४। वम्। द्याम्चा। माह्विव्रता२३। पा२३४।
२ ५ २२ १ १
र्थिं। वीश्वा। तीजम्रिषा२३यि। प्रा२३४। ति।
२ ५ २२ १ १ २ ५
द्रापायिम्। आमुञ्चथा२३ः। पा२३४। व। माना।
२२ १ २ १ १ १ १
माह्वित्वना३१उ। वा२३४५(३) ॥ ३* ॥ [१०]

३ ५ २ ३२ ४ ५२ २
॥ वषट्कारनिधनम् ॥ पवस्ववाजसातये। पवस्वा
४२ ५ ४२ ५ २ २ ३ १ ७ १ २
३वाजसातयायि। पवित्रे धारा३यासुता २ः। रयासू१
१२ ३ २ २ १ ७
तार३ः। ओमो३वा। इन्द्रायसोमा३वायिष्णवा २यि।
१ २ १२ ३ २ २२२ १ ७
मवायिष्णा१वा२३यि। ओमो३वा। देवेभ्योमध३मात्त

* ऊ० गा० २०प्र० २अ० ३सा०।

रा२ः। धुमात्ता१रा२३ः। ओम्। ओ२। वा२३४।

औहोवा। ऊ२३८पा(१) ॥ २* ॥ [११]

॥ घृङ्घाघृङ्घीयाद्यम् ॥ त्वन्द्याञ्चमहिव्रता। पृथिवी

ञ्चातिजभ्री२३षाषि। प्रतिद्रापिममुञ्चा२३था:। पवमा

२३ना३। मा२। हित्वा३४औहोवा। ना२३

४५ (३) ॥ १२† ॥ [१२] १९

अथ पञ्चम-तृचे‡—

प्रथमा।

इन्दुर्वाजीपवतेगोन्योघा

इन्द्रेसोमःसहइन्वन्मदाय।

हन्तिरक्षोबाधतेपर्यरातिं

वरिवस्कृण्वन्वृजनस्यराजा ॥ १¶ ॥

---

* ऊ० गा० २३प्र० ३ख० २सा०।

† ऊ० गा० २३प्र० १ख० १२सा०।

‡ 'दाशस्पत्यं साम'—इति वि०।

¶ ऋ० आ० ६, १, ५, ८ (२भा० १३९५०)=ऋ०वे० ७, ४, १२, ५।

"इन्दुः" चरण-शील: "सोमः" "वाजी" बलवान् "गोन्योघा" गमनशील-नीचीनाग्र-रस-सङ्घातः "इन्द्रे" "सहः" बलकरं रसम् "इन्वन्" प्रेरयन् सोमः "मदाय" अस्य मदार्थं "पवते" चरति । किञ्च "रक्षः" राक्षस-कुलं हन्ति" हिनस्ति । किञ्च "अरातिं" शत्रुं "परि बाधते" परितः संहरति । कीदृशः ? "वरिवः" वरणीयं धनं "कृण्वन्" स्तोतृणां कुर्वन् "वृजनस्य" बलस्य "राजा" ईश्विता सोमइति ॥

"अरातिम्"-अरातीः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२ ३१ २ ३१ २   ३२
अधधारयामध्वापृचान

२ १र २र   ३ २ २
स्तिरोरोमपवतेअद्रिदुग्धः ।

२३ १ २  ३ १ २ ३ २
इन्दुरिन्द्रस्यसख्यञ्जुषाणो

३२ ३१ २  ३ १र २र
देवोदेवस्यमत्सरोमदाय ॥ २* ॥

"अध" अथ अनन्तरं "अद्रि-दुग्धः" ग्रावभिर्दुग्धोऽभिषुतः सोमः "मध्वा" मदकारिण्या "धारया "पृचानः" देवान् सम्पर्चयन्† "रोम"‡ अवि-रोमभिः कृतं पवित्रं "तिरः"

* ऋ० वे० ७, ४, १३, १ ।

† 'पृचानः—निष्पाद्यमानः'—इति वि० ।

‡ 'रोम—रोमाणि अविमयानि, दशापवित्रस्येत्यर्थः'—इति वि० ।

तिरस्कृत्य व्यवधायकं कृत्वा "पवते" कलशेषु चरति। किञ्च "इन्द्रस्य" "सख्यं" सखिभावं कर्म वा "जुषाणः" सेवमानो "देवः" द्योतमानः "मत्सरः" मदकरः* "इन्दुः" सोमः "देवस्य" इन्द्रस्य "मदाय" मदार्थं "पवते" चरति ॥ २ ॥

अथ तृतीया।

३ २ ३१ २ ३ २
अभिव्रतानिपवतेपुनानो

३ २ ३ २उ ३१२ ३र २
देवोदेवान्त्स्वेनरसेनपृञ्चन्।

२ ३ १२ ३१र २र ३
इन्दुर्धर्माण्यृतुथावसानो

२३ १ २ ३२ ३ १ २
दशक्षिपोअव्यतसानोअव्ये ॥ ३† ॥ २०

"धर्माणि" धारकाणि "व्रतानि" कर्माणि "ऋतुथा" ऋतौ काले "वसानः" आच्छादयन् "इन्दुः" सोमः "पुनानः" पूयमानः सन् "अभि पवते" कलशानभिलक्ष्य चरति। कीदृशः? "देवः" सङ्क्रीड़नशीलः‡ 'स्वेन आत्मीयेन "रसेन" इन्द्रादीन् "पृञ्चन्" सम्पर्चयन् संयोजयन्¶। तमिमं सोमं

* 'मत्सरः—मदनीयः भक्षणीयो वा"—इति वि०।

† ऋ० वे० ७, ४, १३, २।

‡ 'देवः—सोमः दानादि-गुण-युक्तः'—इति वि०।

¶ 'पृञ्चन्—तर्पयन् प्रीणयन् वा'—इति वि०।

"दश" दशसङ्ख्याकाः "क्षिपः"* [ अङ्गुलि-नामैतत् ( निघ० २,५,२ ) ] कर्मार्थं प्रेर्यन्त इति तत्सङ्ख्याका अङ्गुलयः "सातौ" समुच्छ्रिते† "अव्ये" अवि-भवे पवित्रे "अव्यत" गमयन्ति [यद्वा, तत्र पवित्रे पूयमानं सोमम् अव्यत गच्छन्ति। वी गत्यादिषु ( अदा०प० ) लङि व्यत्ययेनात्मनेपदम् ॥

"व्रतानि"-"प्रियाणि"—इति पाठौ ॥ ३ ॥ २०

॥ दाशस्पत्यम् ॥ इन्दुरौहोवाहाइया । वाजाउ । वा३ । हाउवा । पवतेगोनियोघाउ । वा३ । हाउ वा । इन्द्रायिसोमः । साहइन्वाउ । वा३ । हाउवा ३ । मा२दा२३४औहोवा । या२३४५ । हन्तायिरक्षो । बाधातायिपाउ । वा३ । हाउवा३ । मा२दा२३४औ होवा । ती२३४५म् । वरायिवस्कृ । एवन्वृजनाउ । वा३ । हाउवा३ । स्या२रा२३४औहोवा । जा२३

---

* 'क्षिपः—क्षिप्यन्त इति क्षिपः अङ्गुल्यः,—इति वि०

† 'उच्चे प्रदेशे'—इति वि० ।

१ १ २ र र र र १ २ र १
४५ ॥(१) अधीहोवाहाईया । धाराउ । वा३ । हाउ

र र १ २ २ १
वा । यामध्वापृचानाउ । वा३ । हाउवा । तिरोरो

२ १ २ १ १ ३
म । पवाताआउ । वा३ । हाउवा३ । द्वा२इदू२३४

५र र ३ १११ ३१ २ १ २
औहोवा । ग्धा२३४५: । इन्दूरायिन्द्रा । स्वसाखीया

२ १ ३ ५र र २ ११
उ । वा३ । हाउवा३ । जूर्षा२३४औहोवा । णा२३

११ २र१ २ १ २ २
४५: । देवोदायिवा । स्वमात्साराउ । वा३ । हाउ

१ ३ ५र र ३१११ २र र
वा३ । मा२दा२३४औहोवा । या२३४५ ॥(२) अभीहो

र र १ २ २ र १
वाहाईया । व्रताउ । वा३ । हाउवा । निपवतेपु

२ २ १ २ र १
नानाउ । वा३ । हाउवा । देवोदायिवान् । स्वेना

२ २ १ ३ ५र र
रासाउ । वा३ । हाउवा३ । ना२पा२ ३ ४ औहोवा ।

३११११ २१ २ १ २ २
चा२३४५न् । इन्दूर्वाम्र्मा । णियार्क्षयाउ । वा३ । हा

१ ३ ५र र ३१११ १
उवा३ । वा२सा२३४औहोवा । ना२३४५: । दशाहा

२ १ २ १ १ २
यिपो। अव्यानासाउ। वा३। हाउवा३। नोरश्रा
५र र ३ ११११
२३४औहोवा। व्या२३४५यि(३)॥ १५*॥ [१]

२ १ ऽ २ ३र २
॥ सम्यावैयश्वम्॥ ओ३हायि। ओ२हा। ओहा।
१ ऽ २ २ १र २१र २ ३ ४
इया२। ओ३हा३ए। इन्दुर्वाजी। पवते। गोनियो
५ २१रर २१ २ ३ ४ ५ २ १
घाः। इन्द्रे सोमाः। सहइ। न्वन्मदाया। हन्तिर
२ १र २३४५ २ १ २
क्षो। बा३धते। पर्य्यारातीम्। वरिवस्का। एवा३
१ २ २ ४ २ १ र
न्वृज। ना३४३। स्या३रा५जा६५६॥(१) अधधारा।
२ १ २ ३ ४ ५ २१रर २१र २
या३मधु। बापृचानाः। तिरोरोमा। पवते। अद्रि
४ ५ २ १ २ १ २ ३ ४ ५
दुग्धाः। इन्दुरिन्द्रा। स्या३ सखि। यज्ञपाणाः।
२र१रर २ १ २ २ ४
देवोदेवा। स्यमत्स। रो३४३। मा३दा५या६५६॥(२)
२ १ २ १ १ ३ ४ ५ २ररर २
अभिव्रता। नी३पव। तेपुनानाः। देवोदेवान्। स्वे
१ २ ३ ४ ५ ५ १ २ १ १ ३
३नर। सेनपृचान्। इन्दुर्ड्भर्म्मा। णी३क्रतु। थाव

* ऊ० गा० ६प्र० १अ० १५सा०।

४ ५ २ १ २ १र १ १
सानाः। ओ२हायि। ओ२हा। ओहा। इया२।

५ २ १ १ २१ २ २ ४
ओ२हा२ए। दशच्चियो। अव्यत। सा३४३। नो२आ

५व्या६५६यि(३)॥ ५*॥ [२] २०

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य

षष्ठः खण्डः† ॥ ६ ॥

---

अथ सप्तमे खण्डे,‡ प्रथम-सूक्त¶—

प्रथमा।

१ २ ३१ २ ३ १२
आतेअग्नइधीमहिद्युमन्तन्देवाजरम्।

२ ३ २ ३१ २ ३ २ ३ १ २ ३१र
यद्धस्यतेपनीयसीसमिद्दीदयतिद्यवी

२र ३ २ ३ १ २
ष१ᳲस्तोतृभ्यआभर॥ १॥

---

* ऊ० गा० ८प्र० २अ० ५सा०।

† 'यज्ञायज्ञीयमग्निष्टोम साम'—इति वि०।

‡ 'इदानीमुक्थसामानि'—इति वि०।

¶ 'सञ्जयं साम'—इति वि०।

§ छ० आ० ५, १, ४, १ (१भा० ८५४पृ०) = ऋ० वे० ३, ८, २२, ४।

हे "अग्ने!" "द्युमन्तं" दीप्तिमन्तम् "अजरम्" अजीर्णम् "ते" त्वाम् "आ" सर्व्वतः "इधीमहि" दीपयामः। "यत् ह" यदा खलु "ते" तव "स्या" सा "पनीयसी" स्तुत्या "समित्" दीप्तिं "दवि" द्युलोके "दीदयति" दीप्यते तदा हे अग्ने! "स्तोतृभ्यः" अस्मभ्यम् "इषम्" अन्नम् "आभर" आहर ॥१॥

अथ द्वितीया।

१ २   ३ २ ३ २   ३ १ २
आतेअग्नऋचाहविःशुक्रस्यज्योतिषस्पते।

१ २ ३ १ ३ १ २ ३ १ २३   १ २
सुश्चन्द्रदस्मविश्पतेहव्यवाट्तुभ्यꣳहूयत

३ १ २ ३ २ ३ १ २
इषꣳस्तोतृभ्यआभर॥ २*॥

हे "ज्योतिषस्पते" दीप्तेः स्वामिन् अग्ने! "शुक्रस्य" दीप्तस्य "ते" तुभ्यम् "ऋचा" मन्त्रेण सह† "हविः"‡ "आ" आभिमुख्येन "हूयते"। हे "सुश्चन्द्र" सुष्ठ्वाह्लादक! शोभन-हिरण्य! वा, हे "दस्म" शत्रूणामुपक्षपयितः!। शिष्टं गतम्॥

"ज्योतिषः"-–"शोचिषः"—इति पाठौ॥ २॥

---

* ऋ० वे० ३, ८, २१, ५।

† 'याज्यानुवाक्या-लक्षणया'—इति वि०।

‡ 'हविः—चरु-पुरोडाशादि-लक्षणम्'—इति वि०।

अथ तृतीया।

१र २र ३ १ २ ३ १ २
ओभेसुश्चन्द्रविश्पतेदर्वी श्रीणीषआसनि।
२ २ ३१ २ ३ १ २ ३
उतोनउत्पुपूर्याउक्थेषुशवसस्पत
१ २ ३ २ ३ १ २
इषᳪस्तोतृभ्यआभर॥ ३*॥ २१

हे "सुश्चन्द्र" शोभनाह्लादक! शोभन-हिरण्य! वा, अग्ने! "उभे" "दर्वी" दर्व्यौ हविः-पूर्णे जुहूप्रभृती "आसनि" आस्ये "आ श्रीणीषे" आश्रयसि पचसि वा "उतो"† अपिच "नः" अस्मान् "उक्थेषु" यागेषु‡ "उत्पुपूर्याः उत्पूरयः¶ फलैः। हे "शवसस्पते" बलस्य पालयितः!। इषमित्यादि गतम् ॥३॥२१

३र ४र ५ र २ ४ ५
॥ सञ्जयम् ॥ आतेअग्नइधी। माइहायि। द्यु म
२ ४र५ ४ ५ ३ ४ ३र ४र ३ ४र ५ र ४ ३ ४र ३ ४ ५
न्ताइन्देवअजरम्। यद्धस्यातेपनीयसी। समिद्दीदयता
ऽ २ ५ २ ५ ३र ४र ५ र
यि। ऊ३। ऊम्। द्या२३४वी ॥(१) आतेअग्नऋचा।
२ ४ ५ २ ४र ५ ४ ५ ३ ४ ३ ४
हा२वायिः। पूउक्रस्या२ज्योतिषस्पतायि। सुश्चन्द्रदस्म

* ऋ० वे० ५, ८, २३, ४।

†, ¶ 'उत उ—इति पदपूरणः'—इति वि०।

‡ 'उक्थेषु—सामसु'—इति वि०।

३ ४र ३ ५ र २ ४ ५ ऽ २र २ ५
विभ्यतेद्वव्यवाट्तुभ्यꣳहू। ऊ३। ऊम्। या२३४ता

३र ४र ५ २ ४ ५ र २ ४
यि॥(२) ओभेस्तुश्चन्द्रवि। भ्या३तायि। दवीश्रा३यि

रर ५ ४५ ५ ३र ४ ३ ४ र र ३र ४ ५ ऽ
णीषआसनायि। उतोनउत्युपूर्य्याउक्थ पुग्नवसा। हुं३

३ ५ १ र २ २ ऽ
३ऊम्। पा२३४तायि। इषꣳस्तोनृभ्या३आ। ऊं३।

२ २ ५
ऊम्२४म्। भा३४५रोई३हायि(३)॥ १६ *॥ [१]

१ र ५ र ४ ५
॥ सौम्मतम्॥ आ२३४। तेअग्नइधी। माहायि।

२ र १ २ ३ २ १ २ २
द्युमन्तन्देवा३। आ२३। जरमा। यद्धास्या३ता३यि।

१ २ ५ २ १ १ २ ३
पानीरया२३४सी। समिद्दीरदय। ता२३यि। द्यवि

२ १ र ५ र ४ ५ २
या॥(१) आ२३४। तेअग्नऋचा। हावायिः। शुक्र

र १ २ ३ २ १ २ २
स्यज्योती३। षा२३ः। पतआ। सुश्चान्द्रा३दा३।

१ २ ५ २ १ १
स्ववारयिप्रपा२३४तायि। द्रव्यवा२ट्तुभ्यम्। हू२३।

२ ३ २ १ र ५ ४ ५
यतआ॥(२) ओ२३४। भेस्तुश्चन्द्रवि। भ्पातायि।

---

* ऊ० गा० ३प्र० १ख० १६सा०।

१र र र २र १ २ ३ २ १ ० २
इवीश्रीणीषे३ । आ२३ । सनिया । उतोना२ऊ३त् ।

१ ३ ५ २ १र १ २ २ २
पुपू२रा२३४याः । उक्थेषू२श्राव । सा२३ः । पतश्रा ।

१ २ २ १ ४ २ ५
इषाᳫ्स्तो३त्टू३ । भ्या२३आ३ । भा३४५रो६हायि ।

॥ ६ * ॥ [१२] २१

अथ द्विती--यर्चे†—

प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ २३१
इन्द्रायसामगायतविप्रायबृहतेबृहत् ।

३ १२ ३ १ २ ३ १ २
ब्रह्मकृतेविपश्चितेपनस्यवे ॥ १ ‡ ॥

हे उद्गातारः! "इन्द्राय" "बृहत्" एतन्नामकं साम "गायत" उच्चरत । कीदृशाय? "विप्राय" मेधाविने "बृहते" महते "ब्रह्मकृते" वृष्टिद्वारा हविर्लक्षणस्यान्नस्य कर्त्रे "विपश्चिते" विदुषे "पनस्यवे" स्तुतिमिच्छते ॥

"ब्रह्मकृते"-"धर्मकृते"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १७प्र० १अ० ६सा० ।

† ऋ० आ० ४, २, ५, ८ (१भा० ७६९ पृ०)=ऋ० वे० ६, ७, १, १ ।

‡ 'महावैश्वामित्रं साम'—इति वि० ।

अथ द्वितीया ।

१र २र ३१२ ३१र २र
त्वमिन्द्राभिभूरसि त्वꣳ सूर्य्यमरोचयः ।
३ १२ ३१२ ३१ २
विश्वकर्म्मा विश्वदेवो महाꣳ असि ॥ २ * ॥

हे "इन्द्र!" "त्वम्" "अभिभूः" शत्रूणाम् अभिभविता "असि" भवसि" किञ्च "त्वम्" "सूर्यम्" आदित्यम् "अरोचयः" तेजोभिरदीपय,† किञ्च "विश्वकर्मा" विश्वस्य कर्त्तासि "विश्वदेवः" सर्वदेवश्चासि [ तथाच यजुर्ब्राह्मणम्—"अग्निं वा अन्वन्या देवता इन्द्रमन्वन्या" इति] अतो "महान्" सर्वाधिकोऽसि ॥२॥

अथ तृतीया ।

३ २ ३ १ १ ३ २ १२ ३ २ ३ २
विभ्राजञ्ज्योतिषा स्वा ऽ३ऽरगच्छो रोचनन्दिवः ।
३ १ २ ३ २ २
देवास्त इन्द्र सख्याय येमिरे ॥ ३ ‡ ॥ २२

हे "इन्द्र!" त्वं "ज्योतिषा" तेजसा "दिवः" आदित्यस्य "रोचनं" प्रकाशकं अधिकरणत्वेन "स्वः" स्वर्गं "विभ्राजत्" प्रकाशयन् "अगच्छः" अप्राप्नोः, किञ्च "देवाः" सर्वाः "ते" तव

* ऋ० वे० ६, ७, १, २ ।

† 'त्वं सूर्यमपि दीपयसे'—इति वि० ।

‡ ऋ० वे० ६, ७, १, ३ ।

"सख्याय" मित्रत्वाय "येमिरे" स्वं स्वमात्मानं नियमितवन्तः* अस्माकम् इन्द्रः सखा यथा स्यादिति सर्वे देवाः प्रयत्नमकार्षु-रित्यर्थः ॥ ३ ॥ २२

॥ सौमित्रम् ॥ औहोहोयि । औ२होइयि । ओ २२३४५वा६५६ । इन्द्रा२यसामगायता२३४५ । विप्रा२ यबृहा१त् । ब्रह्मकृते२विपश्चिते२३४५ । ए३ । पनस्य वे२३४५ ॥(१) त्वमिन्द्राभिभूरसी२३४५ । त्वꣳसूर्यमरो चया२३४५ः । विश्वकर्मा विश्वदेवा२३४५ः । ए३ । म हाꣳअसा२३४५यि ॥(२) विभ्राजज्ज्योतिषास्वा२३४५ः । अगच्छोरोचनन्दिवा१ः । देवास्तइन्द्रसख्याया२३ ४ ५ । औहौहोयि । औ३होइयि । ओ३२३४५वा६५६ । ए३ । येमिरा२३४५यि(३) ॥ १७ † ॥ [१] २२

* 'एतदुक्तं भवति—त्वदीयाय सख्याय चात्मानं नियेमिरे'—इति वि० ।

† ऋ० गा० ३प्र० १ख० १७सा० ।

अथ तृतीय-तृचे*—

प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २
असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।

१ २ ३ २उ ३ २ ३ २३ १ २
आ त्वा पृणक्त्विन्द्रियꣳ रजः सूर्यो न रश्मिभिः ॥ १ † ॥

हे "इन्द्र !" "ते" त्वदर्थं "सोमः" "असावि" अभिषुतोऽभूत् । हे "शविष्ठ" अतिशयेन बलवन्! अतएव "धृष्णो" शत्रूणां धर्षयितः! इन्द्र! "आगहि" देवयजनदेशमागच्छ, आगतञ्च "त्वा" त्वाम् "इन्द्रियं" सोमपानेनोत्पन्नं प्रभूतं सामर्थ्यम् "आ पृणक्तु" आपूरयतु । "रजः" अन्तरिक्षं "रश्मिभिः" किरणैः "सूर्यो न" यथा सूर्यः पूरयति तद्वत् [शविष्ठ--शवस्विन्-शब्दादिष्ठनि विन्मतोर्लुक्, "टेः (६,४,११५)"—इति टि-लोपः, पादादित्वान्निघाताभावः (८,१,१८)। गहि—गमेर्लोटि "बहुलंछन्दसि (२,४,७३)"—इति शपो लुक्, "अनुदात्तोपदेश (६,४,३७)"—इत्यादिना अनुनासिक-लोपः, तस्य असिद्धवदत्रा-भात् (६,४,२२)"—इत्यसिद्धत्वाद्धेर्लुगभावः ॥ १ ॥

* 'महावैश्वामित्रं साम'—इति वि० ।

† ऋ० सं० ४, २, ९, ६ (१भा० ७०९पृ०)=ऋ० वे० १, ६, ५, १ ।

अथ द्वितीया।

१ २ ३१२३२ ३१२३१२

आतिष्ठवृत्रहन्रथंयुक्तातेब्रह्मणाहरी।

३ १३ १३ २३ १ २ ३१२

अर्वाचीनꣳसुतेमनोग्रावाकृणोतुवग्नुना॥ २ *॥

हे "वृत्रहन्" शत्रूणां हन्तः इन्द्र! "रथम्"† "आ तिष्ठ" आरोह। यस्मात् "ते हरी" त्वदीयावश्वौ "ब्रह्मणा" स्तोत्र-लक्षणेन मन्त्रेण‡ "युक्ता" रथेऽस्माभिर्योजितौ ["सुपां सुलुग् (७,१,३९)"—इत्याकारः] तस्मात् त्वं रथमातिष्ठ। "ते मनः" त्वदीयं मनश्च 'ग्रावा" अभिषवार्थं प्रवृत्तः पाषाणः "वग्नुना" वक्तनीयेनाभिषवशब्देन ["वचेर्गश्च (उ० ३, ३३)"—इति नु-प्रत्ययो गकारश्चान्तादेशः] "अर्वाचीनम्"—अस्मदभिमुखं "सुकृणोतु" सुष्ठु करोतु॥ २॥

अथ तृतीया।

२ ३१२ ३२ ३१२

इन्द्रमिद्धरीवहतोप्रतिधृष्टशवसम्।

१२ ३१२ ३२३२३ १ २

ऋषीणाꣳसुष्टुतीरुपयज्ञञ्चमानुषाणाम्॥ ३ ¶॥ २३

॥ इति तृतीयः प्रपाठकः॥

---

* ऋ० सं० १, ६, ५, ३=य० वे० ८, ३३।

† 'रथं—रंहणीयं वेगवन्तम्'—इति वि०।

‡ 'ब्रह्मणा—त्रैविद्य-लक्षणेन अथवा ब्रह्मणा अन्नेन। अथवा ब्रह्मणा हिरण्य-गर्भेण'—इति वि०।

¶ ऋ० सं० १, ६, ५, २=य० वे० ८, ३४।

"अप्रतिष्कुतमवसं" केनाप्यधर्षितबलमहिंसितबलमित्यर्थः "इन्द्रमित्"*इन्द्रमेव "ऋषीणां"† वसिष्ठादीनां "मानषाणाम्" अन्येषां मनुष्याणाञ्च "सुष्टुतीः" शोभनाः स्तुतीः "यज्ञञ्च" "हरी" अश्वौ "उप वहतः" समीपं प्रापयतः। यत्र यत्र स्तुवन्ति यत्र यत्र यजन्ते तत्र सर्वत्रेन्द्रमश्वौ प्रापयत इत्यर्थः। [ मानुषाणाम् "मनोर्जातौ (४,१,१६१)"—इति मनु-शब्दादञ्, षुगागमश्च ]॥ "ऋषीणां सुष्टुतीः"-"ऋषीणाञ्चस्तुतीः"—इति पाठौ॥३॥ २३

॥ महावैश्वामित्रम्॥ हयायि । हया३ । ओहा ओहा । (एवन्त्रिः) असाविसो । मइन्द्राता२यि । शविष्ठधा । ष्णुवागाहो२ । आत्वापृणा । क्तुइन्द्राया २म् । रजःसूर्या । नरश्मायिभा२यिः ॥(१) आतिष्ठ वा । तृहन्नाथा२म् । युक्तातेब्रा । ह्मणाहारी२ । अर्वाचीनाम् । सुतेमाना२ः । ग्रावाकृणो । तुवमूना २॥(२) इन्द्रमिद्धा । रीवहाता२ः । अप्रतिधा । ष्टश

* 'इत्—इति पदपूरणः'—इति वि० ।

† 'ऋषीणां—दर्शन-समर्थानाम्'—इति वि० ।

वासा२म्। ऋषीणा३ऌम्। ष्टुतीर्ह्वा२। यज्ञस्यमा।
नुषाणा२म्। यज्ञस्या। मानुषाणा२म्। हयायि।
हया३। ओहाओहा। ३। हो४इडा। २। हो२३४५ई।
डा(३)॥ १८ *॥ [१]

॥ त्वष्ट्रीसाम †॥ असाविसो३हा। मइन्द्राता२यि।
प्रविष्ठधा३हा। घ्णु वागाही२। आत्वापृणा३हा। क्तु
इन्द्राया२म्। रजःसूर्यो३हा। नरा३हो२३४। वा।
श्मा५यिभो६हायि॥(१) आतिष्ठवा३हा। वृहन्नाथा२
म्। युक्तातेब्रा३हा। ह्मणाहारी२। अर्वाचीना३ऌ
हायि। सुतेमाना२ः। ग्रावाकृणो३हा। तुवा३हो२
३४। वा। ग्रे५नो६हायि॥(२) इन्द्रमिद्वा३हा। री
वहाता२ः। अप्रतिधा३हा। ष्टशवासा२म्। ऋषी

* ऊ० गा० ३प्र० १ख० १८सा०।

† 'त्वाष्ट्री'—इति ख० पु० पाठः।

र २ २ २ २र १ १ २ २ ३र २
णाॅसू३त्वा। ष्टुतीरूपा२। यज्ञस्वा३हायि। मानू३
१ ५ ४ ५
हो२३४। वा। षा५णो६हायि(३)॥ १८ *॥ [२]

५र ३र ४ ५ १
॥ गौरीवितम्॥ असा। विसो३। मइन्द्रतायि। प्र
र १ र २ ४
विष्ठधृष्णुवागहा२३यि। आत्वापृणा३१२३। तुई५द्रि
१ र२ ४ ५ ४ ५
याम्। राजःसूर्यो३१२३। नरोवा। श्मा५यिभो६हा
५र ३२ ४ ५ १र र
यि॥(१) आति। ष्ठवा३। वृहन्नृथाम्। युक्तातेब्रह्म
र १ र र २ ४ १
णाहरा२३यि। आर्वाचीना३१२३म्। सुते५मनाः। ग्रा
र २ ४ ५ ४ ५ ५
वाकृणो३१२३। तुवोवा। मू५नोई्हायि॥(२) इन्द्रम्।
३२ ४र ५ १ १ ३र
इद्वा३। रीवहताः अप्रतिधृष्टशवसा२३म्। आर्षी
र २ ४ १ २ ४र
णाॅसू३१२३। ष्टुती५रूपा। याज्ञस्वा३१२३। मानो
५ ५
वा। षा५णोई्हायि(३)॥ ४ † ॥ [३] २३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य

सप्तमः खण्डः॥ ७ ‡॥

---

* ऊ० गा० २२प्र० २ अ० १८सा०।

† ऊ० गा० २३प्र० १ अ० ४सा०।

‡ 'द्वादशाहस्य पञ्चममहः परिसमाप्तम्'—इति वि०।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ६ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-
प्रकाशे उत्तराग्रन्थे षष्ठोऽध्यायः* ॥

---



* 'तृतीयः प्रपाठकः परिसमाप्तः'—इति वि० मूलग्रन्थसम्मतस्य ।